# मालतीमाधवं

नाम

प्रकरणम् ।

महाकविभवभूतिविरचितम् ।

श्रीजगद्धरविरचितया टीकया

समन्वितम् ।

श्रीभुवनचन्द्रवसाकेन

संशोधितम् ।

कलिकाताराजधान्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

सन १२८२ ।

# मालतीमाधवं

नाम

प्रकरणम् ।

महाकविभवभूतिविरचितम् ।

---

श्रीजगद्धरविरचितया टीकया

समन्वितम् ।

---

श्रीभुवनचन्द्रवसाकेन

संशोधितम् ।

---

कलिकाताराजधान्यां

सरस्वतीयन्त्रे

मुद्रितम् ।

---

सन १२८३ ।

# मालतीमाधवं

नाम

प्रकरणम् ।

---

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।

---

(क) चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो भास्वज्जटापल्लवो
हृष्यद्धारधरेन्द्रमूकमणिभिर्दांस्तमञ्जुशाखालयः ।
स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रवत्-
पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥

नत्वा गुरून् गुणगुरूनवलोक्य टीकां
विश्वादिकोशभरतश्रुतिशब्दविद्याम् ।
छन्दांसलङ्करणमर्थगतिं विचिन्त्य
श्रीमान् जगद्धरकृती वितनोति टीकाम् ॥

श्रीकण्ठकण्ठविलुठल्लटुनाटकेऽस्मिन्
टीका मयाल्पमतिनापि वितन्यते यत् ।
हासाय दुर्जनगणस्य भवेन्न चैत-
दुच्चैः पदं यदभिकाङ्क्षति सर्व एव ॥

इह तावदष्टपदां नान्दीं विदधान एव कविरप्रत्यूहमीहित-सिद्धिमनुरुध्य प्रचण्डचण्डीपतेरकाण्डताण्डवाडम्बरेण लम्बोदरोत्-कीर्त्तनरूपं मङ्गलं प्रकरणादौ निबध्नाति । सानन्दमित्यादि । वैनायक्यो वदनविधुतयश्चिरं वः पान्तु गजाननाननचालनानि युष्मान् मङ्कारं

गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणेः

---

रक्षन्त्वित्यर्थः इति श्रोतॄन् सामाजिकान् कविराशास्ते । वदनविधूनने कारणमाह । फणिपतौ वासुकिनागे नासाग्ररन्ध्रं नासिकाग्रविवरं सानन्दं विशति सति । नासात्र विनायकस्यैव । तत्तस्य झटित्यपररन्ध्रप्राप्त्या जीवनप्रत्याशयानन्द इति भावः । अत एव प्रवेशानन्तरमानन्द इति कथं क्रियाविशेषणमिति दोषानवकाशः । अपररन्ध्रस्य शीघ्रं प्राप्त्यैवानन्दातिशयात् । यथा भीतस्य शीघ्रं वनादिप्राप्तौ हर्षः । यद्वा, सानन्दं यथा तथा पान्त्विति योज्यम् । यद्वा, सानन्दमित्याहृतविशेषणम् । सापेक्षत्वेऽपि गमकत्वात् समासः । क्रियाविशेषणत्वादेव सानन्दमित्यत्र कर्मत्वैकत्वक्लीबत्वानि । इह नासारन्ध्रमिति वक्तव्येऽग्रग्रहणं तत्तस्य झटिति प्राप्त्या हर्षसूचनाय । यद्वा, रन्ध्रप्रवेशेऽग्रप्रवेशस्यार्थसिद्धस्यापि शब्देन कीर्त्तनादुक्तिपोष एवायमलङ्कारः । यदाह दण्डी, उक्तिपोषः । क्वचिदाक्षेपलब्धस्य साक्षाच्छब्देन कीर्त्तनात् । इति । कीदृशे फणिपतौ । भोगः फणा कायो वा तस्य सङ्कोचो विकाशस्तं भजतीति भोगसङ्कोचभाक् तस्मिन् । विवरानुसरणे भोगिभोगसङ्कोच इति जातिनियमः । तदनेन महाकायस्य नासाग्रप्रवेशयोग्यतोक्ता । प्रवेशे हेतुमाह । शूलपाणेः शिवस्य ताण्डवे नृत्ये सति नन्दी गणभेदस्तस्य हस्तेनाहतस्य ताडितस्य मुरजस्य मर्दलस्य रवेण शब्देनाहूतो यः कौमारबर्ही कार्त्तिकेयमयूरस्तस्य त्रासाद् भयात् । अत्र नन्दिहस्ताहतत्वेन मुरजस्य गभीरताररवशालिता दर्शिता मयूरस्य भुजङ्गभोजित्वेन त्रासकत्वम् । विधुतयः कीदृश्यः । गण्ड उड्डीनाभिरूर्ध्वं गताभिरलिमालाभिर्भ्रमरपङ्क्तिभिर्मुखरिताः शब्दीकृताः ककुभो दिशो याभिस्ताः । तथा सीत्कारो भीतकरिणां त्रासध्वनिस्तत्सहिताः । विनायकस्य गजाननत्वात् । इह साहित्यमात्रं मत्वर्थः । तथा च भयान्मुखे विधूननसीत्कारौ युगपद्वृत्ताविति भावः । जातिरलङ्कारः । विधुतेरचेतनत्वेऽपि देवतानुभावादेव रक्षणकर्तृत्वम् । अत एव

वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥(क)

---

तस्यापि तदुत्कर्षत्वम् । इह गम्भीरमुरजरवश्रुतिहृष्टमयूरभयेन
फणिनां विवरानुसरणं जलदकालचिह्नम् । अत एव जलदकाल-
मनुभाव्यैवैतत्प्रकरणवृत्तान्त इति ध्वनितम् । तथा च वक्ष्यति ।
धाराक्लिन्नवसुन्धराम्बुरभय इत्यादि । मुरजाघातेन वाद्यमखिलमालया
दिशां मुखरीकरणेन गीतं वदनविधूननेन नृत्यं सूचयता तौर्य्यत्रिक-
मुक्तम् । चीत्कारेण नृत्यतः प्रव्यक्तपाठोऽपि सूचितः । कुमारः
क्रौञ्चदारण इत्यमरः । कुमारस्येदं कौमारम् । तस्येदमित्यण् ।
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः । नासा नाशा
तु नासिकेति शब्दभेदः । भोगः सुखे स्त्र्यादिरतावहेश्च फणकाययो-
रिति विश्वः । उड्डीन इति उत्पूर्वाड्डीङ्धातोः क्तः । श्वीदितश्चेति
चकारान्नत्वम् । प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रिया इत्यमरः ।
दिशस्तु ककुभः काष्ठा इति च । ताण्डवं नटनं नाट्यं लास्यं नृत्यं
च नर्त्तनमिति च । विनायको विघ्नराजद्वैमातुरगणाधिपा इति
च । विनायकस्येदं वैनायक्यम् । तस्येदमित्यण् । टिड्ढाणञिति
ङीप् । विधुतिरिति विपूर्वाद्धुञः स्त्रियां क्तिन् । नाटकादौ प्रवृत्तिः
प्रेक्षावतां सप्रयोजना । यदाह भरतः । न तज्ज्ञानं न तच्छिल्पं
न सा विद्या न ताः कलाः । नासौ नयो न तत् कर्म नाटके यन्न
दृश्यते ॥ नाटके विघ्नविघातायादौ नान्दी कार्य्या । यदाह भरतः ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्त्तव्या नान्दी
विघ्नप्रशान्तये ॥ नान्दीलक्षणं च भरते । देवद्विजनृपादीनामाशीर्वचन-
पूर्विका । नान्दी कार्य्या बुधैर्यत्नान्नमस्कारेण संयुता ॥ गङ्गा नाग-
पतिः सोमः सुधानन्दो जयाशिषः । एभिर्नामपदैः कार्य्या नान्दी
कविभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसंकीर्त्तनान्विता । आशी-
र्वादपरा नान्दी योज्येयं मङ्गलान्विता ॥ काचिद्द्वादशपदा नान्दी
काचिदष्टपदा स्मृता । सूत्रधारः पठेदेनां मध्यमं स्वरमास्थितः ॥
चन्द्रसंकीर्त्तनं यत्र तदधीनो रसोत्तमः । प्रीते चन्द्रमसि स्फीता रस-

अपि च । चूड़ापीड़कपालसंकुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ।
पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ (ख)

---

श्रीरिति वार्त्तिकः ॥ तत्र केचन पदं विभक्त्यन्तमास्थिषत । केचित्त्विदं पद्यस्य भागमूचिरे । तदिह द्वितीयपक्षनिक्षेपेण पद्यद्वयेनाष्टपदा नान्दीति ।

(ख) बहुविघ्नशङ्कया तन्नाशाय पुनर्मङ्गलमाचरन्नष्टपदां नान्दीं निर्वाहयति । चूड़ापीड़ेत्यादि । भूतेशस्य हरस्य जटास्त्वां सभाप्रधानं पान्तु । कीदृश्यः । चूड़ायां शिखायां य आपीड़स्तिर्यङ्मुण्डमाला तस्याः कपालैः शुष्कशिरोऽस्थिपिण्डैः संकुलं व्याप्तमत एव गलन्मन्दाकिनीवारि गङ्गाजलं यासु ताः । माला चेह कपालानामेव । यद्वा । येषां कपालानि तेषामन्यैर्जङ्घाजान्वाद्यस्थिभिराभरणार्थं तिर्यङ्मालात्वसम्बद्धानि कपालानीत्यर्थः । तथा विद्युत्प्रायं विद्युन्निभं यल्ललाटलोचनपुटं ललाटस्थनेत्रसंपुटं तत्तेजसा विमिश्रा मिलिता त्विट् प्रभा यासां ताः । अत्र पुटमध्यस्थस्य समस्तनेत्रभागस्य तेजोमयता पुटपदेनोक्ता । तथाकठोरया कोमलयासंपूर्णया वा केतकशिखया केतकीकुसुमाग्रेण संदिग्धः संशयितो मुग्धो रम्यो बालो वेन्दुर्यासु ताः । हरशिरसि किं केतकशिखेयमित्यनौचिती । तदयं संशयोऽप्यनौचित्यमूलक एवेति भावः । तथा भुजङ्गाः सर्पा एव वल्लयो लतास्ता एव वलयाः मण्डलाकारेण स्थिताः स्रजः पुष्पमालास्ताभिर्नद्धो बद्धो जूटो जूलको निबद्धस्तज ऊर्ध्वभागो यासु ताः । तदनेन जटाजूटस्थानवरतस्थानकपिशस्यापि भुजङ्गनद्धतया तिरोहितरूपत्वेनातिश्यामत्वेन मेघोदयमत एव सर्पविहरणसूचनं गङ्गाजलगलनेन वर्षणं कपालमालया बलाकावलिं ललाटनेत्रत्विषा विद्युद्द्योतं शिशुशशिना च केतकशिखावत्त्वं दर्शयता मदनमदोद्दीपनसुदिर-

नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण । (ग)

---

मेदुरघनसमयसूचनेन शृङ्गाररसशालितायस्य प्रकरणस्य कटाक्षिता । अचेतनाया जटाया रसकत्वं देवतानुभावादवधेयम् । वल्लिवलयस्रगित्यत्र रूपकनामालङ्कारः । यत्र मिथोऽपेक्षा तत्र अपिचेति प्रयुज्यत इति व्युत्पत्तिः ।

(ग) नान्द्यन्तेति । उक्तलक्षणं नाटकाद्यं पद्यं नान्दी । आशीर्योगादिना नन्दयतीति नन्दः । पचाद्यच् । नन्द एव नान्दः । प्रज्ञादित्वादण्प्रत्ययः । टिड्ढाणञिति ङीप् । नान्दी । सूत्रधारलक्षणं च भरते । नाट्यस्य यदनुष्ठानं तत् सूत्रं स्यात् सबीजकम् । रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः ॥ इति । ननु नान्द्यन्ते सूत्रधार इत्यसङ्गतम् । न हि नान्दीपाठानन्तरं सूत्रधारो रङ्गभूमिं प्रविशति । किन्तु प्रविश्य पठति । तत्रान्येनैव पठनीया । सूत्रधारपठनीयत्वेनैव नान्द्या उक्तत्वात् । सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः । इति वचनात् । उच्यते । नान्दीं पठित्वा सूत्रधारः प्रविशति पठति वा । नान्द्यन्ते सूत्रधारस्यैव श्रुतत्वेनेयमपि तेनैव पठनीया । प्रथमं सूत्रधारः प्रविशतीति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानात् । यद्वा । नान्दी तावद्रङ्गप्रवेशानन्तरं सूत्रधारेणैव पठनीया । नान्द्यन्ते सूत्रधार इति सूत्रधारसाम्यात् स्थापके प्रयोगः । यदाह भरतः । नान्दीं प्रयुज्य निष्क्रामेत् सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात् सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ अत एव केचिन्नान्द्यन्ते स्थापक इत्येवं पठन्ति । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । यदाह भरतः । रङ्गप्रसादमधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भेदैः प्ररोचनायुक्तैर्वीथिप्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत् तदामुखम् ॥ अत एवाह्वानमिति ।

पुरतोऽवलोक्य । अये उदितभूयिष्ठ एष भगवानशेष-भुवनद्वीपदीपकस्तपनस्तमुपतिष्ठे । (घ)

प्रणम्य । कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।

---

अयमाशयः । पूर्वोक्तान्यङ्गानि न भवन्ति किन्तु परिषदोऽभिमुखीकरणानि । सा चेत् स्वयमेव कृतावधाना नवनाटकविलोकनोत्का च तदन्यत् प्रयुज्यमानमपि रसभङ्गाय परं भवतीति कृतं तत्प्रणयनेन । अन्यथा सभाया रसविच्छेदो भवेदिति निष्फलतेति ।

(घ) अये इति निपातो व्यासङ्गादिनानाकलितस्याकलनेन संभ्रमवाचकः । अकस्मात् सूर्योदयाकलनात् । ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् । देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्त्तते । इति भरतमतमनुसृत्य माङ्गलिकतया रङ्गद्वारपाठ्यं श्लोकमुत्थापयति । उदितेति । उदितं भूयिष्ठं बहु यस्य सः । अस्य बहुतरभाग उदितः । किञ्चिदेवोदयायावशिष्यत इति भावः । अत्र नेक्षेतादित्यमुद्यन्तमिति निषेधादुदितभूयिष्ठ इत्युक्तम् । भगं ज्ञानादिसम्पत्तिस्तद्वान् भगवानित्यर्थः । उपतिष्ठे श्लोकेनेति शेषः ।

(ङ) तदेवाह । कल्याणानामित्यादि । भो विश्वमूर्त्ते ! सर्वमयदेव ! दीव्यतीति देवो द्युतिमांस्तादृश हे । कल्याणानां महसां माङ्गलिकानां तेजसां त्वं भाजनं पात्रमसि । अतः प्रसीद प्रसन्नो भव । मयि मद्विषये । धुर्यां न्यस्तधुरन्धरां लक्ष्मीं सम्पत्तिमपि भृशमतिशयेन धेह्यारोपय । अथशब्दः समुच्चयार्थः । धेहीति स्थाने देहीति पाठे ददस्वेत्यर्थः । तथा हे जगन्नाथ ! भुवनपते ! यद् यत्पापमारब्धविरुद्धं नमस्य मेऽस्ति तत्तत जहि नाशय । यद्यदिति वीप्सया कायिकवाचिकमानसिकरूपं पापत्रयमुक्तम् । वीप्सा तु न तच्छब्दे कृता वीप्सितस्यैव तच्छब्देन परामर्शात् । तथैव व्युत्पत्तेः । क्वचिद् यत्पद इव तत्पदेऽपि वीप्सा । यथा यां यां प्रियां प्रैक्षतेत्यादौ ।

यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय ॥ (ङ)

नेपथ्याभिमुखमवलोक्य । मारिष सुविहितानि रङ्गमङ्गलानि संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः । आदिष्टश्चास्मि विद्वज्जनपरिषदा यथा केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति । तत्किमित्युदासते भरताः । (च)

---

भद्रमद्रोयं भद्रमभीष्टम् । वितर देहि । यद्वा । भद्रं भद्रमतिशयेनाभीष्टं देहीत्यर्थः । किमर्थम् । मङ्गलायाशंसनीयकर्मार्थम् । तादर्थ्ये चतुर्थी । मङ्गलाय मङ्गलं कर्तुमिति वा । कीदृशाय भूयसे प्रचुराय । तदिह हरिहरादीनपास्य भानोरुपस्थानेन प्रकरणनायकस्य ब्राह्मण्यं सूचितम् । अत एव देहीति ब्राह्मणोचिता प्रार्थना । सर्वचुद्रसत्वक्षयहेतोः प्रभातस्यादरेण प्रकरणकथाबीजसूचनमपि । तथाहि, यद्यदिति वीप्सया मार्दूलाघोरघण्टविमर्दसूचनम् । पापप्रतिघातानन्तरं च भद्रं भद्रमिति वीप्सया स्वस्य मालतीलाभेन मकरन्दस्य च मदयन्तिकालाभेनेष्टसिद्धिः सूचिता । भूयोमङ्गलपदेन कपालकुण्डलापहृतमालतीलाभो विद्यालाभादिकं च सूचितम् ।

(च) नेपथ्यं रङ्गभूमिः । नेपथ्यं रङ्गभूमौ स्यादिति विश्वः । मान्यो भावेति वक्तव्यः किञ्चिन्न्यूनस्तु मारिष इत्यमरः । मारिष एव मर्षणान्मार्षः । सूत्रधारोक्तिनिर्वाहसहिष्णुरित्यर्थः । सुविहितानि भक्तिश्रद्धाकृतानि । रङ्गो नृत्यं तदर्थं मङ्गलानि लोकपालपूजादीनि । रङ्गो नृत्ये रणचितावपि विश्वः । संनिपातितः सर्वत आगत्यैकत्र मिलितः । कालप्रियनाथस्य तद्देशदेवभेदस्य । यात्राप्रसङ्गेनेति नृत्यकालसूचनम् । इदं ध्वजमहः श्रीमन्महेन्द्रस्य प्रवर्तते । इत्यभिधानात् । वास्तव्यो वासी महाजनसमाजो विद्वद्गोष्ठी । उदासत उदासीना भवन्ति । भरता नटाः ।

प्रविश्य पारिपार्श्विकः। भाव! परिषन्निर्दिष्टगुणं प्रबन्धं नाधिगच्छामः। (छ)

सूत्र। मारिष! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्यविदग्धमिश्रा भगवन्तो भूमिदेवाश्च। (ज)

नटः। भूम्ना रसानां गहनाः प्रयोगाः
सौहार्दहृद्यानि विचेष्टितानि।

---

(छ) पारिपार्श्विकलक्षणं भरते। सूत्रधारस्य पार्श्वे यः प्रवचन् कुरुतेऽर्थनाम्। काव्यार्थसूचनालापं स भवेत् पारिपार्श्विकः॥ इति। भाव! मान्यनट! परिषदा प्रेक्षकेण निर्दिष्टो गुणो यत्र तं प्रबन्धं प्रकरणम्। प्रेक्षकस्तु। यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च। क्रुद्धः क्रुद्धे भये भीतः स नाट्ये प्रेक्षकः स्मृतः॥ इति भरतोक्तः।

(ज) पूजावाक्यगर्भं प्रश्नमाह। कतम इति। गोत्रं नाम च बध्नीयात् पूजावाक्यं च सर्वतः॥ इति भरतः। कतमे कियन्त इत्यर्थः। आर्य्याः सुकुलादिसम्पन्नाः। यदाह भरतः। कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता। अद्रोह इति येष्वेतत्तानार्य्यान् संप्रचक्षते॥ विदग्धाश्चतुःषष्टिकलावेदिनः। मिश्रा वेदान्तवेदिनः। भगवन्तः स्मृतिधराः। यदाह, देवाश्च लिङ्गिनश्चैव नाना स्मृतिधराश्च ये। भगवानिति ते वाच्याः पुरुषाः स्त्रिय एव च॥ इति। यद्वा। आराद्याता दूरं गता ग्राम्यत्वादिदोषेभ्य इत्यार्य्याः। विदग्धाः काव्यरसप्रवणमनसः। मिश्राः पूज्याः। पूज्ये मिश्रपदं नित्यं बहुवचनान्तम्। मरीचिमिश्रैर्दक्षेणेति विष्णुपुराणात्। भगवन्तो ज्ञानादिसम्पन्नाः। भूमिदेवा ब्राह्मणाः। इह तत्रोद्घातकरूपा प्रस्तावना। यदाह भरतः। सुप्रतीतं विस्मृतं वा यत्र कार्य्यं प्रकाश्यते। तदुद्घातकमित्याहुः प्रश्नोत्तरमनोहरम्॥ इति।

(झ) प्रबन्धे गुणानाह। भूम्नेति। यत्र प्रबन्धे रसानां शृङ्गारादीनां भूम्ना प्राचुर्य्येण गहना गम्भीराः सहृदयहृदयमात्रग्राह्याः

औद्धत्यमायोजितकामसूत्रं
चित्राः कथा वाचि विदग्धता च ॥ (झ)

सूत्र। स्मृतं तर्हि।

नटः। भाव! किमिव। (ञ)

सूत्र। अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम्। तत्र केचित् तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिन उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति स्म। (ट)

---

प्रयोगाः सन्ति। एतेनास्य रसमयत्वमुक्तम्। यत्र प्रबन्धे विचेष्टितानि मालतीमाधवादेः परस्परव्यापाराः सौहार्देन प्रेम्णा हृद्यानि मनोज्ञानि। यत्रौद्धत्यं नायकनायिकासखीभृत्यादिगुणमाहात्म्यमस्ति। कीदृशम्। आयोजितं विहितं कामसूत्रमनङ्गप्रयोगो यत्र तत्। यद्वा। औद्धत्यं निजोत्कर्षपुरःसरमन्यावज्ञाविष्करणम्। तच्चायोजितस्य समन्तात् कार्याभिमुखीकृतस्य कामस्य मन्मथेच्छायाः सूत्रं सूचकम्। सूत्रं सम्भोगः पटारम्भकतन्तुर्वा। अनेनात्र कामोद्दीपकतयौद्धत्यं गुणाय। स्वाभाविकस्य तस्य भूषणत्वमिति दर्शितम्। यत्र चित्राश्चर्यजनिका कथा कल्पितकथत्वात्। रसमयत्वाच्चाश्चर्यम्। वाचि वचने विदग्धता परिपाको निर्दोषत्वं वक्रता च यत्र। एतेनान्यनाटकादस्याधिकगुणवत्त्वमुक्तम्। तं प्रबन्धं नर्त्तितुमादिशन्ति। मिश्रा इति शेषः।

(ञ) किमिव किं स्मृतमित्यर्थः।

(ट) अधुना। स्पृशति रोदसी वास्य यावत् कीर्त्तिरनश्वरी। तावत् किलायमध्यास्ते सुकृतं वैबुधं पदम्॥ इति निजनामादिकथनफलमनुसन्धाय तदाचरते। अस्तीत्यादि। दक्षिणदेशस्य शृङ्गाररसवशतया तद्देशजत्वेन स्वस्य तदुभयरसवर्णनशक्तिरुक्ता। विदर्भेष्वित्यनेन वैदर्भीरीतिपरिचयचातुरी दर्शिता। पद्मनगरं पद्मावती। नाम प्रसिद्धौ।

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते।
इष्टाय पूर्ताय च कर्मणेऽर्थान्दारानपत्याय तपोऽर्थमायुः॥(ठ)

---

न तु नामपदमभिधानार्थम्। तदा प्रकृत्यादित्वात्तृतीया स्यादित्यवधेयम्। तैत्तिरीयिणस्तैत्तिरीयकनामशाखाविशेषपाठिन इत्यर्थः। काश्यपाः काश्यपगोत्राः। चरणगुरव इति चरणशब्दः शाखाविशेषाध्ययनपरैकताप्रपन्नजनसंघवाची। तत्र समूहे ते गुरवः क्रियां कृत्वा वेदाध्यापयितारः। स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति॥ इति स्मृतेः। यद्वा। चरणैः कलापादिभिर्गुरवो महान्तः। पङ्क्तिपावनाः पङ्क्तौ भोजनादिगोष्ठ्यां पावना अग्रभोजिनः पवित्रा वेत्यर्थः। यद्वा। यजुषां पारगो यस्तु साम्नां यश्चापि पारगः। अथर्वशिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः॥ इति लक्षिताः। पञ्चाग्नयो दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यरूपाग्निपञ्चकोपासकाः। धृतव्रताश्चान्द्रायणादिव्रतयोगिनः। सोमपीथिनः सोमो लताविशेषो द्रुतशेषो वा तत्पायिनः। अनेन सोमयागयाजित्वमुक्तम्। उम्बरनामानो उम्बरइत्युत्कर्षसूचकं कुलनाम येषां ते। यद्वा। उम्बरं प्रसिद्धं नाम येषां ते। प्रसिद्धौ उम्बरं विदुरिति विश्वः। ब्रह्मवादिनो वेदज्ञा इत्यर्थः।

(ठ) त इत्यादि। कथितरूपाः। श्रोत्रियाश्छन्दोऽध्येतारः। जन्मादिसम्पन्ना ब्राह्मणा वा। भूरि प्रचुरम्। शाश्वतं सार्वकालिकम्। श्रुतमध्ययनमाद्रियन्ते श्रद्दधति। यद्वा। शाश्वतं नित्यागमं वेदाख्यमाद्रियन्ते। कीदृशम्। भूरि श्रुतं बहुभ्यो बहुधा बहुभिः समभ्यस्तम्। किमर्थम्। धर्मस्य कर्त्तव्याकर्त्तव्यरूपस्य विनिश्चयाय निर्णयाय। वैदिककर्मणि निर्णयादेव प्रवृत्तेरिति भावः। श्रोत्रियश्छन्दोऽधीत इति पाणिनिसूत्रम्। जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥ इति स्मृतिः। शाश्वतमित्यत्र कालाद्युञं बाधित्वा शाश्वते प्रतिषेध इति भाष्यवचनादण्। तथा तेऽर्थान्धनान्याद्रियन्ते। इष्टाय कर्मणे यागादिकार्य्यार्थम्। पूर्ताय कर्मणे खातादिकार्य्यार्थम्। यागादीनां

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसम्भवो भट्टश्रीकण्ठपदलाञ्छनो भवभूतिनामा जातूकर्णीपुत्रः कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान्। यत्र खल्वियं वाचो युक्तिः। (ङ)

---

धनसाध्यतया तेषां तदादरो न तु भोगायेति भावः। दारान् पत्नीरादृियन्ते। अपत्याय सन्तत्यर्थं न तु कामायेत्यर्थः। ते आयुर्जीवनमादृियन्ते। तपोऽर्थं तपश्चरणार्थं न तु व्यसनार्थम्। क्लेशबहुलं धर्म्यं कर्म तपः। तदनेन तेषां सर्वगुणवत्त्वं दर्शितम्। भूयिष्ठं भूयश्च भूरि वेत्यमरः। अथ क्रतुकर्मेष्टं पूर्त्तं खातादिकर्मणि। दाराः पुंभूम्नि च। विनिश्चयायेत्यादौ तादर्थ्ये चतुर्थी।

(ङ) अत्र कुले जात आमुष्यायणः। तत्रभवतः पूज्यस्य सुगृहीतं शोभनोच्चारणं बलिकर्णादिवन्मङ्गल्यं नाम यस्य। भट्टस्ततःशास्त्राभिज्ञः। पवित्रा पुण्या कीर्त्तिर्यस्य। तस्यात्मसम्भवः पुत्रः। श्रीः सरस्वती कण्ठे यस्य स श्रीकण्ठः। तद्वाचकं पदं लाञ्छनं चिह्नं यस्य सः। नाम्ना श्रीकण्ठः। प्रसिद्ध्या भवभूतिरित्यर्थः। श्रोर्वेशरचनाशोभाभारतीसरलद्रुष्विति मेदिनीकारः। जतूकर्णगोत्रप्रसूता जातूकर्णी तस्याः पुत्रः। निसर्गसौहृदेन साहजिकसौहार्देन। ननु हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्ध्या सौहार्दमिति स्यात्। उच्यते। हृदित्यादौ प्रतिपदोक्तस्य यङ्णादृदयस्य हृल्लेखेति हृदादेशस्यादिवृद्धिः। यद्वा। संज्ञापूर्वको विधिरनित्य इति वचनादुभयपदवृद्धेरनित्यत्वम्। यद्वा। सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातस्य सुहृच्छब्दस्यावयवो हृच्छब्दस्तदन्तोत्तरपदवृद्धिर्भवति। एवंप्रायगुणभूयसीं भूम्ना रत्नानामित्यादिप्रायैर्गुणैरुपचितामर्पितवान् प्रयोगतोऽर्थतश्च संक्रमितवान्। खलु प्रसिद्धौ वाक्यभूषायां वा। वाचो युक्तिर्वचनरचनम्। वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति षष्ठ्यलुक्।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ (ढ)

---

(ढ) सम्प्रति स्वकौशलबलेन सगर्वमाह । ये नामेत्यादि । इह तावत्त्रिविधाः पुरुषाः । केचिदज्ञा एव । केचिदद्वैतमतसग्नमनसः काव्यरसविरसाः । इतरे सहृदयहृदयामोदिकाव्यभव्यरसभररसिकाः । तत्राद्यान् प्रत्याह । ये केचिदज्ञा नोऽस्माकम् । इह प्रबन्धे । अवज्ञा-मवधीरणम् । प्रथयन्ति ख्यापयन्ति । नाम सम्भावनायां सम्भाव्यत इव न तु वास्तवमित्यर्थः । ते किमपि किञ्चिदल्पं जानन्ति । तान् प्रति ताँल्लक्षीकृत्य मम नैष यत्नः । न हि बधिरे गीयते । यद्वा । किंशब्द आक्षेपे । ते किं जानन्ति किंतु न जानन्तीत्यर्थः । द्वितीयान् प्रत्याह । ये नाम निश्चये वैषयिकसुखविमुखा मुमुक्षव इहावधीरणा-माचरन्ति ते किमपि वाङ्मनसागोचरं परं ब्रह्म जानन्ति । ते नम-स्यास्तान् प्रति मम नैष यत्नः । न हि सम्राजमधिकृत्य कौपीनं स्तूयत इति भावः । अन्यान् प्रत्याह । मम समानधर्मा तुल्यगुणः कोऽपि जन उत्पत्स्यते जन्मान्तरेऽस्ति विद्यते वा तं प्रत्येष यत्न इति भावः । इहाल्पत्वेन साधर्म्यमनौद्धत्याय । बहुत्वेन साधर्म्यं कद-र्यदुर्जनविवर्जनायेत्युभयत्र विवक्षा । अथेदानीमनुत्पन्नस्य कथमुत्पादो-ऽन्नानुपलब्धस्य वा कथमुपलम्भ इत्युभययोग्यतामाह । यतः कालोऽयं निरवधिर्विगतावसानः । विपुला महती च पृथ्वी भूमिः । तथा च तस्येदानीमनुत्पन्नस्य कालान्तर उत्पाद इहानुपलब्धस्य देशान्तर उप-लम्भश्च स्यादिति भावः । इह प्रथमार्धे बहुत्वेन प्रयोगो द्वितीयार्धे एकत्वेन प्रयोगश्च न दोषः । भिन्नवाक्यार्थत्वात् । एकवाक्यार्थत्वे तादृक्प्रयोगस्यायोग्यतया दोषत्वात् । तथैव व्युत्पत्तेरित्यवधेयम् । यद्वा । अवज्ञाप्रथमावसरेऽहङ्कारेणात्मनो गौरवाद्बहुत्वं निजसमता-वसरे चान्यात्मन्येकत्वम् । यद्वा । जात्यभिप्रायमेकवचनम् ।

अपि च। यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं न हि ततः कश्चिद्गुणो नाटके।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥ (८)

(८) अधुना निजगुणगरिमोपदर्शनेन निजग्रन्थे विदग्धादरमाह। यद्वेदेत्यादि। यत्र खल्वियं वाचो युक्तिरित्यवाप्यनुषज्यते। अद्वैतप्रतिपादको वेदभाग उपनिषत्तज्ज्ञानम्। योगः पातञ्जलशास्त्रम्। तयोरध्ययनज्ञानयोः कथनेन किम्। अपि तु न किमपीत्यर्थः। यतस्ततो वेदाध्ययनादेर्नाटके कश्चिद् गुणो नास्ति। तेषां नाटकेऽनुपयोगात्। तत इति ल्यब्लोपे पञ्चमी। तान् प्राप्य नाटके न कश्चिद् गुण इत्यर्थः। वयं सर्वमेव विज्ञोऽनङ्गतया पुनस्तदत्र न निबद्धमिति भावः। तर्हि त्र कवेर्वेदादिज्ञानज्ञापनं किमर्थमत आह। यदिति। वचसां यत्प्रौढत्वं वाक्यार्थे पदं पदार्थे वाक्यं तत्कृतिः। यथा न दैवीयं किंतु मानुषीत्यर्थे निमेषवती। चन्द्रवदित्यर्थे नयनसमुत्थं ज्योतिरत्रेरिति। यदाह दण्डी। पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिदा। प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥ इति। यच्च वचसामुदारता विकटत्वं यस्मिन् सति पदानि जनो न्त्यन्तीवेति मन्यते। यद्वा। उदारतालङ्कारादिदोषशून्यत्वम्। यद्वा। उदारता गुणभेदः। यदाह दण्डी। उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते। तदुदाराश्रयं तेन सनाथा काव्यपद्धतिः॥ इति। यच्चार्थतो गौरवमनर्घार्थता। यद्वा। स्वल्पं वचनमर्थसार्थप्रसरसमर्थमित्यर्थः। तद्यदि नाटकेऽस्ति ततस्तदेव पाण्डित्यवैदग्ध्ययोर्गमकं बोधकम्। पण्डितो वेदाध्ययनादिकुशलस्तस्य भावः पाण्डित्यम्। वैदग्ध्यं रसादियोगिप्रबन्धबन्धनकौशलम्। अनेन ग्रन्थे सर्वगुणवत्त्वमुक्तम्। तत्कर्तृत्वेनात्मनः सर्वप्रवीणमतित्वमप्युक्तम्। नाटक इति। ननु नाटक इत्ययुक्तम्। अस्य प्रकरणत्वात्। प्रकरणनाटकयोर्भेदात्। मैवम्। नटन्त्यस्मिन्विलास्य पत्नि स्वार्थे कानि नाटकमिति। तथा च नाटके नाट्य इत्यर्थात्।

अतो यदस्माकमर्पितं प्रियसुहृदा तत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतिर्मालतीमाधवं नाम तदेव तत्रभवतः कालप्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः। तत्सर्वैं कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्त्तन्ताम् ।

नटः । स्मृत्वा । एवं क्रियते युष्मदादेशः किं तु या यस्य युज्यते भूमिका तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः । सौगतजरत्परिव्राजिकायास्तु कामन्दक्याः प्रथमां भूमिकां भाव एवाधीते तदन्तेवासिन्यास्त्वहमवलोकितायाः । (त)

सूत्र । ततः किम् । (थ)

नटः । ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम् । (द)

---

(त) भूमिका व्याजप्रवेशः । यदाह भरतः । अन्यरूपैर्यदन्यस्य प्रवेशः स तु भूमिका ॥ इति । वर्गे भवा वर्ग्याः । नटमेलकस्था इत्यर्थः । सौगतस्य बौद्धस्य जरत्परिव्राजिका वृद्धा भिक्षुकी । एतादृशी दौत्ये प्रशस्ता । यदाह भरतः । विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका । प्रविश्य चाशु विश्वासं दूतीकार्यं च विन्दति ॥ इति । वृद्धत्वं चास्या रूपशून्यत्वसर्वदृश्यत्वप्रगल्भत्वसूचकम् । यदाह । वर्ज्जितं नार्थवन्तं वा रूपिणं वा तथातुरम् । दूतं वाप्यथ वा दूतीं न तु कुर्यात् कथञ्चन ॥ अन्तेवासिनी निकटशिष्या । अहं भूमिकामधीय इत्यन्वयः ।

(थ) ततः किमिति । एतावदुक्त्वा किमिति विरतोऽसीत्यर्थः ।

(द) प्रकरणलक्षणं भरते । आत्मशक्त्या कविर्यत्र कथां नायकमेव च । औत्पत्तिकं प्रकुरुते तद्धि प्रकरणं विदुः ॥ इदं च

शुद्धम् । यदाह भरतः । द्विधा प्रकरणं तत्तु शुद्धं संकीर्णमेव च । कुलस्त्रीरचितं शुद्धं संकीर्णं वेश्यया कृतम् ॥ अत्र नाटके यादृशो नियमस्तादृशः । नायकलक्षणं भरते । नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः । रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः । शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ विनयः शीलसंपत्तिर्मधुरः प्रियदर्शनः । त्यागः सर्वस्वदानं स्याद्दक्षः क्षिप्रकरो मतः ॥ प्रियंवदोऽनुत्कटवाक् सस्नेहो लोकरञ्जकः । मितप्रस्तुतवाग्वाग्मी नित्यकर्मरतः शुचिः ॥ ख्यातवंशो रूढवंशः षोडशात् त्रिंशको युवा । वाङ्मनःकर्मभिर्यश्च न चलः स स्थिरो मतः ॥ धृतिः सर्वेषु वा प्रीतिरुत्साहोऽग्लानिरेव च । स्मृतिः कालान्तरज्ञानं प्रज्ञा तीक्ष्णमतिर्मता ॥ कलाश्चात्र चतुःषष्टिर्मानश्चित्तसमुन्नतिः । शूरः संग्रामनिपुणो रूपवान् दृढ उच्यते ॥ अतिप्रतापस्तेजस्वी शास्त्रचक्षुस्त्रयीपरः । आत्मवत् सर्वभूतानि यः पश्यति स धार्मिकः ॥ इति । ननु मालतीवल्लभत्वं माधवस्य न योग्यं माधवेन वसन्तेन समं वर्णाकालीनाया मालत्या जातेः सम्बन्धाभावात् । मैवम् । अपूर्वमेव हि पदार्थवार्थं योगिनीप्रभावात् सम्पन्नमासाद्य सहृदयहृदयचमत्कारकारिणीं वैदग्धीमेव कविरयमुत्प्रेक्षितवानित्यदोषः । माधव इति नाम्ना शृङ्गारमयतोक्ता । वसन्तस्य शृङ्गारमयत्वात् । शृङ्गारमयत्वेन विष्णुदैवतत्वमपि कटाक्षितम् । यदाह भरतः । शृङ्गारो विष्णुदैवत इति । अत एव श्यामत्वमपि वक्ष्यति कुवलयदलश्यामोऽयमित्यादिना । श्यामो भवेत्तु शृङ्गार इत्यपि भरतः । अयममात्यत्वाद्धीरोदात्तो नायकः । यदाह भरतः । सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥ इति । मालती नायिका । तल्लक्षणं भरते । स्वान्यसाधारणस्त्रीति तद्गुणा नायिका त्रिधा । स्वकीया तत्र वक्तव्या मुग्धा मध्या प्रगल्भिका ॥ शीलार्जवादिसंयुक्ता कुटिला च पतिव्रता । लज्जावती चापरुषा निपुणा च प्रियंवदा ॥ साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । रूपकेषु च रक्तैव कर्तव्या प्रहसं विना ॥ अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथा

सूत्र । मकरन्दकलहंसप्रवेशावसरे तत् सुविहितम् ।

नटः । तेन हि तत्प्रयोगादेवात्रभवतः सामाजिकानुपास्महे ।

---

परा । रसे प्रधाने कर्तव्या नान्योढ़ा नाट्यवेदिभिः ॥ कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥ इति । अन्यदपि प्रसङ्गादुच्यते । तथा हि । नाटके वृत्तयः प्रोक्तास्तस्रो नाट्यवेदिभिः । भारती कैशिकी चैव सात्वत्यारभटी तथा ॥ तत्र शृङ्गारी कामकलावच्छिन्नो व्यापारः कैशिकी । विशोका सात्वती सत्वशौर्यत्यागार्जवादिभिः । मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः । भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तयः ॥ भारती शब्दवृत्तिः स्याद्रसे रौद्रे च युज्यते । शृङ्गारे कैशिकी वीरे सात्वत्यारटी पुनः ॥ एवमङ्गानि कार्याणि प्रधानस्याविरोधतः । आदौ विष्कम्भकं कुर्यादङ्कवाक्यार्थयुक्तितः ॥ अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् । यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा । यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥ प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरःसरः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ न चातिरसतो वस्तु दूरविच्छिन्नतां नयेत् । रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ॥ एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा ॥ अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् । शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोद्भुत इत्येवमष्टौ नाट्ये रसाः स्मृताः ॥ यद्यपि, अविकारस्थितिः शान्तः शान्तस्तु नवमो रसः । इत्यस्ति तथापि स न सर्वसम्मतो न वा नाट्यविषयश्चेति न पृथगुक्तः । स्थायिभावाभावात्तस्य नाट्यविषयता न सम्भवतीति दिक् । नायिका च मालत्युदात्तनिभृता । कुलस्त्रीत्वात् । यदाह भरतः । उदात्तनिभृता चैव भवेत्तु कुलजाङ्गना ॥ इति । वाणिका सखी ।

सूत्र । बाढ़म् । एषोऽस्मि कामन्दकी संवृत्तः । (ध)

नटः । अहमप्यवलोकिता । इति परिक्रम्य निष्क्रान्तौ । (न)

प्रस्तावना । (प)

ततः परिवृत्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः । (फ)

काम । वत्से अवलोकिते !

अव । आणवेदु भअवदी (१) ।

काम । अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवराता-त्मजयोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात् (ब) ।

वामाक्षिस्पन्दनं सूचयित्वा सहर्षम् ।

---

(१) आज्ञापयतु भगवती ।

---

(ध) बाढं दृढ़म् । कामन्दकीसंवृत्तः कामन्दकीरूपः । एतेन सूत्रधारेणैव काव्यार्थसूचनं कार्यमिति मतमनुमत्य कामन्दकीसूचनमपि सूत्रसूचनमेव वृत्तमिति दर्शितम् । यद्वाग्रे मकरन्देन मालतीरूपं कर्त्तव्यमिति पुंसः स्त्रीत्वापत्त्यात्र सूचितम् । कामन्दको नीतिग्रन्थ-भेदस्तं वेत्तीति कामन्दकी । तदधीत इत्यण् ङीप् च । अनया नामव्युत्पत्त्या नीतिवेदितावोधनेन प्रकृतसिद्धिहेतुतोक्ता ।

(न) तदन्तेवासिनी अवलोकिता दृष्टिरिति कार्यसिद्धिदृष्टेरपि कार्यसिद्धिहेतुतोक्ता । तदुक्तेजनिकेति । निष्क्रान्तौ सूत्रधारनटाविति शेषः ।

(प) प्रस्तावनेति निवृत्तेति शेषः । एतल्लक्षणं भरते । नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ आमुखं नाम तज्ज्ञेयं सैव प्रस्तावना मता ॥ इति ।

(फ) परिवृत्य पुनरागत्य । रक्तपट्टिका लोहितपट्टिका नेपथ्य-मलङ्कारो ययोस्ते ।

(ब) अधुना कामन्दकी समस्तप्रकरणोपयुक्तमुपक्षेपमाह । अपी-

विदृष्णतेव कल्याणमान्तरङ्गेन चक्षुषा ।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते ॥ (भ)

अव । महन्तो क्खु भअवदीए एसो चित्तविक्खेवो । अवरीअं पचरीअं जं दाणिं चीरचीवरपरिक्कदं पिण्डवादमेत्तपाणमत्तं भअवदीं ईदिसे पाआसे अमच्चभूरिवसू णिओएदि । तहिं उक्खण्डिदसंसारावग्गहो अप्पा तुम्हेहिं पि णिउज्जीअदि (२) । (म)

---

(२) महान् खलु भगवत्या एष चित्तविक्षेपः । आश्चर्यमाश्चर्यत्वादि । यदाह । काव्यार्थस्य समुत्पत्तिरुपक्षेपः स्मृतो बुधैः । इह तु मालतीमाधवयोर्विवाहनिर्वाहः काव्यार्थः । अपि नामेति । नाम सम्भावनायां तेन भवेदपीत्यर्थः । निश्चये वा नाम । तेन निश्चितमेव भवेदित्यर्थः । कल्याणिनोरित्यनेनाशंसनीयकुशलतयानुप्राह्यत्वमुक्तम् । भूरिवसुर्मालतीपिता । महाधनिककन्याया आवश्यकी वराकाङ्क्षेति नामतात्पर्यम् । देवरातो माधवपिता । देववद्राति दत्ते । रा दाने कर्तरि क्तः । देवरातः । तथा च जनो दातरि विवाह्यत इति महाधनिकवद्दान्यत्वप्रभुत्वादियोगिनोऽनुरूप एव प्रायः पुत्र इति वरे कन्याकाङ्क्षा सूचनं नामानुनयेन । एवं च योग्ययोर्योग्य एव सम्बन्ध इति भावः । पाणिग्रहो विवाहः ।

(भ) विदृष्णतेति । अपिरवधारणे तेन वामकेनैव वामेनैव चक्षुषा दाक्षिण्यमवलम्ब्यते कीदृशेन स्फुरता स्पन्दवतात एव कल्याणं विदृष्णता सूचयता । स्त्रीणां वामाङ्गस्फुरणस्य शुभसूचकत्वात् । आन्तरङ्गेनेव महोयचित्तवृत्तिज्ञेनेव । इवोत्प्रेक्षायाम् । उत्प्रेक्षा व्यज्यते यद्धेरिव शब्दोऽपि तादृशः ॥ इति दण्डी । अथवापिर्विरोधे वामेनापि प्रतिकूलेनापि दाक्षिण्यमानुकूल्यम् अवलम्ब्यत इति विरुद्धमिदम् । वामक इति स्वार्थे कन् ।

(म) अत्र खलु निश्चये । चित्तविक्षेपोऽसद्विषयाभिनिवेशः ।

काम। वत्से ! मा मैवं ब्रूहि। (य)

यन्मां विधेयविषये स भवान्नियुङ्क्ते
स्नेहस्य तत् फलमसौ प्रणयस्य सारः।
प्राणैस्तपोभिरथवाभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत् कृतं स्यात्॥ (र)

---

यदिदानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणयात्रां भगवतीमी-दृशे कार्यावसरेऽमात्यभूरिवसुर्नियोजयति। ततोत्खण्डितसंसारावग्रह-ग्रहात्मा युष्माभिरपि नियुज्यते।

---

चीरेण वस्त्रखण्डेन। चीवरं सौगतपरिव्राजकवासस्तदेव परिच्छदः परिकरो यस्यास्ताम्। पिण्डपातो नाम बौद्धानां भिक्षाभ्रमणेन भोजनं तन्मात्रेण प्राणयात्रा जीवनं यस्यास्ताम्। ईदृशे विवाह-कार्ये। इह पुरन्ध्रीणामेवाधिकारो न तु भवादृशीनामिति भावः। उत्खण्डित उन्मूलितः संसाररूपोऽवग्रहो मोक्षप्रतिबन्धो यत्र सः। यद्वा। उन्मूलितः संसाररूपोऽपकृष्टो ग्रहो यत्र सः।

(य) मामेति वीप्सात्यन्तनिषेधे।

(र) यन्मामित्यादि। सभवान् पूज्यो भूरिवसुर्यन्मां विधेयविषये नियोज्यगोचरे नियुङ्क्ते नियोजयति तत् स्नेहस्य प्रीतेः फलं स युष्माकं प्रेमपात्रमिति भावः। असौ नियोगः प्रणयस्य प्रश्रयस्य सार उत्कर्षो निर्यासो वा। यदि मदीयैः प्राणैरथवा मदीयै-स्तपोभिः सुहृदो मित्रस्याभिमतं वाञ्छितं कृत्यं कार्यं घटेत तदा तत् कार्यं कृतं स्यान्मत्प्राणादिभिरपि भवेदित्यर्थः। यद्वा। सुहृदोऽभि-मतसिद्धं यदि घटेत निष्पद्येत तदा मदीयैः प्राणैस्तपोभिर्वा तत् कृत्यं कृतं स्यादघटने तु सर्वमिदं व्यर्थमित्यर्थः। एतेनावश्यकर्तव्यतोक्ता। प्रणयः प्रेम्णि विश्वासे याच्ञाप्रश्रययोरपीति विश्वः।

अयि किं न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्य्यमासीत् । तदैव चास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा- वश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति । तदिदानीं विदर्भराजमन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षिकी- श्रवणाय कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम् । (ल)

अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च ।
अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥ (व)

अव । तदो किं त्ति मालदिं अमच्चो माहवस्स अप्पणा-

---

(ल) भूरिवसोः स्वीकारबीजमेवंविधप्रश्नयथोपपत्तिं चाह । किं नेत्यादि । न इति बहुवचनेन स्वभूरिवसुदेवरातानामुपादानम् । अस्मदिति । अस्माकं सौदामिन्याश्च प्रत्यक्षमित्यर्थः । अपत्यसम्बन्धो विवाहः । सौदामिनीसमक्षमित्यनेन तस्या देवरातबन्धुतया नवमाङ्के माधवप्राणत्राणकारणत्वमस्या नाम च सूचितम् । युक्तं चेदम् । नासूचितं विधेतात्रम् । इति भरतः । एवमन्यत्रापि सूचितस्यैव प्रवेशः । आन्वीक्षिकी न्यायशास्त्रम् । तत्र तर्कच्छलादिनिष्टङ्कनेन तदभ्यासान्माधवस्य चोरिकाविवाहे कौशलमुक्तम् । श्रवणं पाठः । कुण्डिनपुरं विदर्भेन्द्रराजधानी । प्रहिण्वता प्रस्थापयता । सुविहितं शोभनं कृतम् ।

(व) अपत्येत्यादि । देवरातेन पुत्रं प्रहिण्वतापत्यसम्बन्धविधिप्रतिज्ञा विवाहप्रतिज्ञा प्रियस्य सुहृदः प्रीतिमित्रस्य भूरिवसोः । सुहृदः शोभनचित्तस्य वा । स्मृतिं स्मरणं नीता प्रापिता । अलोकसामान्यगुणो लोकविलक्षणगुणः पुत्रः प्ररोचनार्थं प्रवृत्तिपाटवार्थं स्फुटीकृतश्च । प्ररोचनस्यैव सर्वकार्यसिद्ध्यङ्गत्वात् तदुपन्यासम् ।

ण पड़िवादेदि जेण चोरिआविवाहे भअवदिं तुवरावेदि (३)। (अ)

काम। तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन।
तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः॥ (ब)

अव। अचरिअं अचरिअं ण हु प्पमच्चो माहवस्स णामं पि जाणादि त्ति णिरवेक्खदाए लक्खीअदि (४)।

काम। संवरणं (स) हि तत्।
विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः।
तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः॥ (ह)

---

(३) ततः किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति येन चारिकाविवाहे भगवतीं त्वरयति।

(४) आश्चर्यमाश्चर्यं न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते।

---

(अ) अत्रामात्यो भूरिवसुः। माधवस्य कृत इति शेषः। प्रतिपादयति ददाति। चौरिकया विवाहस्य धर्मशास्त्रे निषेधादिति भावः।

(ब) तामित्यादि। नन्दननामा राज्ञोऽन्तःपुरसचिवो नृपद्वारा तां याचते। तत्र साक्षान्निषेधः कोपाय राज्ञः। अयं तु मद्द्वारा संयोजनात्मक उपायः शिवः परिणामसुरस इत्यर्थः। आर्याछन्दः। स्त्रात्नर्मसचिवः सोऽयं कुपितस्त्रीप्रसाधकः। नन्दयतीति नन्दनः। एतेनानन्दजनकत्वादन्तःपुरसचिवता युक्तेति नामतात्पर्यम्।

(स) संवरणं सङ्गोपनम्।

(ह) विशेषत इत्यादि। तेन भूरिवसुना तयोर्वत्सयोर्विशेषेण स्वमतिनिह्नवः कार्यो निजज्ञानगोपनं कर्तव्यम्। बालत्वाच्छिशुत्वेन

अपि च । अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।
श्रेयोऽप्यस्माकमेवं हि प्रतार्यौ राजनन्दनौ ॥ (च)

पश्य । वहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमभिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥ (क)

अव । मए वि तुम्हवअणादो तेण तेण वअणोवण्णासेण

---

प्रकाशिताभिप्राययोः । यथा तावपि प्रकृतं न जानीतस्तथा कृतं तेनेति भावः । युक्तं चाहुः । नादेशे नाकाले नापरिपक्वेन्द्रिये न गुणहीने । कथयति हि कथा स्वगता न तथास्य कथा भवति वन्ध्या ॥ इति नीतेः ।

(च) अनुरागेत्यादि । तयोरनुरागप्रवादः सर्वलोकविदितः अस्माकं श्रेयानस्तीति वा पाठः । श्रेयो श्रेयोलक्ष्मी । यत एवं अतो राजा नन्दनश्चोभौ वञ्चनीयौ तयोरन्योन्यानुरागादेव परिणयो वृत्तो न मया कारित इति वक्तव्यमेवेति भावः । सार्वलौकिक इत्यत्र सर्वलोकाट्ठञ् । अन्योन्यानुरागेण गान्धर्वविवाहोऽपि सूचितः ।

(क) वहिरित्यादि । विद्वान् सुबुद्धिरेकः श्रेष्ठोऽद्वितीयो वा सकलं जनं कपटैरभिसन्धाय वञ्चयित्वा स्वानर्थान् स्वप्रयोजनानि सम्पादयति । मौनमभाषणं भजते च । विधिनिषेधपरं वचो न वदतीत्यर्थः । अत एव तटस्थ उदासीन इवानभिव्यक्तव्यापार इत्यर्थः । कथम् । सर्वाकारेणेङ्गितादिना स्वभावसुन्दरं यथा भवति तथा वहिः प्रकटं व्यवहरन्नतिसूक्ष्माण्यपि पराभ्यूहस्थानानि परस्य तर्कस्थानानि स्थगयति पिदधाति । अपिर्भिन्नक्रमः । ष्ठभिसन्धिर्वञ्चनार्थ इति धातुसंग्रहः । केवलमेकयोरेक इति धरणिः ।

भूरिवसुमन्दिरासण्णराअमग्गेण माहवो संचारीअदि (५)।
(ख)

काम। कथितमेव नो मालतीधात्रेय्या लवङ्गिकया। (ग)

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।

---

(५) मयापि युष्मद्वचनात्तेन तेन वचनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः संचार्यते।

---

(ख) वचनोपन्यासो व्याजेन कार्योद्भेदः। राजमार्गेणेत्यनेन सर्वसाधारण्यान्माधवस्थानौद्धत्यमद्वितीयवेद्यता च सूचिता। सञ्चारणं च तद्दर्शनेन मालत्या अनुरागायेति भावः। अत्र कामन्दक्यावलोकितायामेवमनुक्तत्वात् कथं तव वचनादिति घटत इति न देश्यम्। प्राचीनैस्तपोभिरित्यादिना तदभिधानात्।

(ग) धात्रेय्युपमातृसुता। एतेन बाल्यात्प्रभृति सकलचेष्टावेदित्वं ध्वनितम्। तथा च लवङ्गिका मालतीगतं यत् कथयति तत्प्रमाणमेवेत्येवकारव्यङ्ग्यम्। अनेनास्याः सखीत्वमप्युक्तम्। यदाह भरतः। "दासी च धात्रेयी प्रतिवेश्या च शिल्पिका। बाला प्रव्रजिता चेति नायिकानां सखीजनः॥" इति। न इति बहुवचनेनात्मनि लवङ्गिकाहृदयजागरूकबहुमानेन वञ्चकतानिरासः सूचितः।

(घ) भूय इत्यादि। मालत्यङ्गकैस्ताम्यति खिद्यत इति कथितमेव लवङ्गिकयेत्यन्वयः। अङ्गकैरित्यत्राल्पार्थे कन्। अल्पता मृदुत्वेन। बहुवचनात् सर्वाङ्गमुक्तम्। तथा च मृदुभिः सर्वाङ्गैरित्यर्थः। कीदृशैः। तं माधवं दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य। गाढोत्कण्ठया दृढाकाङ्क्षया लुलितलुलितैरतिम्लानकान्तिभिः। ललितलुलितैरिति पाठे पूर्वं ललितैरस्थैरधुना लुलितैर्म्लानैरित्यर्थः। कीदृशं सविधनगरीरथ्यया मालतीभवननिकटराजमार्गेण भूयो भूयः पुनः पुनः पर्यटन्तं

साक्षात्कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥ (घ)

---

नन्दनम् । इह राजमार्गोपन्यासेन माधवस्य निःशङ्कः सञ्चारो मालत्याश्च तद्दर्शनेन परवितर्काभावः सूचितः । गमने पौनःपुन्येन दर्शनं प्रति दार्ढ्यमुक्तम् । दर्शने च पौनःपुन्येन तस्या उत्कण्ठातिशय उक्तः । यद्वा । प्रथमवीप्सया दर्शनं दृष्ट्वानुष्टत्या प्रथमं रम्यवस्तुचमत्कारेण तत उद्भिद्यमानानुरागनवाङ्कुरेण नेत्रप्रीतिर्युज्यते । द्वितीयवीप्सया सहचरीभिरप्यज्ञाता नयनप्रीतिरुक्ता । नगरीपदेन रथ्याया अनेककौतुकाधारतोक्ता । तथाचेतस्ततोऽनेककौतुकदर्शनतरलितत्वेन माधवस्य सम्यग्दर्शनसम्पादकनिकटायकसविधपदनिगर्व उक्तः । क्वा॰ प्रत्ययेन चानन्तरभाविविह्वलताया विषयान्तरसञ्चारेणापि व्यवधानस्यापादानादत्यन्तानुरागोद्भेदः सूचितः । कथमन्तःपुरस्था सा दृष्टेत्यत आह । भवनेति । भवनस्य प्रासादादेर्या वलभ्युपरिकुटी तस्यां तुङ्गमुच्चं यद्वातायनं गवाक्षस्तत्रस्था । तुङ्गतया यथाकाङ्क्षदर्शनमुक्तम् । वातायनेत्यनेन वातस्यायनं गमनं यत्रेति व्युत्पत्त्या घर्मादितापवती गभीरसमीरपरिशीलनार्थं यातीति प्ररोहेण निर्गलमस्या गमनं तत्रेति सूचितम् । यद्यपि सौधोपरिकुटीं वलभीं विदुरिति भवनपदमत्र गतार्थं तथाप्युक्तिपोषालंकारद्योतनार्थं भवनपदम् । यद्वा भवनरूपा वलभी मालतीवसतिः सौधोपरिकुटीत्यर्थः । एतेनास्या निजग्टहाद्वलभीगमनं किमर्थमित्यन्याशङ्कापरिहारो निर्गलं च तद्दर्शनं भवतीति ध्वनितम् । यथा रतिः कामकान्ता नवं दाहानन्तरमुत्पन्नं साक्षात्प्रत्यक्षं कामं दृष्ट्वाङ्कैस्ताम्यति तथेत्यर्थः । मालती रतिर्माधवस्य काम इति तयोर्बहुलोकसंकुलेऽपि पथि रागसागरोऽन्योन्यं वद्धय इति भावः । यद्वा कामोऽनङ्गतयाप्रत्यक्षो ह्यस्य । अतोत्प्रेक्षा विशिष्टस्यैव । साक्षात् प्रत्यक्षं नवं काममिवेत्यर्थः । ताम्यतीत्यनेनोद्वेग उक्तः । यदाह भरतः । चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च । तथाङ्गोपाङ्गचेष्टाभिरुद्वेगाभिनयो भवेत् ॥ इति ।

अव। बाढ़ं जदो ताए वि अत्तणो विणोदणिमित्तं माहवपड़िच्छन्दअं अहिलिहिदं तं लवङ्गिआए अज्ज मन्दारिआए हत्थे णिहिदं दाव (६)। (ङ)

काम। विचिन्त्य। सुविहितं लवङ्गिकया यतो माधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां कामयते तदनेन तीर्थेन घटेत तत्प्रतिच्छन्दकमुपोद्घातेन माधवान्तिकमुपेयादित्यभिप्रायः। (च)

अव। माहवो वि कोदूहलमुप्पादिअ मए पउत्तमअण-महूसवं मअरंदुज्जाणं अज्ज पभादे अणुप्पेसिदो तत्थ किल मालदी गमिस्सदि तदो अण्णोण्णदंसणं भोदु त्ति (७)। (छ)

---

(६) बाढ़ं, यतस्तयाप्यात्मनो विनोदनिमित्तं माधवप्रतिच्छन्दकमभिलिखितं तल्लवङ्गिकयाद्य मन्दारिकाया हस्ते निहितं तावत्।

(७) माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मकरन्दोद्यानमद्य प्रभातेऽनुप्रेषितस्तत्र किल मालती गमिष्यति ततोऽन्योन्यदर्शनं भवत्विति।

---

(ङ) बाढमतितरामनुरक्ता मालतीत्यर्थः। विनोदः क्रीड़ा हर्षो वा। प्रतिच्छन्दकं प्रतिरूपकम्। तावत्पदेन मन्दारिकाहस्तनिधानस्य प्रकृतकार्योपक्रमः सूचितः। अत एव कामन्दक्या सुविहितमित्युक्तम्।

(च) विहारः सौगतप्रव्राजिकानामालयः। तत्र व्यापृता दासी विहारदासी। एतेन प्रकरणनाट्यलक्षणम्। यदाह दण्डी। शकारः कुट्टिनी दासी धर्मशास्त्रबहिष्कृताः। विटचेटादयो नित्यं बाह्याः प्रकरणे मताः॥ तीर्थेन द्वारा। उपायेन वा। तीर्थमुपायद्वारमन्त्रिष्विति विश्वः। उपोद्घातेन प्रसङ्गेन। अभिप्रायस्तावदिति वादिन्यास्तवेति शेषः।

(छ) अव। कौतुकं तु कुतूहलमित्यमरः। मदनमहोत्सवेन

काम । साधु वत्से साधु । अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम् ।

अव । भअवदि ! सा सौदामिणी अहुणा समासादिद-अच्चरिअमन्तसिद्धिप्पहावा सिरीपव्वदे कावालिअव्वदं धारेदि (८) ।

काम । कुतः पुनरियं वार्त्ता ।

अव । अत्थि एत्थ णअरीए महामसाणप्पदेसे कराला णाम चामुण्डा (९) ।

काम । अस्ति या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः । (ज)

---

(८) भगवति ! सा सौदामिन्यधुना समासादिताश्चर्यमन्त्रसिद्धि-प्रभावा श्रीपर्वते कापालिकव्रतं धारयति ।

(९) अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा ।

---

वसन्तकालः सूचितः । तस्य च वैवाहिकत्वम् । यदाह । शरत्संग्राम-विषये विवाहे ज्येष्ठमाधवौ । इति । किल प्रसिद्धौ । इति हेतौ । अनुरागेण तत्र निर्जेयादेर्हेतुत्वम् । अन्योन्यदर्शनेनोभयानुरागे विवाहनिर्वाहः । प्रिये प्रीतिविषये कार्येऽभियोग आसङ्गः । अत्र कपालव्रतं महाव्रतम् । कुत इत्यादिना श्मशानाङ्कसूचनम् ।

(ज) किल प्रसिद्धौ । विविधा नानारूपा जीवा मानुषादय उपहारा बलयः प्रिया यस्याः सा । अनेन मानुषोपहारः सूचितः । आत्मनिरपेक्षं कर्म साहसं तेन वर्त्तन्ते ते साहसिकाः । प्रवादः प्रसिद्धिः । इह प्रियेत्यस्यानन्तरमिति पदं देयमन्यथा पूर्वापरानन्व-यात् । तथा च प्रियेत्यनेनाकारेण साहसिकानां प्रवाद इत्यर्थः । अत एव वाक्यार्थकर्मत्वाविवक्षायामितेरध्याहारः ।

अव । तहिं क्खु सिरीपव्वदादो आअदस्स रत्तिविहारिणो णादिदूरारणवासिणो साहअस्स मुण्डधारिणो अघोरघण्ट-णामधेअस्स अन्तेवासिणी महाप्पभावा कवालकुण्डला णाम अणुसंज्झं समाअच्छदि तदो इअं पउत्ती(१०) । (क)

काम । एवं सौदामिन्यां सम्भाव्यते ।

अव । अलं दाव एदिणा । भअवदि ! सो वि सहअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स बहिणिं मदअ-न्तिअं जइ समुव्वहदि (ख) तं पि माहवस्स दुदीअं पिअं किदं भोदि (११) ।

---

(१०) तत्र खलु श्रीपर्वतादागतस्य रात्रिविहारिणो नातिदूरा-रण्यवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसन्ध्यं समागच्छति तत इयं प्रवृत्तिः ।

(११) अलं तावदेतेन । भगवति ! सोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि माधवस्य द्वितीयं प्रियं कृतं भवति ।

---

(क) इह खलु प्रसिद्धौ । तस्माच्छ्मशानाद्याया नातिदूरेणात्यासन्ने वस्तुं शीलं यस्य तस्य । एतेन देवकुलस्य लोकसंकुलतया किञ्चिद्विप्रकृष्टं साधकसंस्थानमुक्तम् । साधकस्य योगिनः । मुण्डधारिणः कापा-लिकस्य । अघोरघण्टेति । कापालिकास्तु घण्टान्तनामानः समुदा-हृताः ॥ इति भरतः । अघोरोऽविकल्पकारीति नामव्युत्पत्तिः । अनु-सन्ध्यं सन्ध्यायाम् । प्रवृत्तिर्वार्त्ता । सर्वमघोरघण्टनाशनमाधवरक्षणा-दिकम् । अत्रैतेन कापालिकादेः कथनेनालं निष्फलमधुनानुपयोगात् ।

(ख) बालमिति । भावप्रधानं तेन बाल्यान्मित्रमित्यर्थः । समु-द्वहति विवहति ।

काम। नियुक्तैव तत्र मया मत्प्रियसखी बुद्धरक्षिता। (ञ)

अव। सुविहिदं भगवदीए। (१२)।

काम। विचिन्त्य। तदुत्तिष्ठ (ट) माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः।

उभे उत्तिष्ठतः।

काम। विचिन्त्य। अत्युदारप्रकृतिर्मालती तन्निपुणं निसृष्टार्थदूतीकल्पः (ठ) सूत्रयितव्यः। सर्वथा

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृतकृत्यः स च युवा।

---

(१२) सुविहितं भगवत्या।

---

(ञ) बुद्धरक्षितेत्यनेन भिक्षुकीत्वं सूचितम्। अत एव दौत्ये नियुक्ता।

(ट) उत्तिष्ठेत्यत्रोर्ध्वकर्मत्वान्न तङ्।

(ठ) अत्युदात्ता गभीरा प्रतिपन्नार्थसंवादिनी प्रकृतिर्यस्याः सा तथा। निसृष्टार्थेति। नायिकाया नायकस्य वा मनोरथं ज्ञात्वा स्वमत्या कार्यं साधयति सा निसृष्टार्था दूती तस्याः कल्पो व्यापारः प्रस्तावनीय इत्यर्थः। दूती च त्रिविधा। यदाह। निसृष्टार्था मितार्था च तथा शासनहारिका। सामर्थ्यात्पादतो हीना दूती तु त्रिविधा मता॥ इति।

(ड) शरदित्यादि। सा मालती तं माधवं नन्दयतु प्रीणातु। यथा शरच्चन्द्रिका कुमुदं नन्दयति। यथा चन्द्रिकाकुमुदयोर्नित्यं प्रीतिस्तथा तयोरप्यास्त्विति भावः। कीदृशम्। कान्तं रम्यम्। सुजातं शोभनजन्मानम्। शोभनता च गुणवत्त्वेन। यद्वा। कान्तमन्यस्त्री-भोगचिह्नशून्यम्। यदाह भरतः। अन्यस्त्रीभोगसंभूतं चिह्नं यस्य न

वरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञस्य भवतु ॥ (ड)

इति निष्क्रान्ते विष्कम्भकः । (ढ)

ततः प्रविशति गृहीतचित्रोपकरणः कलहंसः ।

कल । कहिं दाणिं तुलिदमअरद्धअरूवावलेवविब्भमावखित्तमालदीहिअअमाहप्पं णाहमाहवं पेक्खिस्सं । परिक्रम्य । परिस्सन्तोम्हि जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ मअरन्दणन्दणं णाहमाहवं पेक्खिस्सं (१२) । (ण)

इति प्रविश्योपविशति ।

---

(१२) क्वेदानीं तुलितमकरध्वजरूपावलेपविभ्रमावक्षिप्तमालतीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । परिश्रान्तोऽस्मि यावदस्मिन्नुद्याने मुहूर्त्तं विश्रम्य मकरन्दनन्दनं नाथमाधवं प्रेक्षिष्ये ।

---

विद्यते । देहे वाप्यधरे वापि स कान्त इति कीर्त्तितः ॥ सा कीदृशी । कल्याणी निरवद्या । स च युवा कल्याणो विवाहकल्याणयोगी संस्तां प्राप्य कृतकृत्यः कृतार्थो भवतु । युवत्वनेन कन्यायां मदनमदोद्दीपकतायोगित्वमुक्तम् । एवं सति विधातुः प्रयत्नः सफलो भवतु मनोहरस्य भूपनन्दनाविरोधेन सर्वविजयोऽस्त्वित्यर्थः । कीदृशः अन्योन्यं कामिनोः प्रगुणा अनुरूपा ये गुणास्तेषां निर्माणे कुशलोऽत एव वरीयान् श्रेष्ठः गरीयान् गुरुर्वा । यद्वा । अन्योन्यं प्रगुणा उत्कृष्टा ये गुणास्तेषां निर्माणे कुशलः ।

(ढ) निष्क्रान्ते कामन्दक्यवलोकिते । विष्कम्भक इति । वृत्तोऽपि स्वेच्छया प्राप्तः सम्बन्धेनोभयोरपि । विष्कम्भक स विज्ञेयो यस्तु काव्यार्थसूचकः ॥ विष्कम्भस्तु द्विधा सोऽयं शुद्धः सङ्कीर्ण एव च । शुद्धो मध्यमपात्रेण सङ्कीर्णो मध्यमाधमैः ॥ इति भरतः ।

(ण) उपकरणमुपढौकनम् । अत्र तुलितो मकरध्वजस्य काम-

ततः प्रविशति मकरन्दः ।

मक । कथितमवलोकितया मदनोद्यानं गतो माधव इति । भवतु तत्रैव गच्छामि । परिक्रम्यावलोक्य च । दिष्ट्यायं वयस्य इत एवाभिवर्त्तते (त) । निरूप्य । अस्य तु

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।

---

सावलेपो गर्वो येन रूपविभ्रमेण सौन्दर्यविलासेन तेनावच्छिन्नं तिरस्कृतं मालतीहृदयस्य माहात्म्यं गाम्भीर्यं येन तम् । अवलेपः स्मृतो गर्व इति शाश्वतः । मकरन्दस्य नन्दनं हर्षकम् । कलहंसो राजहंसः । स च शरदि विराजमानोऽपि योगिनीप्रभावाद्वसन्ते मिलित इति नामाभिप्रायः ।

(त) दिष्ट्येत्यव्ययं हर्षे । माधवस्य वसन्तस्य मकरन्दः पुष्परसः सहचरो युज्यत एव । इत एवात्रैव ।

(थ) इह शृङ्गारो द्विविधः । यदाह भरतः । सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः । सम्भोगोऽपि विप्रलम्भपूर्वक एव स्वदते । यदाह । न विना विप्रलम्भेन सम्भोगः पुष्टिमर्हति । कषायिते हि वस्त्रादौ भूयान् रागोऽभिजायते ॥ स च दशारम्भः । यदाह भरतः । अप्राप्तरतिभोगस्य नवस्त्रीरागजन्मनः । दश स्थानानि कामस्य कामसन्तर्विसर्पतः ॥ अभिलाषोऽत्र प्रथमे द्वितीये चिन्तनं तथा । अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्त्तनम् ॥ उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते । उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे ॥ नवमे जड़ता प्रोक्ता दशमे मरणं भवेत् ॥ इति । तदिहानुस्मृत्यवस्थो माधवो मकरन्देन कथ्यते । गमनमिति । अस्य गमनमलसं मन्दं न तु शरीरं हस्तादेराकुञ्चनप्रसारणात् । अन्तरान्तरा विलम्बस्यात्यन्तासक्तिवशाज्जायमानत्वाच्च । इदमनुस्मृतिचिह्नम् । यदाह । मुहुर्मुहुर्निःश्वसितैरधोमुखविचिन्तनैः । अन्येषामन्यकार्याणां कथितानुस्मृति-

भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ (थ)

ततः प्रविशति यथानिर्दिष्टो माधवः। (द)

---

यथा ॥ तथा यतो मामपि न पश्यति ततोऽन्तःकरणं क्वापि लग्नम्। तथा च चिन्तासन्ततिपरतया ध्यानावधानेन शून्या बाह्यार्थापाहिणी दृष्टिरस्य। यदाह। शून्या दृष्टिः स्मृता चिन्ताव्यामोहप्रणयादिषु। शून्यदृष्टिलक्षणमप्याह। निश्चला समतारा च ध्यानाद्बाह्यमलक्षती। तथा समपुटोपेता शून्या दृष्टिरुदाहृता॥ तथा सन्तापवतो ग्लानिः। सा च क्षीणकपोलतादिनोन्नीयते। अत उक्तं शरीरमसौ-ष्ठवं विकलम्। दुष्टजनालाभ भावनार्थमाह श्वसितमधिकम्। एतत् किं नु स्यात्। एतदलसगमनत्वादिकं रोगजं कामकृतं वेति वितर्क इत्यर्थः। रोगलिङ्गाभावादनङ्गलिङ्गसङ्गाच्च निश्चयमाह किमन्यदिति। अथवा पक्षान्तरे। इतः कामात् किमन्यत्नान्यदित्यर्थः। किंशब्दो निषेधे। अत पांशुक्रीड़नात् प्रभृत्यनुभूतमाधवशरीरे तत्तद्विकार-दर्शनात्सर्वविद्याविदो मकरन्दस्य परिच्छेदो युज्यत एवेति। निश्चय-लिङ्गमाह। भुवने कन्दर्पाज्ञा भ्रमति सर्वं जनमाक्रन्दति। विकर्तुं शीलमस्येति विकारि। पूर्वदशात्यागेन दशान्तरयोगो विकार-स्तद्योगि यौवनम्। अयं तु युवेत्यर्थः। अत्र भ्रमतिपदेनानवच्छिन्न-क्रियता तद्द्वारा सर्वकालता। भुवनपदेन सर्वदेशता। आज्ञापदेन युक्तिजिज्ञासां विना स्वीकारः। विकारिपदेन माधवाङ्गीकारिता च ध्वनिता। ललिताः सुन्दरा मधुराः परिभाव्यमानास्ते ते प्रसिद्धा भावा रमणीवदनविभ्रमादयो धीरतां धैर्यं क्षिपन्त्यपनयन्ति। तदनेन कामकृतमेतदुन्नीयत इति भावः। प्रकृतिमधुरा इत्यपि पाठः। तत्र प्रकृत्या स्वभावत एव मधुरा मनोहराः।

(द) माधवप्रवेश इह द्विपदिकया। यदाह। शोकविभ्रमयुक्ते तु व्याधिचिन्तासमाश्रिते। श्रुतवार्त्तादिवैकल्ये योज्या द्विपदिका बुधैः॥ इति।

माधवः स्वगतम् (ध) । तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे ।
लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ (न)
आश्चर्यम् । यदिह्स्मयास्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ (प)

---

(ध) स्वगतमिति । यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ॥ इति भरतः ।

(न) अनुस्मृतिमाह । तामित्यादि । तां नायिकामचिरमधुनैव विचिन्त्य कथं मम चेतः । कर्त्तृ । कथमपि महता कष्टेन व्यपवर्त्तते व्यावर्त्तते नागच्छति वा । तस्यां लग्नं तामेव धावतीत्यर्थः । किं कृत्वा । बालत्वेन कुलीनत्वेन च या लज्जा तामकाण्ड एवाप्रस्ताव एव विजित्य । रभसकाल एव हि लज्जाद्यभावप्रस्ताव इति भावः । विनयं मनोऽमलत्वालनोपदेशं दूरीकृत्य । महानायकतया साहजिकं धीरत्वमुन्मूल्य । कीदृशम् । मन्थरो मन्दो विवेक इतिकर्त्तव्यता यत्र तद् क्रियाविशेषणं वा । कीदृशम् । इन्दोश्चन्द्रात् सुन्दरं मुखं यस्यास्ताम् । वैयधिकरण्येऽपि गमकत्वात् समासः । इह तामित्यनुस्मृतिरिन्दुसुन्दरेति गुणकीर्त्तनं विभाव्येति चक्षुःप्रीतिः कथमपीत्युद्वेगो लज्जां विजित्येत्युन्मादो मन्थरविवेकमिति जडतेत्यनेकावस्थोक्ता ।

(प) यदित्यादि । तत्सन्निधौ यन्मदीयं हृदयं विस्मयेनाद्भुतरसेन स्तिमितं निश्चलम् । एतेन स्तम्भ उक्तः । अत एवास्तमितो नाशं प्रापितोऽन्यो भावो विस्मयातिरिक्तो धर्मो यत्र तत् । अनेन जडतोक्ता । यदाह । इष्टं वानिष्टं वा सुखदुःखे वा न वेत्ति यो

मक। सखे माधव इत इतः। (फ)

माध। परिक्रम्य। कथं प्रियवयस्यो मम मकरन्दः।

मक। उपसृत्य। सखे माधव! ललाटंतपस्तपति तपन-स्तदस्मिन्नुद्याने मुहूर्तमुपविशावः। (ब)

माध। यदभिरुचितं वयस्याय (भ)। इत्युभावुपविशतः।

कल। दृष्ट्वा। कधं मअरन्दसहअरो इदं ज्जेव्व बालव-उलुज्जाणं अलंकरेदि णाहमाहवो ता दंसेमि से मअणविक्क-णाविज्झुरन्तमालदीलोअणसुहावहं अत्तणो पडिच्छन्दअं। अहवा मुहुत्तं विस्सामसोक्खं दाव अणुभोदु (१४)। (म)

---

(१४) कथं मकरन्दसहचर इदमेव बालवकुलोद्यानमलङ्करोति

---

मोहात्। तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः॥ आन-न्देन निरन्तरसुखेन मन्दं मन्थरं चाभूत्। अमृतप्लवनादिव सुधा-सेकादिव। अथ च योगाभ्यासेन कुण्डलिन्याचरणेनामृतसेकादित्य-र्थः। तत्रापि परमानन्दसंदोहो भवत्येव। एतेनाङ्गनानायिकादर्शन-जातभावभरमन्थरता दर्शिता। तद्धृदयमधुना तद्वियोगेऽङ्गारचुम्बित-मिवाङ्गारावस्पृष्टमिव व्यथमानं पीडायुक्तमास्त इत्याश्चर्यम्। न च प्रियासङ्गे सुखं तद्वियोगे दुःखमिति दृष्टचरमेव तत् कथमाश्चर्यमिति वाच्यम्। अननुभूतरसस्य तस्य शिशुत्वेन किमिदं यदकाण्ड एव व्यथेति तदज्ञानात्।

(फ) इत इहागच्छेत्यर्थः। आद्यादित्वात्तसिः। एतेन माधवस्य वाञ्छार्थाप्रहास्मितादर्शनं सूचितम्।

(ब) ललाटं तपति ललाटंतपः। असूर्यललाटयोरिति खश्प्र-त्ययः। खित्वान्मुम्। माधवीयमन्मथोन्मादमपनेतुकामस्येदं वचनम्।

(भ) वयस्यायेति रुच्यर्थानां प्रीयमाण इति सम्प्रदानता।

(म) अत्र मकरन्देन पुष्परसेन सहचरो माधवो वसन्तो बाल-

मक। तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायपीतलामोदवासितोद्यानस्य काञ्चनारपादपस्याधस्तादुपविशाव: (य)। तथा कुरुत:।

मक। वयस्य माधव! अद्य किल सकलनगराङ्गनाजनप्रवर्तितमहोत्सवाभिराममदनोद्यानयात्राप्रतिनिवृत्तमव्याहृतं भवन्तमवधारयामि। अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम्। (र)

माधव: सलज्जमधोमुखस्तिष्ठति।

मक। विहस्य। तत् किमवनतमुग्धमुखपुण्डरीक: स्थितोऽसि। पश्य।

---

नायमाधवस्तद्दर्शयामि। मदनवेदनाखिद्यमानमालतीलोचनसुखावहमात्मनोऽस्य प्रतिच्छन्दकम्। अथवा मुहूर्तं विश्रामसौख्यं तावदनुभवतु।

---

बकुलमलङ्करोतीति ध्वनिरप्युन्मिषति। मुहूर्तं चेत्यत्र सुस्थिते चित्ते वक्तुं युक्तमिति भाव:।

(य) उत्फुल्लपुष्पाणां ये केसरा: किञ्जल्कास्तै: कषायो लोहित: पीतलश्च य आमोदस्तेन वासितं सुगन्धीकृतमुद्यानं येन तस्य। कषाय: सुरभौ लोहितेऽन्यवदिति मेदिनीकार:। कषायादिसम्बन्धेन सौरभस्यातिगभीरतोक्ता। आमुद्यतेऽनेनेत्यामोद इति। कषायादिसम्पदे काञ्चनारेत्युक्तम्।

(र) प्रवर्त्तित: कृत:। अभिरामेति यात्रान्वयि। इह मकरन्दवचनेन नर्मरूपा प्रतिमुखसन्धिरुक्ता। यदाह। शृङ्गाराढ्यं लपाकारि वाक्यं गोष्ठीषु नर्म तत्। इति। अपि: समुच्चये। नाम सम्भावनायाम्। इदं सम्भाव्यतापीत्यर्थ:। मनागल्पम्। रतिरमण: काम:।

अन्येषु जन्तुषु रजस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरे च।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥ (ख)

माधव। वयस्य! किं न कथयामि श्रूयताम्। गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनं तत्र चेतस्ततः परिक्रम्यावलोक्य च परिश्रमादुच्छ्वसितमदिरामोदमधुरपरिमलाकृष्टसकलमिलदलिपटलसंकुलाकुलितबकुलमुकुलावलीमनोहराभरणरमणीयस्याङ्गनभुवो बालबकुलस्यालवालपरिसरे स्थितः। तत्र च यदृच्छया निरन्तरनिपतितानि कुसुमान्यादाय विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि। अनन्तरं च सञ्चारिणीव

---

(ख) मुग्धं किं कर्त्तव्यतामूढ्यम्। पुण्डरीकं सितपद्मम्। विरहधूसरत्वेन मुखस्य पुण्डरीकसाम्यम्। तस्य लज्जयाकथनमाशङ्क्याह अन्येष्वित्यादि। माधव। तवापह्नुतिर्लज्जया कथञ्चिदपि मा भूत्। लज्जयापह्नवं मा कृथाः। एवमप्रतीकारः स्यादिति भावः। खलु यतः सोऽयं चित्तजन्मा कामः प्रख्यातपौरुषः। चित्तोन्माथविषय इति भावः। कीदृशः। विश्वस्य धातरि जगत्स्रष्टरि परमेश्वरे हरेऽन्येषु जन्तुषु मानुषादिषु च रजस्तमोगुणप्रधानेषु समस्तुल्यव्यापारः। यद्वा। अन्येषु मानुषादिषु रजस्तमसावृतेषु च तिर्यग्योनिषु विश्वस्य धातरि ब्रह्मणि परमेश्वरे हरे च सम इति भिन्नमेव योज्यम्। अतो लज्जां त्यक्त्वा कथयेति भावः।

(ग) परिश्रमात् स्थित इत्यन्वयः। परिश्रमात् स्थितोऽहं न तु साकाङ्क्षत्वादिति भावः। मदिरामोदवन्मनोहरो यः परिमलः सुग-

देवस्य मकरकेतोर्जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धनेपथ्यविरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत एवागतवती। (ब)

---

मत्त्वः। स्याच्छुभगन्धे परिमल इति विश्वः। मिलन्मिलितम्। संकुलेन व्याप्ताकुलिता या बकुलमुकुलावली विकासाभिमुखकलिकाराजिः सैव मनोहरमाभरणं तेन रमणीयस्य। यद्वा। मदिरामोदेन मधुर इति समासः। तेन मदिरामोदस्य बकुलपुष्पोद्गमं प्रति दोहदत्वमाह। अङ्गनभुवोऽङ्गनस्थस्य। अनेन निकटवर्त्तिनः सेकादिना मनोज्ञता दर्शिता। इहाङ्गनपदेऽनुविधायकाभावाण्णत्वश्रुतिरयुक्ता। पृषोदरादित्वाण्णत्वमित्यपि वचोऽमूलकमेव प्रत्युताङ्गनं प्राङ्गणे जाते कामिन्यामङ्गना मतेति विश्वादिकोषात्तवर्गपञ्चमोपान्तमङ्गनं केवलमिति शब्दप्रकाशाच्च नान्त्वमेवेत्यवधेयम्। आलवालं खल इति ख्यातम्। स्यादालवालमावालमम्भसां यत्र धारणमित्यमरः। विदग्धेति। मालानिर्माणं कामशास्त्रवैदग्ध्यद्योतनाय। उक्तं च मालाग्रथनविकल्पा इत्यादिनेति भावः। अतिसुकुमारतया कामिनीमनोहरतया सुगन्धितया सुन्दरतया चान्यपुष्पाणि त्यक्त्वा बकुलपुष्पैर्मालाग्रथनमिह। अत एव दमयन्तीस्वयंवरादावपि बकुलमालावमधूकमालापरिग्रहः। सञ्चारणी गमनशीला मकरकेतोः कामस्य वैजयन्तिका पताका। गर्भभवनान्मध्यावासादुज्ज्वलया निर्मलयाप्याख्यया च शिशुप्रसाधनविरचनयोन्नीतः कुमारीभावः कुमारीत्वं यस्याः। कुमारीत्वेनावगुण्ठनपटाद्यभावात्तदुन्नयनमिति भावः। महानुभावप्रकृतिरतिप्रभावस्वभावा। अत्युदारो महान्दक्षिणो वा। उदारो महति दक्षिण इति शाश्वतः। परिजनदाक्षिण्यं सान्निध्यानयनेन ज्ञेयम्। तत एव तत्रैव।

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे ! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादिकारणमभून्मदनश्च वेधाः ॥ (घ)

---

(घ) तद्गुणकीर्तनमाह । सेत्यादि । सा स्त्री रामणीयकस्य मनोहरताया निधेराधारस्याधिदेवताधिष्ठात्री देवता । यद्वा । रामणीयकमेव निधिस्तस्याधिष्ठात्री रक्षिका देवता । सौन्दर्यसार-समुदायस्य कान्तिनिर्यासपूरस्य निकेतनं गृहं वा । निकेतनस्या-जहल्लिङ्गतया सामानाधिकरण्यम् । मनोहरत्वं कान्तिमत्त्वं च तत्रैव दृष्टमिति भावः । वा समुच्चये । यद्वा । वा विकल्पे तत्र निर्णेतुं न शक्यत इति विकल्पार्थः । यद्वा । वेवार्थे रामणीयक-निधेर्देवतेवेत्यर्थः । वा स्यादिकल्पोपमयोरिवार्थेऽपि समुच्चय इति विश्वः । यद्वा । रामणीयकं रूपादिसम्पत्तिस्तन्निधेरधिदेवता । अनेन शोभोक्ता । यदाह । रूपयौवनलावण्यैरुपभोगोपबृंहितैः । अलङ्करणमङ्गानां शोभेति परिकीर्तिता ॥ सौन्दर्येत्यादिना कान्ति-रुक्ता । यदाह । शोभैव कुसुमास्त्रेण पूरिता कान्तिरुच्यते । अतो-ऽनयोर्भेदः । अत्यन्तविलक्षणां तामालोक्योत्प्रेक्षते । नियतं नूनं तस्याः कारणं समवायिकारणमिन्दुसुधामृणालज्योत्स्नादिकमभूत् । चन्द्रो मुखस्य सुधाधरस्य मृणालं भुजयोर्ज्योत्स्ना लावण्यादीनामिति भावः । आदिपदेन पद्मौ पादयोः किसलयौ चरणयोरिति ग्राह्यम् । सर्वोपमाद्रव्यघटितेयमिति भावः । एवं मदन एवास्या वेधाः स्रष्टा-भूत् । चकारोऽवधारणे । वेदजडस्य पुराणस्य ब्रह्मणो नास्य निर्माण-कौशलमिति भावः । अत्र कामस्य स्रष्टृत्वेनाश्रुतत्वात् कथमिति न देश्यम् । अस्या मोहनीत्वेन मोहनपटुकामजन्यत्वोत्प्रेक्षणात् । अदृष्टचरत्वस्योत्प्रेक्षायामनुकूलत्वात् । असदारोपणस्योत्प्रेक्षात्वात् । नियतपदमुत्प्रेक्षाव्यञ्जकम् । नूनमित्येवमादिभिरिति वचनात् ।

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसञ्चयावचयलीलादोहदिनीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिंश्चिदपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । (प)

यतोऽस्याः । परिम्लदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥ (स)'

---

(प) प्रणयिनी स्निग्धा । अनुचरी दासी । सञ्चयः समूहः । अवचयस्त्रोटनम् । दोहदोऽभिलाषः । सहर्षमाह तमेवेति । स्वोद्देशेनाह कस्मिन्नपीति । भागधेयं भाग्यमित्यमरः । इहानुमानरूपो गर्भसन्धिः कस्मिंश्चिदित्यनेनोक्तः । यदाह । व्याप्येन व्यापकज्ञानमनुमानमुदीरितम् । इति ।

(स) विकारचिह्नमाह परिम्लदितेति । यथास्या अङ्गं परिम्लदिता मर्दनविषयीकृता या मृणाली विसलता तद्वन्म्लानम् । क्रियासु ताम्बूलभक्षणादिषु परिजनयाचनाभिरस्याः कथमपि प्रवृत्तिः । इह मृणालीपदेन तनुता म्लान्या निद्राच्छेदः कथमपीत्यादिना विषयनिवृत्तिः कथिता । तनुत्वम्लानत्वमान्द्यैर्ग्लानिरुक्ता । यदाह । ग्लानौ तनुत्ववैवर्ण्यमन्दतादिनिदर्शनम् । ननु तनुत्वादिना व्यभिचारिणा कथं कामविकारोन्नयनमत आह । कलयतीति । तस्याः कपोलो हिमांशोः शोभां कलयति । अनेन पाण्डुता दर्शिता । कीदृशः । नूतनदन्तिदन्तखण्डगौरः । छिद्यत इति छेदः खण्डः । इहाभिनवपदेन सपुलकत्वं ध्वनितम् । तथा च कपोलपाण्डुत्वसपुलकत्वादिना कामविकारव्याप्तेन तदुन्नयनमिति भावः । विरहे

सा पुनर्मम प्रथमदर्शनात्प्रभृत्यस्तवर्तिरिव चक्षुषो-र्निरतिशयमानन्दमुत्पादयन्त्ययस्कान्तमणिशलाकेव लोह-धातुमन्तःकरणमाकृष्टवती। किं बहुना। (छ)

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः।
प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वङ्कषा भगवती भवितव्यतैव॥ (ज)

---

पाण्डुतापि। यदाह। अङ्गस्यासौष्ठवं तापः पाण्डुता कृशता रतिः।

(छ) वर्तिर्नेत्राञ्जनलेखा। अयस्कान्तो लोहाकर्षको मणिः। लोहधातुर्लोहरूपं द्रव्यम्। अन्तःकरणं मनः। ममान्तःकरण-माकृष्टवतीत्यर्थः। किं बहुनेत्यनेन सखेदनिःश्वाससूचनम्।

(ज) सन्तापेत्यादि। ममैतच्चेतस्तस्यां विषय आसक्तं समन्ता-न्मग्नमस्तीत्यर्थः। सन्तापपरम्परैव महाव्यसनं तदर्थम्। तादर्थ्ये चतुर्थी। सन्ततिपदेन मालतीलाभमन्तरेण यावज्जीवमविच्छेदस्तद-लाभे प्राणहानिश्चोक्ता। कीदृशम्। अनपेक्षितनिमित्तम्। एतेन विषयालाभेऽप्यस्य स्वाभाविकी प्रीतिरुक्ता। यदाह। अभ्यासादभि-मानाच्च तथा संप्रत्ययादपि। विषयेभ्यश्च तत्त्वज्ञा विदुः प्रीतिं चतु-र्विधाम्॥ अनेन निजस्वच्छन्दत्वमपि निरस्तम्। अत एवाह प्राय इति। बाहुल्येन भगवती भवितव्यतावश्यम्भावि प्राक्तनकर्म जीवानां शुभमशुभं च विदधाति। अत एव सा सर्वङ्कषा सर्वहरा। तथा च ममावश्यकं दुःखं त्वं तु यथोचितं कुर्या इति भावः। आसक्तेत्याङ्पूर्वात् षञ्ज सङ्गे क्तः, सर्वङ्कषेति खच्प्रत्यये खित्या-न्मुम्।

मक। वयस्य माधव! स्नेहस्य निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् (क)। पश्य।

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥ (ख)

ततस्ततः। (ग)

---

(क) माधवोक्तप्रीतेरनिमित्तकत्वमुपपादयति। स्नेह इति निमित्तमिह द्वयं वाह्यमाभ्यन्तरं च तदिह वाह्यहेत्वपेक्षः स्नेहोऽस्थिर एव। निमित्तनिवृत्तौ तन्निवृत्तेरावश्यकत्वात्। अत आन्तरनिमित्तापेक्षैव स्नेहस्येति भावः। विप्रतिषिद्धं विरुद्धं वाह्यनिमित्तापेक्षया विरोध इति भावः।

(ख) स्वोक्तौ युक्तिमाह। व्यतिषजतीत्यादि। आन्तरो हेतुः कोऽप्यनिर्वचनीयः पदार्थान्तरनारीप्रभृतीन् व्यतिषजति विशेषतो मेलयति। यतः प्रीतयो वहिरुपाधीन् वाह्यहेतून् सौन्दर्यादीन्न संश्रयन्ते प्रकर्षेणावलम्बन्ते। अत कोऽपीत्यनेन जन्मान्तरानुभवजनितसंस्कारताध्वनिः। न खल्वित्यनेन दृष्टश्रुतानुमितसकलैहिकोपाधिनिषेधात्तथावसायः। अत एव विशेषप्रकर्षद्योतकाभ्यामुपसर्गाभ्यामासङ्गस्य जीवितावधित्वमुक्तम्। उक्तं द्रढ़यति। यतः पतङ्गस्य सूर्यस्योदये पुण्डरीकं विकसति चन्द्रे उद्गते उदिते सति चन्द्रकान्तो द्रवति चरति च। तथा च तीक्ष्णकरोदये कोमलकमलदलविकासादमृतकरोदये पाषाणदारणाच्च सहजसिद्ध एव हेतुः। इह किं वाह्यं कारणं दृश्यते। तद्वत्प्रकृतेऽपि स्वाभाविक एव स्नेह इति भावः। पुण्डरीकपदमिह पद्ममात्रपरम्। अर्थान्तरन्यासोऽयम्।

(ग) ततस्तत इति कथोपक्रमरीतिः।

माध । ततश्च तत्र । (घ)

सभ्रूविलासमथ सोऽयमितीरयित्वा
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
अन्योन्यभावचतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ (ङ)

मक । स्वगतम् । कथं प्रत्यभिज्ञापि नाम । (च)

माध । अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलयावलीकमुत्तस्तमत्तकलहंसविभ्रमाभिरामचरणसञ्चरणझणझणायमानमञ्जुमञ्जीररसितानुविद्धमेखलाकलाप-

---

(घ) तत्र स्थाने ।

(ङ) सभ्रूविलासमित्यादि । अथ तस्याः सखीजनेन तदा सोऽयमित्युक्त्वा सप्रत्यभिज्ञमिव पूर्वदृष्टमिति मामवलोक्य सभ्रूविलासं सभ्रूभङ्गं यथा तथा कटाक्षाः क्षिप्ताः । एतेन कटाक्षाणां पूर्वदृष्टप्रत्यभिज्ञाकारार्पणत्वमुक्तम् । कीदृशेन । अन्योन्याशयविज्ञेन । अनेन नायिकाव्युत्पन्नत्वातिशय उक्तः । कीदृशाः । स्मितमीषद्धसितमेवामृतं तेन मनोज्ञाः । ईषत्प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अदृष्टदन्तं कुसुमैरुत्तमानां स्मितं मतम् ॥ इति भरतः । स्वस्यादृष्टचरत्वेन सम्भावनायामिवशब्दः । अवलोक्येति । ललिता दृष्टिरियम् । यदाह । मधुराकुञ्चिततारा च सभ्रूक्षेपा च ललिता । समन्मथविकारा च दृष्टिः सा ललिता मता ॥ इह तु कर्णादियमुचिता । यदाह । स्तौ कर्णे च ललिता । भ्रूविलासेत्यनेन मोट्टायितमपि कटाक्षितम् ।

(च) प्रत्यभिज्ञैकस्य तत्तेदन्तावैशिष्ट्यम् । अस्या एवाकारः सोऽयमिति । नाम सम्भावनायाम् । अदृष्टचरत्वेन माधवप्रत्यभिज्ञाया असम्भवादिति भावः ।

कलकिङ्किणीरणत्कारमुखरं परिवृत्य भर्तृदारिके ! दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामङ्गुलीदलविलासेनाख्यातवत्यः । (छ)

मक । स्वगतम् । हन्त महतः प्रागनुरागस्योद्भेदः । (ज)

---

(छ) तामेव स्फोटयति । अथेति । अनन्तरं ताः सख्यो हे भर्तृदारिके ! स्वामिपुत्रि ! हर्षेण वयं वर्धामहे यतोऽत्रैव स्थाने कस्यापि कोऽपि तिष्ठतीत्युक्त्वा मामङ्गुलीखण्डलीलया कथितवत्यः । किं कृत्वा । सलीलं सविलासचेष्टितं यथा तथा प्रतिनिवृत्य । स्त्रीणां विलासचेष्टितं लीलेति भरतः । उत्तालमुद्भटम् । विभ्रमो विलासो विशिष्टभ्रमणं वा । मञ्जुर्मनोज्ञः । मञ्जीरो नूपुरः । रणितानुविद्धः शब्दानुगतः । मेखलायाः कलापो गुच्छः । यद्वा । मेखला च कलापस्य तयोः किङ्किणी क्षुद्रघण्टिका । मेखला च कलापस्य भवेच्छ्रोणिविभूषणम् । एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ॥ रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥ इति भरतः । इदं सर्वं निवर्तनक्रियाविशेषणम् । गतिरियं विकला । यदाह । आवेगे चैव हर्षे च कार्ये च त्वरयान्विते । एतेषु च गतिं प्राज्ञो विकलां सम्प्रयोजयेत् ॥ इति । राजा भट्टारको देवस्तत्सुता भर्तृदारिका ॥ राजपदमीश्वरमात्रपरम् । तेनामात्यकन्यापि भर्तृदारिकेत्युच्यत इत्यवधेयम् । कोऽपि कस्यापीत्यनेनानुद्भटोद्भावनेन तासां चातुर्यमुक्तम् । अत एव कस्यापीति सामान्यनिर्देशात् क्लीवत्वम् । अन्यथा स्त्रीलिङ्गनिर्देशः स्यात् । कोऽपीति पुंलिङ्गनिर्देशस्तु स्पष्टार्थः । अन्यथा किमपीति निर्देशे पुष्पादिप्रतिपत्त्या संशयः स्यादिति भावः । अङ्गुलीदलपदेन सविलासाख्यानमुक्तं संगुप्ताख्यानं वा ध्वनितम् । इदमाख्यानं नर्मवाक्यम् । यदाह । सहास्यवचनप्रायं नर्मेच्छन्ति मनीषिणः ॥

(ज) हन्त हर्षे । उद्भेदः प्रकाशः ।

कल । आकर्ण्य । कथं सरसरमणीयानुबन्धिनी (झ) इत्यीजनकथा (१५) ।

मक । ततस्ततः ।

माध । अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ (ञ)

---

(१५) कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा ।

---

(झ) अनुबन्धिनी प्रतीयमाना ।

(ञ) अत्रान्तर इत्यादि । सखीनां दर्शनावसर एव पद्माक्ष्याः सम्बन्धि तन्मान्मथं कामजमाचार्यकमुपदेशकमाविरासीत् प्रकटीभूतम् । कीदृशम् । किमप्यनिर्वचनीयमत एव वाग्विभवाद्वचनप्रपञ्चादतिवृत्तमतिशयितं वैचित्र्यं यस्य तत् । उल्लसित उत्थितो विभ्रमो भावभेदो यत्र तत् । यच्चित्तवृत्तेरनवस्थितत्वं शृङ्गारजो विभ्रम उच्यतेऽसौ । भेदास्त्वयस्तस्य मदानुबन्धकार्कश्यसंज्ञाः कथिता विदग्धैः ॥ इति भरतः । भूरि प्रचुरः सात्त्विकविकारो यत्र तत् । सत्त्वं मानसं किमपि तेन निर्वृत्तः सात्त्विको भावः । यदाह । सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका निगदिताः कविभिः पुराणैः । ते च । स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ इति । अपास्तं क्षिप्तं धीरत्वं येन तत् । महाभिजनत्वाद्यनपेक्षत्वादिति भावः । विजयि सर्वत्राप्रतिहतं कुमार्यामपि शिशुत्वाद्विजय इति भावः । उत्पलाक्ष्या इत्यनेन बहुविधे नेत्रविकारे प्रीतिगो हाव इत्युक्तः । यदाह । भ्रूनेत्रादिविकाराद्यः शृङ्गाराकारसूचकः । स्थायिभावः स्थितो हाव ईर्ष्यातः प्रीतिगोऽपि च ॥ इह लोके विलास उक्तः । यदाह ।

ततश्च । स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ (ट)

---

दयितावलोकनादौ विशेषोऽङ्गक्रियासु यः । शृङ्गारचेष्टासहितो विलासः समुदीरितः ॥

(ट) संप्रति हेला हावात् समुत्थितेति भरतानुसारेण हावानन्तरं हेलामाह । स्तिमितेत्यादि । नारीणां प्रियसम्भोगलज्जासाध्वसकौतुकैः । स्वभावाविष्कृतो वेगो हेलेति परिकीर्त्तितः ॥ इति भरतः । श्लोकार्थस्तु तथा आलोकितानां सहसा दर्शनानां पात्रं योग्योऽहमभूवं दृष्टोऽस्मि । सहसा दर्शनं यत् स्यात् तदालोकितमुच्यते ॥ इति भरतः । कीदृशानाम् । मदीयरूपनिरूपणाश्चर्येण स्तिमितानि निश्चलानि हर्षेण विकसितानि प्रफुल्लानि च तेषाम् । दृष्टिरयमद्भुता । यदाह । समाकुञ्चितपक्ष्माग्रा विस्मयोद्भूततारका । सौम्या विकसितान्ता च दृष्टिः स्यादद्भुताभिधा ॥ यद्वा । स्तिमितं मन्दं यथा तथा विकसितानां प्रकाशितानां प्रथमं नायकदर्शनेन शनैः शनैः प्रसारणमिति भावः । अनेनोत्तरोत्तरदर्शनाभिलाषः सूचितः । उल्लसन्ती चपला भ्रूर्लतेव येषु तेषाम् । दीर्घत्वेन भ्रूलतयो रूपकम् । अनेन कान्ता दृष्टिरुक्ता । यदाह । हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा । सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ मसृणानि चिक्कणानि लज्जया मुकुलितानि च तेषाम् । दृष्टिरियं मुकुलिता । मुग्धा निमीलितान्ता च मुकुला दृष्टिरिष्यते ॥ इति भरतः । यद्वा । सुखभावतया मसृणं मन्दं यथा भवति तथा मुकुलितानाम् । एतेन दर्शनजनितानन्दसम्पत्पर्यवसानं सूचितम् । पुनः पुनर्दर्शनाकाङ्क्षया तिर्यगायतत्वेन प्रान्ते निकटे च विस्तारवताम् । शङ्किता दृष्टिरियम् । यदाह । किञ्चिच्चलत्स्थिरा किञ्चिदुन्नमिता तिर्यगायता । गूढा

तैश्च । अलसवलितमुग्धस्निग्धनिष्पन्दमन्द-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।

---

चकिततारा च शङ्किता दृष्टिरुच्यते ॥ अनेन कटाक्षपर्यवसानमुक्तम् । प्रतीपदिगायतमक्षिलपाते सति लज्जया दर्शनोत्सुकतया च किञ्चिदाकुञ्चितानां मुद्रितानाम् । आकुञ्चितेयं दृष्टिः । यदाह । यनाकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा । सान्निकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥ न च, कुञ्चिता सूचिता नष्टदुष्टे चाक्षिव्यथासु या ॥ इति भरते नियमादिह कुञ्चितदृष्टिकथनमयुक्तमिति वाच्यम् । लज्जया साधके दुष्प्रेक्षत्वसम्भवात् । पात्रं कीदृशम् । विविधं नानाप्रकारम् । स्तिमितदृष्टिप्रयोगेऽपि मयापि तथैव दृष्टिप्रयोगः कृत इत्यर्थः । योग्यभाजनयोः पात्रमित्यमरः । अभूवमिति भुवो लुङि सिचि रूपम् ।

(ठ) अलसेत्यादि । पक्ष्मलाक्ष्याः प्रशस्तपक्ष्मयुक्तायास्तैरवलोकितैः कटाक्षतापन्नैर्मम हृदयमपहृतं स्ववशीकृतम् । इह रक्षकबाहुल्येन गमनत्वरया शङ्कया चावलोकितानामेव कटाक्षत्वमुक्तम् । कटाक्षस्तिर्यग्विलोकनात्मकः । कर्णाभ्यर्णसञ्चारितारकः । सर्वानङ्गरङ्गजनक इति भावः । तथा निश्चलत्वेनापविद्धं मथितम् । मथ्यमानतया द्रवरूपत्वेन पीतम् । अत एवोन्मूलितम् । तदा किमपि मया न ज्ञातमित्यर्थः । अत एवागरणं रक्षकशून्यं जातम् । ततो यथार्हं कुर्विति भावः । कीदृशैः । लज्जयालसैर्मन्दैः कौतुकेन वलितैश्चलितैः । अथ मुकुलनेन मुग्धै रम्यैः । प्रीत्या स्निग्धैः । रूपदर्शनाद्भुतचिन्ताभ्यां निष्पन्दैरनिमेषैः । पुनः कोऽयं द्रष्टव्य इति विषादान्मन्दैरित्यर्थः । इयं विषादिनी दृष्टिः । यदाह । विषादविस्तीर्णपुटा पर्यस्तान्तानिमेषिणी । किञ्चिन्निष्टब्धतारा च नार्या दृष्टिर्विषादिनी ॥ यद्वा । अलसं मन्दं यथा तथा वलितैः । इयं निर्विकारा दृष्टिः । यदाह । ललिता कुञ्चिता या च या च धीरावलोकिनी । निर्विकारा दृगिष्टा सा साध्वसेवाकारयुक्तिषु ॥ तथा प्रथमदर्शनापेक्षयाधुना विशेषदर्श-

हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च ॥ (८)

एवमहं तु तस्याः सर्वाकारहृदयंगमायाः सम्भाव्यमा-

---

नादधिकं विकसतान्तर्विस्मयेन स्मेरा मुग्धा तारा येषां तैः । इयं दृष्टिः स्निग्धा । यदाह । किञ्चिल्लहासेव सविस्मयेव सभ्रूसमुत्क्षेप-कटाक्षयुक्ता । स्निग्धा निकामं प्रमदैवनिष्ठा शृङ्गारजा दृष्टिरिह प्रदिष्टा ॥ यद्वा । कटाक्षैर्मम हृदयमपहृतमित्यनेन प्रीतिरुक्ता । अन्यस्यापि चक्षुःप्रीतिहेतोर्मनोहरत्वं भवत्येव । अपविद्धमित्यनेन चित्तासङ्ग उक्तः । अपव्यधेरत्यन्तासङ्गवाचित्वादिति भावः । पीत-मात्मायत्ततां नीतम् । अनेन संकल्प उक्तः । मानसव्यापारस्यात्म-वशत्वादिति भावः । उन्मूलितमित्यनेन विषयनिवृत्तिः सूचिता । अशरणमित्यनेन चित्तापहरणादिनिवारकाभाव उक्तः । नायिकाया निरवद्यरूपता च सूचिता । अलसेत्यनेन निद्राच्छेदः । वलित इत्य-नेन त्रपानाशः । मुग्धत्वेन मधुरता । स्निग्धत्वेन साभिलाषत्वम् । अभिलषणीयस्य स्नेहविषयत्वात् । निष्पन्दतया निकोचवैमुख्यम् । मन्दत्वेन सहर्षत्वम् । अधिकेत्यादिनान्तर्विकासिनी स्मेरतारा चेत्यु-क्तम् । एवं चालसवलितैरपहृतम् । योऽपि हि चौरादिः किञ्चि-दपहरति स मन्दं मन्दं वलत इति भावः । मुग्धैः सहजरूपदर्श-नातिमोहर्वाद्भिः स्निग्धैर्मद्विषयस्नेहसूचकचेष्टावद्भिरपविद्धं क्षिप्तं परा-भूतमिति यावत् । विद्धक्षिप्तेरिताः समा इत्यमरः । अनेन चेतसो-ऽनायत्तिर्दर्शिता । ननु चित्ताचक्षेपनिवारकं तदनु ध्यानादिकं किमिति न कृतमत आह । निष्पन्दैर्विमुखैर्मन्दैर्मदेकविश्रान्तैश्च पीतं तदित-रानुसन्धानशून्यं कृतम् । तथा च नान्यविषयपरिशीलनकथेति भावः । अधिकेत्यादिनोन्मूलितम् । अनेन मनोनिग्रहाभावो मित्रोपदेशा-नवसरश्च सूचितः । इह पूर्वश्लोकेन नार्थपौनरुक्त्यम् । आलो-कितावस्थाकटाक्षावस्थयोर्भेदात् । नायकस्य रसाक्षिप्तचित्तत्वाद्वा ।

नस्नेहरसेनाभिसन्धिना विधेयीकृतोऽपि पारिप्लवत्वमा-
त्मनोऽपनिह्नोतुकामः प्राक्प्रस्तुतस्य वकुलदाम्नो यथाकथ-
ञ्चिदवशेषं ग्रथितवानेव। ततो मिलितवेत्रग्रस्तपाणिवर्ष-
वरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्ग-
मिन्दुवदनालङ्कृतवती। (ड)

तदा च। यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः॥ (ढ)

---

(ड) तथाविधभावदर्शनेन हृदयङ्गमत्वम्। सम्भाव्यते। अपदेऽपि
प्रेमृणोऽनिष्टाशङ्कित्वादिति भावः। अभिसन्धिरभिप्रायः। यथाक०
थञ्चिदिति। चेतसस्तदपहृतत्वादिति भावः। वर्षवराः क्लीवास्तत्प्राया-
स्तत्प्रधानाः। यद्वा। विनीताः सर्वसत्त्वाश्च क्लीवाश्चैव स्वभावतः।
जात्या न दोषिणश्चैव ते वै वर्षवरा मताः॥ इति परिभाषिता
वर्षवराः। हस्तिनीसमारोहणादिना महावंशजत्वेन मालत्या उत्त-
मस्त्रीत्वं सूचितम्। यद्वा। हस्तिनीसमारोहणेनात्युच्चयानतया
दूरदर्शित्वं सूचितम्। तत्रापि मन्थरगतिसूचनाय हस्तिनीग्रहणम्।
हस्तिजातावपि स्त्रिया मन्थरगतिमत्त्वात्। एतदुभयं चिरं माधवा-
वलोकनायेति भावः।

(ढ) यान्त्येत्यादि। तया पक्ष्मलाक्ष्या यान्त्या मम हृदये गाढं
यथा तथा कटाक्षो निखात इव दत्त इव। तदा तदवलोकनं मम
हृदये लग्नमित्यर्थः। निखात इत्यनेन कटाक्षस्य दुःसहत्वमुक्तम्।
कीदृश्या। तदाननं वहन्त्या। कीदृशम्। मुहुर्वलिता वक्रिता
कन्धरा घाटा यत्र तत्। क्षणं क्षणं व्यावर्तमानम्। पश्यन्त्येत्यर्थः।
आवृत्तवृन्तमावर्जितनालं यच्छतपत्रं पद्मं ततो निरतिशयाया भा

ततः प्रभृति । (ण)

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जड़यति च तापं च कुरुते ॥ (त)

अपि च । परिच्छेदव्यक्तिर्भवति न पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ (थ)

---

दीप्तिर्यस्य तत् । तन्निभं तत्तुल्यमिति वा । इत्तादारभ्यावर्तनेन यज्ञविवर्तनसिद्धिः । कीदृशः । प्रथममानन्दहेतुतयाहृतेन दिग्ध उपचितः पश्चाद्दर्शनानन्दविच्छेदाद्विषेण दिग्धः ।

(ण) ततः प्रभृति तस्मादारभ्य ।

(त) परिच्छेदेत्यादि । विकारः कामजो भावोऽन्तर्जडयति मोहयति तापं च कुरुते व्यथयति । यदा तत्प्राप्तिचिन्ता तदा जडतेतरकार्याप्रतिपत्तिः । यदा च तद्व्यतिरेकचिन्ता तदा ताप इति कालभेदेन जाड्यतापयोर्न विरोधः । तदुभयजनकवस्तुनोऽभावमाशङ्क्याह । कोऽपि विशिष्यानिर्वचनीयः परिच्छेदमियत्तामतीतोऽतिक्रान्तो निर्वक्तुमशक्यश्च । यः पुनरस्मिञ्जन्मन्यनुभवपथं न गतवानत एव परिच्छेत्तुं निर्वक्तुं चाशक्य इति भावः । साम्प्रतं तदनुभवेन तद्द्वयं किमिति न क्रियत इत्याशङ्क्याह । विवेकप्रध्वंसात् प्रशस्तज्ञानाभावादुपचित-महामोहेन गहनः सङ्कटः । तदानीं विवेकाभाव इति भावः । अनेन जडता दर्शिता ।

(थ) परिच्छेदेत्यादि । सन्निकृष्टेऽपि घटादौ परिच्छेदव्यक्तिर्निर्णयाभिव्यक्तिर्न भवति । घटादिकमपि निर्णेतुं न शक्नोमीत्यर्थः । अनेन

मक। दिढ़ं क्खु एसो काए वि अवहरिदो। अवि णाम मालदिज्जेव्व सा भवे (१६)। (द)

मक। स्वगतम्। अहो अभिष्वङ्गः (ध)। तत्किं निषेधयामि सुहृदम्।

अथवा। मा मूमुहत् खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत्।

---

(१६) दृढं खल्वेष कयाप्यपहृतः। अपि नाम मालत्येव सा भवेत्।

---

वाह्येन्द्रियाणां विषयव्यावृत्तिरुक्ता। अभ्यस्तेऽपि वारं वारमनुभूतेऽपि स्वरवलतयाभावेन खण्डस्फुटिततया विरसं वैरस्यवत्। एतेन मनसोऽपटुत्वमुक्तम्। इयमनुस्मृत्यवस्था। विषयनिवृत्त्या सन्तापः शीतलसेवनादपि नापैतीत्याह। हिमवरवि शीतलसरोवरे चन्द्रमसश्चन्दनकरकिरणे वा मनःसन्तापहानिः। चन्द्रमःपदं लक्षणया स्वकिरणमाह। इयमुद्वेगावस्था। यदाह। आसने शयने वापि न तिष्ठति न तुष्यति। औत्सुक्यं च भवेन्नित्यमुद्वेगस्थान एव च॥ निष्ठाशून्यं धैर्यरहितं मनो भ्रमति च सत्त्वात्। किमपि मनोरथमालिखत्यालिङ्गति। अनेनोन्मादावस्थोक्ता।

(द) अपहृतो वशीकृतः। अपिः सम्भावनायाम्। नाम प्रकाशे।

(ध) स्वगतमिति। यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते॥ इति भरतः। अभिष्वङ्ग आसक्तिरूपो मनःपराभवः। आक्रोशशापाभिभवेष्वभिषङ्गपदं विदुरिति शाश्वतः।

(न) मा मूमुहदिति। अनन्यजन्मा कामः खल्वयं मा मूमुहत्। न चित्तविप्लवं रहितमजीजनदेवं च ते मतिर्मलीमसविकारेण कामजेन घना निविड़ा मा भूदित्यादि निषेधवाक्यमिहानर्थकमेव।

इत्यादि नन्विह निरर्थकमेव यस्मात्
कामश्च जृम्भितगुणो नवयौवनं च ॥ (न)

प्रकाशम् । अपि वयस्येन विदिते तदन्वयनामनी । (प)

माध । सखे ! श्रूयताम् । अथ तस्याः करेणुकारोहण-समय एव महतः सखीकदम्बकादन्यतमा वारयोषिद्वि-लम्बय बालबकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीड़व्याजेन मामेवमुक्तवती । महाभाग ! सुश्लिष्टगुणतया रमणीय एष वः सुमनसां संनिवेशः कुतूहलिनी च नो भर्तृदारिका वर्तते तस्या अभिनवो विचित्रः कुसुमेषुव्यापारस्तद्भवतु कृतार्थता वैदग्ध्यस्य

---

ननुपदमनन्वये । यतः कामो जृम्भितो वलयितो गुणो ज्या यस्य सः । जृम्भितगुण उपचितव्यापारो वा कामः । नवयौवनं च जृम्भित-गुणम् । प्रकाशितरूपादिकमस्तीत्यर्थः । अतस्तत्पराधीनोऽयं न निषेद्धुं शक्य इत्यर्थः ।

(प) प्रकाशमिति । यत्तु सर्वजनश्राव्यं प्रकाशं तदिहेष्यते ॥ इति भरतः । अन्वयो वंशः ।

(फ) करेणुका हस्तिनी । अन्यतमान्या । स्वार्थे तमप् । यद्वा । एकपर्यायोऽयमव्युत्पन्न एवान्यतमशब्दः । वारयोषिद्गणिका । तस्या ईदृक्त्वादुपादानमिह । विलम्ब्यैकाकिनी भूत्वा । नेदीयसी निकटस्था च भूत्वा । उभयत्र पुष्पत्रोटनक्रमेणेति योज्यम् । कुसुमापीड़व्याजेन पुष्पदामच्छलेन । अभ्यर्थनाभङ्गभयेन छलेन मामाहेति भावः । अथ च कुसुमेनापीड़यति कुसुमापीड़ः कामः । तद्व्याजेन मां प्रणम्येत्यर्थः । महाभाग ! महाभाग्य ! भागो भाग्यार्धयोरपीति विश्वः । सुश्लिष्ट-गुणतया सुबद्धसूत्रत्वेन । सन्निवेशो रचनाभेदः । कुतूहलिनी पुष्प-दाम्नि कौतुकवती । भर्तृदारिकेत्यनेन कन्यात्वादूर्ध्वंनीतुमुच्यसकाम् ।

फलतु निर्माणरमणीयता विधातुः समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घतामिति । (फ)

मक । अहो वैदग्ध्यम् । (ब)

माध । तया च मदनुयुक्तया समाख्यातमियममात्यभूरिवसोः प्रसूतिर्मालती नामाहं च प्रसादभूमिर्भर्तृदारिकाया (भ) धात्रेयिका लवङ्गिका नामेति ।

---

यद्वा । भरतेन कन्याया विस्रम्भपात्रत्वस्वीकारादिह कन्यात्वेन तत्सूचनम् । अभिनवो लोकोत्तरो विचित्रो बहुप्रकारः । कुसुमेषु पुष्पेषु व्यापारो रचनाप्रबन्धः । एतेन माल्यग्रथनकुशलाङ्गुलकौशलकुतूहलिनी सेत्युक्तम् । वैदग्ध्यस्य ग्रथनचातुर्यस्य । कृतार्थता कृतप्रयोजनता । विदग्धप्रेयसीयं प्रशंसयेति भावः । फलतु सफलास्तु । विदग्धजनाय दानात् । सरस एवाम्लान एव स्रक्सन्निवेशः । महार्घतां बहुमूल्यताम् । पक्षे । वो युष्माकं सन्निवेशः संयोगः परस्परानुरूपादिना रमणीयः क्रीडार्होऽर्हणीय एव । इह व इति युष्मदो गुरावेकेषामिति गौरवे बहुवचनम् । कुतूहलिनी दूतसमाजे साकाङ्क्षा । अभिनवोऽभूतपूर्वः । तदेकासक्तत्वात् । विचित्रः साधुः । विविधविकारकारित्वेनाश्चर्यजनको वा । कुसुमेषोः कामस्य व्यापारो मोहनम् । वैदग्ध्यस्य सकलकलाभिज्ञतायाः सार्थकत्वम् । विदग्धप्रीतिजनकत्वात् । निर्माणरमणीयता घटनसौन्दर्यम् । फलत्वनुरूपजनसंसर्गात् । नो चेदिदं सर्वं व्यर्थमिति भावः । सरसः शृङ्गारोऽनुरागो वा । कण्ठावलम्बनमालिङ्गनं महार्घता दुर्लभत्वम् । तदिह श्लिष्टपदेन नायकव्युत्पत्तिमभिप्रायं च ज्ञात्वा दूतीव्यापारः प्रसरतीति ध्वनितम् ।

(ब) वैदग्ध्यं श्लिष्टपदप्रयोगादिति भावः ।

(भ) अनुयुक्तया पृष्टया । प्रसूतिरपत्यम् । प्रसादभूमिर्विश्वासस्थानं तस्याः । तत्र च प्रसादभूमिरनुकम्पापात्रं मातृवादानात् ।

कल । सहर्षम् । किं णाम मालदि त्ति । दिट्ठिआ विलसिदं (म) क्खु भअवदा देवेण कुसुमाउहेण ता जिदं अह्मेहिं (१७) ।

मक । अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य (य) । अपिच । मालती मालतीति मोदते भगवती कामन्दकी तां च किल राजा नन्दनाय प्रार्थयत इति किंवदन्ती श्रूयते ।

माध । तया चाहमनुरुध्यमानस्तां वकुलमालामात्मनः कण्ठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागान्तामिव बहु मन्यमाना महानयं प्रसाद इति (र) प्रतिगृहीतवती । अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौरजनस्य संकुलेन विघटितायां यस्यामागतोऽस्मि ।

मक । वयस्य मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत् ।

---

(१७) किं नाम मालतीति । दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन तज्जितमस्माभिः ।

---

(म) अत्र विलसितं विजृम्भितम् । अनयोरन्योन्यानुरागादिति भावः ।

(य) बहुमानस्य गौरवस्यापर्याप्तिरनवधिकत्वम् । अनभियोज्यत्वरूपवत्त्वादियोगादिति भावः ।

(र) अनुरुध्यमानो मुहुर्याच्यमानः । असौ लवङ्गिका । अभिनिविष्टयातियत्ननिवेशितया । विहस्ततया व्याकुलतया । महानयं प्रसाद इति । यतो न वस्तूनि प्रेम किंतु गुणोऽपेक्षतीति भावः ।

योऽपि हि कपोलपाण्डुतादिचिह्नसूचितः प्राक्प्रवृद्धस्तस्याः कामाभिष्वङ्गः सोऽपि त्वन्निबन्धन इति व्यक्तमेवैतत् । एतत्तु न ज्ञायते क्व दृष्टपूर्वस्तया वयस्य इति । न खलु तादृश्यो महाभागधेयाः कुमार्योऽन्यत्रासक्तचेतसो भूत्वा-परत्र चक्षूरागिण्यो भवन्ति (ल) । अपिच ।

अन्योन्यसंभिन्नदृशां सखीनां तस्यास्त्वयि प्रागनुरागचिह्नम् ।
कस्यापि कोऽपीति निवेदितं च धात्रेयिकायाश्चतुरं वचश्च ॥(व)

कल । उपसृत्य । एदं चित्तम् (१८) । इति चित्रफलकं दर्शयति । उभौ पश्यतः ।

मक । कलहंसक ! केनैतन्माधवस्य प्रतिच्छन्दकमभिलिखितम् ।

कल । जेण जेव्व से हिअअं अवहरिदं (१९) । (श)

(१८) इदं चित्रम् ।

(१९) येनैवास्य हृदयमपहृतम् ।

(ल) सुश्लिष्टं निश्चितम् । दृष्टपूर्वः पूर्वं दृष्टः । तादृश्यो महाकुलजाः । चक्षूरागानुरागयोरेकविषयत्वं भरतमतम् ।

(व) अन्यदप्यनुरागचिह्नमाह । अन्योन्येत्यादि । त्वयि तस्याः प्रागनुरागचिह्नं व्यक्तमेवास्ति । कथम् । सखीनामन्योन्यसंगतदृशां कस्यापि कोऽपीति निवेदनमेकम् । कथमन्यथा सखीजनस्त्वां वीक्ष्य कटाक्षयति तां कथं वा सखीजनो वदत्येवमिति भावः । अपरं लवङ्गिकाया व्युत्पन्नं वचनम् । कथमन्यथा कुतूहलिनीत्यादि वदनीयमिति भावः । संगते दारिते भिन्न इति विश्वः ।

(श) अत्र येन जनेनापहृतं यन्निबन्धनोऽस्य कामविकार इति भावः ।

मक । अपि मालत्या । (घ)

कल । अध इं (२०) । (ङ)

माध । वयस्य मकरन्द ! प्रसन्नप्रायस्ते वितर्कः । (ह)

मक । कलहंसक ! कुतोऽस्याधिगमः । (च)

कल । मए दाव मन्दारिआए हत्यादो ताए वि लवङ्गिआसआसादो (२१) ।

मक । अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ।

कल । उक्कण्ठाविणोदो त्ति (२२) । (क)

मक । वयस्य माधव ! सर्वथा समाश्वसिहि ।

या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः ।

---

(२०) अथ किम् ।

(२१) मया तावन्मन्दारिकाया हस्तात्तयापि लवङ्गिकासकाशात् ।

(२२) उत्कण्ठाविनोद इति ।

---

(घ) मालत्या लिखितमित्यर्थः ।

(ङ) अथ किं स्वीकारे ।

(ह) वितर्क ऊहः ।

(च) अधिगमः प्राप्तिः ।

(क) उत्कण्ठाविनोद इति । माधवानुरक्ता मालती तमननुप्राप्तवती चित्रलिखितावलोकनेनापि रमत इति भावः ।

(ख) येत्यादि । हे सखे ! तत्संगमं प्रति नैव संशयोऽस्ति । भवतो नयनयोर्या कौमुदी ज्योत्स्ना । आनन्दकारित्वात् । तस्या मनोरथबन्धबन्धुरभिलाषनिबन्धनाय प्रियः शोभनजन्मा भवानपि ।

तत्सङ्गमं प्रति सखे ! न हि संशयोऽस्ति
यस्मिन्विधिश्च मदनश्च कृताभियोगः ॥ (ख)

द्रष्टव्यस्वरूपा च भवतो विकारहेतुस्तदत्रैव लिख्यतां मालती । (ग)

माध । यदभिरुचितं वयस्याय (घ) । तदुपनय चित्र-फलकं चित्रवर्तिकाञ्च । मकरन्द उपनयति ।

माध । लिखन् । सखे मकरन्द !

वारं वारं तिरयति दृशोरुद्गमं वाष्पपूर-
स्तत्सङ्कल्पोपहितजड़िम स्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ (ङ)

तथापि व्यवसितोऽस्मि । चिरादालिख्य दर्शयति ।

---

ननु परस्परानुरागेऽपि विधिकामवैमुख्यान्न सिद्धिरत आह । यस्मिन् संगमे विधिमदनौ कृतप्रयत्नौ चक्षुःप्रीत्या काम एतद्देशानयनाद्विधिः कृताभियोग इत्यर्थः । अभियोगाच्च कन्यालाभः । यदाह । अभि-योगाद्धि कन्याया लाभो निश्चित एव च ॥

(ग) चित्रेण माधवचित्तानुरागमुद्दीपयति । द्रष्टव्येति ।

(घ) वयस्यायेत्यत्र रुच्यर्थानां प्रीयमाण इति संप्रदानता ।

(ङ) अधुना मनःसङ्गे स्फुर्यात् सात्त्विकभावमाह । वारं वार-मित्यादि । अयं मम पाणिर्लेखाविधिषु चित्रनिर्माणेषु नितरामत्यर्थं वर्तत एव न तु लिखति । अत्र किं करोमि । यथातथा लिखा-मीत्यर्थः । न तरामिति पाठे नैव वर्तत इत्यर्थः । यतो वाष्पपूरस्तद-नुध्यानादानन्दाम्बुप्रवाहो वारं वारं दृशोरुद्गमं प्रचारं तिरयति छाद-यति । तस्याः संकल्पेन चिन्तनेनोपहितो जड़िमा सर्वकार्याप्रति-पत्तिर्यस्य तद्गात्रं शरीरं स्तम्भं निश्चलत्वमभ्येति । हर्षभयरोगविस्मय-

मक। विलोक्य। उपपन्नस्तावदत्रभवतोऽभिष्वङ्गः। सकौतुकम्। कथमचिरेणैव निर्माय लिखितः श्लोकः। वाचयति।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः॥ (च)

---

विषादमदरोषसंभवः स्तम्भः॥ इति भरतः। कीदृशः। सद्यो लिखनोपक्रमकाल एव स्विद्यन्नार्द्रीभवन्। अविरतोत्कम्पेनाधिकचलनेन लोलाङ्गुली यत्र सः। अङ्गुल्या लिखनहेतुतया तच्चापल्यादलिखनं सूचितम्। तदिहाश्रुस्तम्भस्वेदकम्पा उक्ताः। रोमाञ्चादिकं च नोक्तम्। तेषां लिखनाप्रतिकूलत्वात्। सर्वमिदं सात्त्विकं ज्ञेयात्। यदाह। क्रोधभयहर्षलज्जादुःखश्रमरोगतापपीडाभ्यः। व्यायामसाध्वसादेः स्वेदः स्यात्पीडनेनापि॥ शीतभयहर्षरोषस्पर्शजरारोगजः कम्पः॥ इति।

(च) अधुना मालती चित्तं हृष्यतीति सानुरागोपालम्भं श्लोकं लिखति। जगतीत्यादि। ते ते नवेन्दुकलादयो भावाः पदार्था जयिनो मदजनने सर्वत्राप्रतिहताः स्वभावतो मनोज्ञा अन्ये सन्त्येव ये मनो मदयन्ति। मम पुनर्न मदहेतवः प्रत्युत दाहहेतव एवेति भावः। अत्र जयिन इत्यनेन कालविशेषे देशविशेषे च जयशालिन आनन्दसंदोहदा इत्युक्तम्। भाव्यन्ते भावनामर्हन्ति सुन्दरतयेति भावाः। मालतीभिन्नाः सहृदयहृदयाह्लादकाः। ते त इति वीप्सया चन्द्रादयो देवादयश्च प्रसिद्धा एवेति दर्शितम्। सर्वनाम्ना च ये यत्र चेतःप्रतिष्ठास्ते तत्र ग्राह्या इति ध्वनितम्। तच्छब्देनान्येषां तथात्वं तत्प्रतिपत्तिद्वारेत्युक्तम्। कस्तर्हि मदहेतुरत आह। मम पुनरियं चित्रलिखिता मालती नयनयोर्ज्योत्स्ना यन्नेत्रगोचरं प्राप्ता स एवैकोऽत्र जन्मनि महोत्सवः। अत्र किं पुनः

प्रविश्य सत्वरं मन्दारिका। कलहंसअ पआणुसारेण उव-लद्धोसि। माधवमकरन्दौ विलोक्य सलज्जम्। कधं एदे वि महाणुभावा इह जेव्व (छ)। उपसृत्य। पणमामि (२३)।

उभौ। मन्दारिके! इत आस्यताम्।

मन्दा। उपविश्य कलहंसअ उवणेहि मे चित्तफलअं।
(२४)

कल। दृष्ट्वा। गेह्ण एदं (२५)।

---

(२३) कलहंसक पदानुसारेणोपलब्धोऽसि। कथमेतावपि महा-नुभावाविहैव। प्रणमामि।

(२४) कलहंसक! उपनय मे चित्रफलकम्।

(२५) गृहाणैतत्।

---

सम्भोगादिकमित्यनुरागः। स एव महोत्सवः। अनुरागो भवतु मा वा भूदित्युपालम्भः। एतेनात्यन्तानुरागो मालत्यां दर्शितः। एकपदेनान्यधर्माविर्भावेऽपि नानन्दकत्वम्। अत एव स एवेत्यनेन तत्पोषः। जननीति सामान्यनिर्देशेन समस्तजनानि मालतीतुल्या नास्तीति व्यज्यते। वाचिकोऽयं रसः। यदाह। रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा। नानालङ्कारसंयुक्तैर्वाचिको रस उच्यते॥ इति। इह प्रकृतिमधुरत्वेऽपि मालत्या एव मदनजननाद्यतिरेका-लङ्कारः। प्रियाख्यानात् प्रियोऽलङ्कारः। विलोचनचन्द्रिकेति रूप-कम्। न चात्र नवेन्दुकला प्रतिपच्चन्द्रकला सा च न मदहेतुरिति वाच्यम्। यतो नूयत इति नवः। प्रशस्तेन्दुरित्यर्थः। यद्वा। नवं नूतनमिन्दुकलादिकं चेति द्वन्द्वः। यद्वा। नवः सागरादुत्थित-मात्रः। पूर्ण एवेत्यर्थः।

(छ) यत्र पटीक्षेपेण प्रवेशस्तत्र प्रविश्येत्युक्तिः। अनुसारोऽनु-सरणम्। एतेऽपि ये चित्रफलके लिखिताः। इह गौरवादेकत्वे बहुवचनम्। द्वित्वे वा बहुवचनम्।

मन्दा। विलोक्य। कलहंसअ! केण उण किंणिमित्तं वा एत्थ मालदी आलिहिदा (२६)।

कल। जो जेण णिमित्तेण मालदीए (२७)। (ज)

मन्दा। सहर्षम्। दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो (२८)। (झ)

मक। मन्दारिके यदत्र वस्तुन्येष ते वल्लभः कथयत्यपि तथा तत्।

मन्दा। महाभाअ अध इं (२९)।

मक। क्व पुनर्मालती माधवं प्रागदृष्टवती।

मन्दा। लवङ्गिआ भणादि वादाअणगदत्ति (३०)।

मक। वयस्य! नन्वमात्यभवनासन्नरथ्ययैव बहुशः सञ्चरावहे तदुपपन्नमेतत्।

---

(२६) कलहंसक! केन पुनः किंनिमित्तं वात्र मालत्यालिखिता।

(२७) यो येन निमित्तेन मालत्या।

(२८) दिष्ट्या दर्शितफलमिदानीं विज्ञानं प्रजापतेः।

(२९) महाभाग! अथ किम्।

(३०) लवङ्गिका भणति वातायनगतेति।

---

(ज) त्वमभिलिखित इति शेषः। तथाच मालत्या विनोदाय माधवो लिखितस्तेनापि सा तदर्थं लिखितेत्यर्थः।

(झ) अत्र विज्ञानं शिल्पिकौशलम्। अनुरूपानुरागादनयोरिति भावः। अवितथं सत्यम्। एवमेतन्मालत्यैव माधवप्रतिच्छन्दकं लिखितमित्यर्थः। दृष्टवतीत्यर्थः। लवङ्गिकया द्वारा माधवानुरागो मालत्यामस्तीत्यर्थः।

मन्दा। अणुमण्णन्तु मं महाणुभावा जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि (३१)।

मक। प्राप्तावसरमेतद्भवत्याः। मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता।

मक। वयस्य खरतरकिरणोऽयं भगवान् सहस्रदीधितिरलंकरोति मध्यमह्नस्तदेहि संस्त्यायमेव (ञ) गच्छावः।

इत्याय परिक्रामतः।

माध। एवं हि मन्ये।

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्।
तत्प्रातर्विहितविचित्रपत्त्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि। (ट)

---

(३१) अनुमन्येतां मां महानुभावौ यावदेतद्भगवतो देवस्य मदनस्य सुचरितं प्रियसख्या लवङ्गिकाया निवेदयामि।

---

(ञ) संस्त्यायो गृहम्। संस्त्यायः सन्निवेशे च सङ्घातेऽपि च दृश्यत इति मेदिनीकारः।

(ट) घर्मेत्यादि। मालत्याः परिजनवारसुन्दरीणां कपोलकुङ्कुमानि प्रातर्विरचितविचित्रपत्त्रावलीवैदग्ध्यं यत्तदधुना मध्याह्ने जहति त्यजन्ति। कैः। घर्माम्भसो विसरस्य समूहस्य विवर्तनैर्विविधजलकणैः करणैः। अनेन नायिकायाः सुकुमारतया निःसहत्वमुक्तम्। मालत्याः कन्यात्वेन पत्त्रावल्यभावात्परिजनेत्युक्तम्। माङ्गल्यतया प्रातरेव कुङ्कुमेन पत्त्रावलीलिखनम्। अत एव वसन्तकालस्य शीतत्वात् कुङ्कुमेन भूषाकरणमिति सतमप्रास्तम्। भारा-

अपिच । उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो !
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्ग्न् पवन मम स्पृशाङ्गमङ्गम् ॥ (ठ)

मक । अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्तदारुणः
कलभं कठोर इव कूटपाकलः ॥ (ड)

---

विकृतवत्तुन्वरामुरभय इत्यभिधानाद्दर्शाकालप्रस्तावात् । समूहनिवह-व्यूहसंदोहविसरव्रजा इत्यमरः । इहोन्मादावस्था । अत एवात्र तत्संबद्धा कथा । यदाह । तत्संबद्धां कथां युङ्क्ते सर्वावस्थागता-मिह । इति ।

(ठ) उन्मीलदिति । हे पवन ! उन्मीलन्मुकुलेन विकचकोरकेण करालाद्विषमात् कुन्दगुच्छात् चरन्निविडमकरन्दस्य गन्धस्य तयोर्बन्धो । मकरन्दस्य यो गन्धस्तद्बन्धो तत्सहचरेति वा । ईदृशोऽपि त्वं मे न सुखाय किंतु तापायातस्तां मालतीमीषदालिङ्ग्यमाङ्गमङ्गं प्रत्यङ्गं स्पृश । अव्हतमयतदङ्गसङ्गशीतस्त्वं मम तापशान्तये भविष्यसीति भावः । यद्वा । तदीयतापशान्तिर्भवत्वित्यनुरागात्तामालिङ्गेत्युक्तम् । तां कीदृशीम् । प्रचलनेत्राम् । विरहे पवनस्य दुःसहत्वेन भयादितस्ततः चिप्तनेत्राम् । अत एव नम्रीभवदङ्गां च । इह विषमकुन्दकोश-संचरणेन गतिप्रतिबन्धान्मान्द्यं मकरन्दसङ्गाच्छैत्यं गन्धबन्धुतया सौगन्ध्यं च वायोरुक्तम् । ईषदालिङ्गेत्यनेन सुरभिपदेनाभिघात-निःसहत्वं मालत्यासुक्तम् । करालो दन्तुरे तुङ्ग इत्यमरः ।

(ड) माधवस्यानङ्गदुःसहत्वमाह । अभिहन्तीत्यादि । एष स्मरो-ऽनवग्रहः प्रतिरोधशून्यः कोमलकायं माधवं कथमचिरेणैवाभिहन्ति । हन्तानुकम्पायाम् । हन्त हर्षेऽनुकम्पायामित्यमरः । कीदृशः । विकृ॰

तदत्र भगवती कामन्दकी नः शरणम्। (ढ)

माध। स्वगतम्। आश्चर्यम्।

पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम्।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्ततिर्यगपवर्तितदृष्टि वक्त्रम्॥ (ण)

---

तस्य भावो वैकृतं तस्य विवर्तोऽन्यथावस्थानं तेन दारुणो दुःखदः। यथा कलभं करिबालकं मृदुकायं कठोरो दुःसहः कूटपाकलो हस्तिवातज्वरोऽचिरेण हन्ति तथेत्यर्थः। सोऽप्यनवग्रहोऽप्रतिकरणीयो विकृतिविवर्तदारुणश्च भवति। गजं वातज्वरो हन्ति तथा वै कूटपाकलः॥ इति वैद्यके।

(ढ) इदं स्वगतम्। स्वयमनध्यवसायादाह तदत्रेति। अत एव भगवती ज्ञानसंपन्नेह शरणं रक्षिका। द्वितीयाङ्कावतारोऽयम्। यदाह। अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूच्यते। वस्तुबीजमुपोद्घातैः सोऽङ्कावतार इष्यते॥

(ण) इदानीमुन्मादावस्थोद्भावनाबलात्तन्मयत्वमाह। पश्यामीत्यादि। तामेकामेव विवर्तमानां प्रपञ्चरूपां परितः सर्वत्र पश्यामीत्याश्चर्यम्। विवर्तमानत्वमेवाह। इत इत उभयपार्श्वे। पुरतोऽग्रे। पश्चात्पृष्ठे। अन्तर्मनसि। बहिर्बाह्यभागे। अनेन तदावेशात् सर्वत्र तन्मयत्वमुक्तम्। यदाह। यो येन भावेनाविष्टः सुखदेनेतरेण वा। स तदाहितसंस्कारः सर्वं पश्यति तन्मयम्॥ परित इत्यत्र पर्यभिभ्यां चेति तसिः। कीदृशीम्। वक्त्रं वहन्तीम्। उद्बुद्धं विकसितं मुग्धं कान्तं यत् सुवर्णपद्मं ततो निरतिशया भा दीप्तिर्यस्य तत्। तन्निभं तत्तुल्यमिति वा। एतेन गौरीत्वमुक्तम्। आसक्तेन मय्यासक्त्या तिर्यगपवर्तिता दृष्टिर्यस्य तत्। यथा भ्रान्त्या तयाहं दृष्टस्तथैव तां पश्यामीति भावः।

प्रकाशम् । वयस्य ! मम हि संप्रति

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥ (त)

इति निष्क्रान्ताः सर्वे । (थ)

इति वकुलवीथी (द) नाम प्रथमोऽङ्कः ।

---

(त) अधुना सर्वाकारेण पीडामाह । प्रसरतीत्यादि । वयस्य ! पश्य संप्रति मम कोऽप्यनिर्वचनीयस्वरूपो देहदाहः प्रसरति व्याप्नोति । अत एव परिमाथी सर्वतो मथनशीलः । करणानामिन्द्रियाणामर्थग्राहकत्वं मे प्रमोहस्तिरयति पिदधाति । सर्वेन्द्रियसंमोह इत्यर्थः । मम गतं शरीरम् । कष्टं । रणरणकस्य वियोगतरोर्वृद्धिमुपचयं बिभ्रदावर्तितं भ्राम्यदस्ति । यद्वा । रणरणः कामस्तस्य विवृद्धिमधिकाधिकदशागामित्वम् । मारो रणरणः कामो विषय इत्युत्पलिनी । तथा मम हृदयम् । कष्टं । अन्तर्दहति ज्वलतीत्यर्थः । तन्मयत्वं मालतीमयत्वं च धत्ते । ईदृशी मम दशा सद्य एव विपत्तिमादधाति । तदत्र यथावत्त्वमाचरेति भावः । अत्रावर्तीति व्याधिः । ज्वलतीत्युद्वेगः । तन्मयत्वमित्युन्मादः । हृदयस्य तु तन्मयत्वधारणेन दुःसहदशायामपि जीवनाशा दर्शिता । करणं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः ।

(थ) निष्क्रान्ता इति । बीजार्थं युक्तं कृत्वा निष्क्रमो भवति । यदाह । बीजार्थं युक्तियुक्तं च कृत्वा कार्यं यथारसम् । निष्क्रमं तत्र कुर्वीत सर्वेषां रङ्गवर्तिनाम् ॥ इति ।

(द) वकुलवीथीति । नानारससमायुक्ता सन्धिद्वयविभूषिता । अर्थप्रकृतिभिः पूर्णा स्यादेकाङ्का तु वीथिका ॥ त्रिभिः पात्रैः प्रयोज्येयमुत्तमाधममध्यमैः । कर्तव्या नायिका चात्र शृङ्गारद्वयसंयुता ॥

# द्वितीयोऽङ्कः ।



ततः प्रविशतश्चेट्यौ । (क)

प्रथमा । हला ! संगीदसालापरिसरे (ख) अवलोइदा-दुदीआ तुमं किं मन्तअन्ती आसी (१) ।

(१) हला ! संगीतशालापरिसरेऽवलोकिताद्वितीया त्वं किं मन्त्रयन्त्यासीः ।

इति भरतः । प्राह्वत यं रत्नधरो गुणाढ्यो गुणाढ्यरूपा दमयन्तिका च । जगद्धरं तवृक्षतटिप्पणेऽङ्को गतोऽयमाद्यो रसराजराजी ॥

इति प्रथमोऽङ्कः ।



(क) अधुना वकुलमालामादाय लवङ्गिका गता तां प्रतीक्षमाणा मालती सौधारूढ़ा तन्मार्गं पश्यति मकरन्दश्च कामन्दकी नः शरण-मित्युक्त्वा तां प्रति तत्कथनाय गत इति स्थिते चेट्योः प्रवेशः । चेटीभाषा सौरसेनी । यदाह । नायिकायां च चेट्यां च सौरसेनी प्रयुज्यते । न च नाटकप्रकरणयोरङ्काः कार्याः प्रत्यक्षनायका इति भरतादिक माधवप्रवेशाभावात् कथमङ्कावतार इति देश्यम् । मालत्या नायकत्वेन तत्सत्त्वात् । यदाह । गुरुः पुरोहितोऽमात्यो नायको नायिकापि च । सार्थवाह इति प्रोक्ताः षड़ेते नायका बुधैः ॥ इति ।

(ख) अत्र हला सखि । परिसरे निकटे ।

द्वितीया । सहि ! तेण किल माहवपिअवअस्सेण मअरन्देण सअलो ज्जेव्व मअणुज्जाणवुत्तन्तो (ग) भअवदीए णिवेदिदो (२) ।

प्रथ । तदो किं (३) ।

द्विती । तदो भट्टिदारिअं दट्ठुकामाए भअवदीए पउत्तिणिमित्तं अवलोइदा अणुप्पेसिदा । मए वि ताए कधिदं जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदि त्ति (४) । (घ)

प्रथ । हला लवङ्गिआ क्खु केसरकुसुमाइं अवचिणोमि त्ति (ङ) मअणुज्जाणादो ज्जेव्व णागदा ता किं संपदं संपत्ता (५) ।

---

(२) सखि ! तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्या निवेदितः ।

(३) ततः किम् ।

(४) ततो भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तमवलोकितानुप्रेषिता । मयापि तस्यै कथितं लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्तत इति ।

(५) हला लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति मदनोद्यानादेव नागता तत् किं साम्प्रतं संप्राप्ता ।

---

(ग) अत्र वृत्तान्तो वार्त्ता ।

(घ) भर्तृदारिका मालती । प्रवृत्तिर्वार्त्ता । विविक्तं विजनम् । इह मकरन्दाज्ज्ञातमाधवावस्थया कामन्दक्या प्रकृतविषयेऽवसरज्ञानार्थं मालतीवार्त्तां ज्ञातुं प्रहितावलोकितेति भावः ।

(ङ) अत्र केसरो वकुलः । अवचिनोमि त्रोटयामि । इति हेतौ ।

द्विती । अध इं । तं क्खु परापतन्तीं ज्जेव्व हत्थे गेह्णिअ पडिसिद्धपरिअणा भट्टिदारिआ उअरिअलिन्दअं (च) समारूढ़ा (६) ।

प्रथ । णूणं तस्स महाणुभावस्स संकधाए अत्ताणं विणोदेदि (७) ।

द्विती । निःश्वस्य । कुदो से आसासो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अस्सं च णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विसज्जो (८) । (छ)

प्रथ । किं त्ति (९) । (ज)

द्विती । पहवदि णिअस्स कण्णाजणस्स महाराओ

---

(६) अथ किम् । तां खलु परापतन्तीमेव हस्ते गृहीत्वा प्रतिषिद्धपरिजना भर्तृदारिकोपर्यलिन्दकं समारूढा ।

(७) नूनं तस्य महानुभावस्य संकथयात्मानं विनोदयति ।

(८) कुतस्तस्या आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विसृष्टः ।

(९) किमिति ।

---

(च) अत्र परापतन्तो सत्वरमागच्छन्ती क्षतकार्यत्वेन सत्वरमागमनं भूतधर्मः । उपर्यलिन्दकं बाह्यपट्टशालाया उपरीत्यर्थः ।

(छ) अत्रातिभूमिरुत्कर्षम् । अभिनिवेश आसक्तिः । कल्यं प्रातः । कल्लीति पाठे कल्लिशब्दो देशी पूर्वदिनवाचकः । अत एव कल्लि पल्लीनिवासिन इति ।

(ज) किं विसृष्टमित्यर्थः ।

त्ति। ता जादो पामरणं क्खु मालदीए हिअअसल्लं माह-वाणुराओ त्ति तक्केमि (१०)। (झ)

प्रथ। अवि णाम भअवदी किं पि भअवदित्तणं (ञ) एत्थ दंसइस्सदि (११)।

द्विती। अइ असंबद्धमणोरहे! एहि (१२)।

इति परिक्रम्य निष्क्रान्ते। प्रवेशकः। (ट)

ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च।

मालती। हुं सहि! तदो तदो (१३)। (ठ)

---

(१०) प्रभवति निजस्य कन्यकाजनस्य महाराज इति। तज्जात आमरणं खलु मालत्या हृदयशल्यं माधवानुराग इति तर्कयामि।

(११) अपि नाम भगवती किमपि भगवतीत्वमत्र दर्शयिष्यति।

(१२) अयि असंबद्धमनोरथे! एहि।

(१३) हुं सखि! ततस्ततः?

---

(झ) इदमभूताहरणं वाक्यम्। यदाह। अभूताहरणं तत्स्याद्-व्याक्यं कपटाश्रयम् ॥ वाक्यतत्त्वमज्ञात्वाह। अत दुःखदत्वेन शल्य-मिव शल्यम्। अजहल्लिङ्गम्।

(ञ) अत्रापिनाम संभावनायाम्। भगवतीत्वं ज्ञानादिवैभवम्।

(ट) निष्क्रान्ते चेट्यौ। प्रवेशक इति वक्तव्यस्य च बहुत्वादृस-भङ्गप्रसङ्गेनान्योक्त्या प्रवेशकः। यदाह। यत्तु प्रयोगबाहुल्यादङ्के-ऽर्थो न समाप्यते। बहुवृत्तान्तोऽल्पकथैः स विधेयः प्रवेशकैः॥ अङ्का-नामन्तरालेषु संक्षिप्तार्थप्रयोजनैः। भृत्यवर्गे कथाबद्धो विज्ञेयोऽयं प्रवेशकः॥

(ठ) हुं प्रश्ने। लवङ्गिकाकथितवकुलमालाप्रार्थनापर्यन्तश्रुत-वार्त्तया मालत्याग्रिमवार्त्ताकर्णनोत्कया पृच्छ्यत इत्यर्थः। विरहोत्-कण्ठितेयम्। यदाह। अनेककार्यसंयुक्तो यस्या नागच्छति प्रियः।

लवङ्गिका । तदो तेण महाणुभावेण उवणीदा मे इअं बउलमाला (१४) । इति मालामर्पयति ।

माल । गृहीत्वा सरूपं निर्वर्ण्य । सहि ! एकपासविसमपडिबद्धा (ड) क्खु एसा विरअणा (१५) ।

लव । एत्थ दाव अरमणीअत्तणे तुमं ज्जेव्व अवरज्झसि (१६) ।

माल । कधं विअ (१७) । (ढ)

लव । जेण सो मुद्धदुव्वासामलङ्गो तधा विहत्थीकिदो (१८) । (ण)

---

(१४) ततस्तेन महानुभावेनोपनीता मे इयं वकुलमाला ।

(१५) सखि ! एकपार्श्वविषमप्रतिबद्धा खल्वेषा विरचना ।

(१६) अत्र तावदरमणीयत्वे त्वमेवापराध्यसि ।

(१७) कथमिव ।

(१८) येन स मुग्धदूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः ।

---

तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥ प्रियकथापरत्वे मोट्टायितभावोऽयम् । यदाह । श्रुत्वा कथां प्रियजनस्य सखीमुखेभ्यः कर्णोदरस्थितचलत्तनुतर्जनीकम् । यत्साङ्गभङ्गमिह जृम्भितमङ्गनानां मोट्टायितं तदुदितं कविभिः पुराणैः ॥

(ड) प्रतिबद्धा घटिता ।

(ढ) मालती माधवचेष्टाकर्णनाकाङ्क्षया जानतीवाह कथमिव । कथं ममापराध इत्यर्थः ।

(ण) अत्र दूर्वेत्यादिना शृङ्गारित्वे तात्पर्यमुक्तम् । तयाऽनिर्वचनीयप्रकारेण । विहस्तो व्याकुलः ।

माल । पिअसहि लवङ्गिए ! सव्वधा आसासनसीलासि (१९) ।

लव । सहि ! का एत्थ आसासणसीलदा । णं भणामि । सो वि पिअसहीए मन्दमारुदुव्वेल्लन्तफुल्लपुण्डरीअविब्भमेहिं पढमारद्धवउलावलीविरअणावदेससंजमिदवलामोडिअवित्थरन्तेहिं लोअणेहिं विअम्भमाणविण्णत्थिमिददीहपेरन्तपरिअत्तणाविलासतण्डविदभूलदाविडम्बिदाणङ्गसारङ्गविब्भमविअड्ढं अवलोअअन्तो पच्चक्खीकिदो ज्जेव्व । (२०) । (त)

---

(१९) प्रियसखि लवङ्गिके ! सर्वथाश्वासनशीलासि ।

(२०) सखि ! काऽत्राश्वासनशीलता । ननु भणामि । सोऽपि प्रियसख्या मन्दमारुतान्दोलितफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमितबलामोड़विस्तृताभ्यां लोचनाभ्यां विजृम्भमाणविन्यस्तस्तिमितदीर्घपर्यन्तपरिवर्तनाविलास-ताण्डवितभ्रूलताविड़म्बितानङ्गशारङ्गविभ्रमविदग्धमवलोकयन् प्रत्यक्षीकृत एव ।

---

(त) अत्र स त्वयापि विलोचनाभ्यां पश्यन् प्रत्यक्षीकृतो दृष्ट एवेत्यन्वयः । अपिर्भिन्नक्रमः । उद्वेल्लत् कम्पमानम् । विभ्रमो विशिष्टा भ्रान्तिः सोऽयमित्याकारा । सादृश्यं वा विभ्रमः । माधवस्य पुण्डरीकाक्षत्वात् । विरचनापदेशेन घटनव्याजेन यः संयमोऽन्यादर्शनं तं प्रापिताभ्यां बलामोड़ा बलात्कारेण विस्तरं गच्छद्भ्याम् । बलामोड़िर्बलात्कारे देशी । यद्यप्यवलोकयन्नित्यनेन लोचनाभ्यामिति प्राप्तं तथापि विशिष्टलोचनप्रतिपादनार्थं तदुक्तम् । विजृम्भमाणो वर्धमानः । स्तिमितः स्निग्धः । दीर्घपर्यन्तमतिदीर्घम् । परिवर्त्तना पुनःपुनर्गमनं तत्र विलासो विशिष्टदृष्टिव्यापारस्तेन ताण्डवितया नर्तितया भ्रूलतया विड़म्बितः समीकृतोऽनङ्गशारङ्गविभ्रमः कामधनु-

भाव। लवङ्गिकां परिष्वज्य। अम्मो पिअसहि! किं दाव तस्स महाणुभावस्स साहाविआ ज्जेव्व मुहुत्तसंणिधाइणो जणस्स विप्पलम्भइत्तआ विलासा आदु जहा पिअसही संभावेदि (२१)। (थ)

लव। विहस्य साक्ष्यमिव। तुमं वि सहावेण ज्जेव्व तस्सिं अवसरे असंगीदअं णच्चाविदासि (२२)। (द)

---

(२१) अम्मो प्रियसखि! किं तावत्तस्य महानुभावस्य स्वाभाविका एव मुहूर्तसंनिधायिनो जनस्य विप्रलम्भयितृका विलासा अहोस्विद्यथा प्रियसखी संभावयति।

(२२) त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसंगीतकं नर्तितासि।

---

विलासस्ततो विदग्धमिति क्रियाविशेषणम्। गमनासनपाणिपादचेष्टा सविशेषं नयनभ्रुवां च कर्म। दयितोपगमे यदप्रयत्नात् क्रियते नूनमयं विलास उक्तः॥ इति भरतः। शारङ्गरङ्ग इति प्रयोगाच्छारङ्गेति भिन्नो रेफः॥ शारङ्गं धनुषि स्मृतमिति शाश्वतः। ततस्तदवलोकनविकलता मालत्यास्तत्वे हेतुरिति तात्पर्यमिह।

(थ) आमिति तदुक्तस्वीकारे। अम्मो इति पाठे अम्मो हर्षे वितर्के वा। विप्रलम्भितो विप्रलम्भं प्रापितः। तारकादित्वादितच्। ततः स्वार्थे कः। आदुशब्दोऽत्वाहोस्विद्वाचकः। शीलस्य बहुकालपरिवेद्यतया मुहूर्तमात्रसंनिधाने विप्रलम्भचिन्ता। किमिदं नयनविकारादिस्वाभाविकमानुरागिकं वेति ज्ञातुं न शक्यत इति भावः। विप्पलम्भइत्तका इति पाठे विप्रलम्भचिन्तका इति ज्ञेयम्।

(द) अत मन्मथेनेति शेषः। असंगीतकं निभृतन्त्यं यथा तथा नृत्यं कारितासीत्यर्थः। साक्ष्यं परहेषसहितम्।

माल । सलज्जम् । हुं तदो तदो (२३) । (ध)

लव । तदो पडिणिअत्तमाणजत्ताजणसंकुलेण अन्तरिदे तस्सिं मन्दारिआए घरं उवगदह्मि । ताए क्खु चित्तफलअं पभादे हत्थीकिदं आसी (२४) । (न)

माल । किंणिमित्तं (२५) ।

लव । तं क्खु माहवाणुअरो कलहंसओ णाम कामेदि (प) सा तस्स दंसइस्सदि त्ति । तदो पिअणिवेदिआ मन्दारिआ संवुत्ता (२६) ।

माल । स्वगतम् । णूणं तेणावि कलहंसएण तं पडिच्छन्दअं अत्तणो पहुस्स दंसिदं भविस्सदि । प्रकाशम् । सहि ! किं दाणिं दे पिअं (२७) ।

---

(२३) हुं ततस्ततः ।

(२४) ततः प्रतिनिवर्तमानयात्राजनसंकुलेनान्तरिते तस्मिन् मन्दारिकाया गृहमुपगतास्मि । तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत् ।

(२५) किंनिमित्तम् ।

(२६) तां खलु माधवानुचरः कलहंसको नाम कामयते सा तस्य दर्शयिष्यतीति । ततः प्रियनिवेदिका मन्दारिका संवृत्ता ।

(२७) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यति । सखि ! किमिदानीं ते प्रियम् ।

---

(ध) हुमिति प्रणयकोपे ।

(न) अत्र तस्मिन् माधवे । खलु हेतौ । हस्तीकृतं स्वाधीकृतम् ।

(प) अत्र कामयत इच्छति ।

लव । एदं क्खु संदाविदस्स संदावआरिणो दुल्लहमणो-रहाविसदूसहाभासदज्झन्तचित्तस्स क्खणमेत्तणिव्वावअं (फ) तुह पड़िच्छन्दअं (२८) । इति चित्रं दर्शयति ।

माल । अहर्षं निर्वर्ण्य । अहो दाणिं पि हिअअस्स मे अणासङ्गो (ब) जेण एव्वं पि आसासणं विप्पलम्भो त्ति संभावेमि । कधं अक्खराइं पि (२९) । इति वाचयति ।

जगति जयिनस्ते ते भावा नवेन्दुकलादय इत्यादि पूर्वोक्तं पठित्वा सानन्दम् । महाभाअ ! सरिसं क्खु दे णिम्मा-णस्स वअणं मधुरदाए लक्खीअदि । दंसणं उण तक्काल-मणोहरं परिणामदीहसंदावदारुणं । धण्णाओ क्खु ताओ कण्णकाओ जाओ तुमं ण पेक्खन्ति पेक्खिअ वा अत्तणो हिअअस्स पहवन्ति (३०) । (भ) इति रोदिति ।

---

(२८) एतत् खलु सन्तापितस्य सन्तापकारिणो दुर्लभमनोरथावेश-दुःसहायासदह्यमानचित्तस्य क्षणमात्रनिर्वापकं तव प्रतिच्छन्दकम् ।

(२९) अहो ! इदानीमपि मे हृदयस्यानासङ्गो येनैवमप्याश्वासनं विप्रलम्भ इति संभावयामि । कथमक्षराण्यपि ।

(३०) महाभाग ! सदृशं खलु ते निर्माणस्य वचनं मधुरतया लक्ष्यते । दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुणम् । धन्याः खलु ताः कन्यका यास्त्वां न प्रेक्षन्ते प्रेक्ष्य वात्मनो हृदयस्य प्रभवन्ति ।

---

(फ) अत्र दुर्लभायां त्वयि मनोरथाभिनिवेशस्तेन यो दुःसहा-यासस्तेन दह्यमाने चित्ते क्षणमात्रनिर्वापकमिति ।

(ब) अत्रानासङ्गोऽनाश्वासः । लवङ्गिका स्वयं लिखित्वा माधव-लिखितत्वेन बोधयतीति भावः ।

(भ) सदृशमिति । मधुरतया निर्माणस्य सदृशं वचनमित्यर्थः ।

लव। सहि! किं एव्वं पि दे णत्थि आसासो (३१)।

माल। सहि! कधं (३२)।

लव। जस्स कारणादो उक्खण्डिअबन्धणं विअ कङ्केल्लिपल्लवं किलम्मन्तणोमालिआकुसुमणीसहा परिक्खिज्जसि सो वि णाणाविदो भअवदा मम्महेण संदावस्स दूसहत्तणं त्ति (३३)। (म)

माल। कुसलं दाणिं तस्स महाणुभावस्स भोदु मम उण दुल्लहो आसासो। बाष्पम् (य)। विसेसदो अज्ज पिअसहि(३४)

(३१) सखि! किमेवमपि ते नास्त्याश्वासः।

(३२) सखि! कथम्।

(३३) यस्य कारणादुत्खण्डितबन्धनमिव कङ्केल्लिपल्लवं क्लाम्यन्नव-मालिकाकुसुमनिःसहा परिखिद्यसे सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुःसहत्वमिति।

(३४) कुशलमिदानीं तस्य महानुभावस्य भवतु मम पुनर्दुर्लभ आश्वासः। विशेषतोऽद्य प्रियसखि।

तवाकृतिर्मधुरा यथा तथा वचोऽपि मधुरमित्यर्थः। यस्येदृशं वचस्तस्य कथमेवं दर्शनमित्युपालम्भपूर्विका पृच्छा। यदाह। यत्र भावनयोपेतमात्मानमथवा परम्। पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिधीयते॥ नाट्यधर्मत्वेन परोक्षस्यापि प्रत्यक्षीकरणम्। यदाह। परोक्षेऽपि च वक्तव्यो नार्यां प्रत्यक्षवत्प्रियः॥ अम्बिकाशब्दः स्त्रियां कन्यायां वा देशी।

(म) अतोत्खण्डितं छिन्नम्। बन्धनं वृन्तशाखासंयोगः। कङ्केल्लिरशोकः। निःसहाक्षमा। परिखिद्यसे परिहीयसे। एतेन कामावस्था तनुतोक्ता।

(य) बाष्पं नेत्रजलम्।

संस्कृतमाश्रित्य। (र)

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव।
छिनत्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती॥ (ल)

लव। एव्वं क्खेव्व पच्चक्खसोक्खदाइणो परोक्खदुक्खदू-
सहा सज्जणसमागमा होन्ति। अविअ। जस्स वादाअ-
णन्तरमुहुत्तदंसणेण सविसेससमिद्धदुव्वहाअन्तपुसिमा-

---

(र) संस्कृतमिति। आसन्नमरणतया प्रकृतिविपर्ययद्योतनाय स्त्रियाः संस्कृताश्रयणम्। यद्वा। मरणसमये प्राकृतस्मरणस्य हीन-योनिजन्मफलकत्वेन बोधनात्तत्काले स्त्रियाः संस्कृताश्रयणम्। यद्वा। वैदग्ध्यद्योतनाय तत्। यदाह। संस्कृतभाषावाचः प्रायो नाद्ये खलु स्त्रियाः श्लाघ्याः। क्वचिदपि विदग्धतायाः प्रबोधनार्थं प्रशस्यन्ते॥

(ल) मनोराग इत्यादि। प्रियसखि! मामद्य त्रातुं न तातः प्रभ-वति न वा माता न वा त्वम्। कुतः। मनोराग आधिरविरतं प्रमाथी क्षोभकारी यथा तीव्रं विषं तथा विसर्पति व्याप्नोति। यथा धातु-त्वगादिषु विषं व्याप्नोति तथाङ्गानि मम उद्वेग इत्यर्थः। यद्वा। सवि-शेषदर्शनाच्चित्तानुराग इच्छाभेदस्तीव्रं यथा तथा मनो विसर्पति व्याप्नोति दाहकारित्वाद्विषमिव। तथा विधुतः संधुक्षितोऽग्निर्यथा ज्वलति विधूननान्निर्धूमं यथा तथा स एव रागो ज्वलति ज्वाला-मालाकुलीभवति। इत इतः सर्वत्र प्रत्यङ्गं छिनत्ति पीडयति गरी-यान्ज्वर इव। तं त्वद्य ममाधिस्त्वया समाधातुं न शक्यत इति भावः। यद्वा। तातस्त्रातुं न शक्नोति नन्दननिरासेन माधवाय मद्दानात्। अम्बापि न तथा। तथानुवर्तमानस्य तातस्यानिषेधात्। लवङ्गिकायाश्च तयोः समधीर्षिकया गणनं स्वाच्छन्द्येन समतप्रका-शनाय।

चन्दोदआ णिक्करुणकामव्वावारसंसइदजीविदा दे सरीरावत्था तस्स ज्जेव्व संपत्तसविसेसदंसणा भविअ अज्ज संतप्पसि त्ति किं एत्थ भणिदव्वं । ता पिअसस्सहि ! सलाहणिज्जं दुल्लहमणोरहफलं जीअलोअस्स गुरुआणुराअसरिसं महाणुभाअवल्लहसमाअमो त्ति एत्तिअं जाणीमो (२५) । (व)

माल । सहि दइदमालदीजीविदे साहसोवण्णासिणि अवेहि । सास्रम् । अहवा अहं ज्जेव्व वारं वारं पलोअअन्तो दुक्खव्ववत्थाविदधीरत्तणावट्ठम्भेण अत्तणो हिअएण दूर-

(२५) एवमेव प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति । अपिच । यस्य वातायनान्तरमुहूर्तदर्शनेन सविशेषसन्दृष्टकृतवक्रायमानपूर्णिमाचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था तस्यैव संप्राप्तसविशेषदर्शना भूत्वाद्य सन्तप्यसीति किमत्र भणितव्यम् । तत्प्रियसखि ! श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य गुरुकानुरागसदृशं महानुभाववल्लभसमागम इत्येतावज्जानीमः ।

(२६) सखि दयितमालतीजीविते साहसोपन्यासिनि अपेहि ।

(व) अत्र भणितव्यं युज्यत एवेत्यर्थः । यस्याव्यक्तं दर्शनं चन्द्राग्नित्वं जीवितसंशयं च कुरुते तस्य व्यक्तं दर्शनं त्वदुपन्यस्तप्रकारं तापं कुरुत इति किमत्र चित्रम् । चन्द्रेऽग्नित्वेन ग्लानाश्चिद्राच्छेद उक्तः । सुकुमारायामस्यामतिपीडाकारित्वेन निष्करुणत्वम् । व्यापारो दशावस्थः । किमत्र कर्तव्यमित्यत आह । तदिति । तथा च गुरुतरानुरागस्यैतत् फलं यत् सखीद्वारा वल्लभसमागमः कारयितव्य इति भावः ।

(ग) अत्र दयितं प्रियम् । महाकुलकलङ्कशङ्कया साहसम् । अत

विज्जम्भमाणदुव्विणअलहुएण एत्थ अवरज्झामि तधा वि पिअसहि (३६) ! (अ)

भूयः संस्कृतमाश्रित्य ।

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ (प)

---

अथवा अहमेव वारं वारं प्रलोकयन्ती दुःखव्यवस्थापितधीरत्वावष्टम्भेनात्मनो हृदयेन दूरविजृम्भमाणदुर्विनयलघुकेनात्रापराध्यामि तथापि प्रियसखि !

---

एव रोदनम् । तथाच त्वमपेक्षुपगच्छ । प्रियभाषिणी त्वां किमधिक्षिपामि यदहमेवात्र वाच्येत्याह । अथवेति । अत्र चणं चणमालोकनाकुलत्वाद्दुःखव्यवस्थापितं यद्धीरत्वं तस्यावष्टम्भोऽविद्यमानमेवैतद्दारोपस्तेनेत्यर्थः । लघ्वी लघुतां गता । अहमत्रापराध्यामीति येन तवैतादृशसाहसोपन्यास इति भावः । तथापि प्रियसखि !

(प) अधुना साहसाकरणं हृदि निधाय सनिर्वेदमाह । ज्वलत्वित्यादि । प्रतिरात्रं पूर्णचन्द्रो ज्वलतु तापयतु । तथापि न साहसं करोमीति भावः । गगन इत्यनेनाप्राप्यत्वादनुपागमनीयतोक्ता । तर्हि कामस्त्वां पीड़यिष्यतीत्यत आह । मदनो दहतु मृत्योर्मरणात्परं च किं करिष्यति । मरणे सति दुःखस्यापि त्यागादिष्टमेव तदिति भावः । परेणेति । प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । इदं नायिकायाः सत्त्वजधैर्यम् । यदाह । चापलेनानुपहतं चित्तं धैर्यमुदीरितम् ॥ ननु दुःखहानाय माधवानुसरणमेव वरमत आह । मम पुनस्तातः पिता दयित इष्टः । कीदृशः । श्लाघ्यः सर्वश्लाघाविषयः । अमलवंशा मातेष्टा । निर्मलं कुलं चेष्टम् । अयं हृदिस्थो जनो माधवो नैवेष्टः ।

लव । स्वगतम् । एत्थ दाणिं को उवाओ (३७) । (ख)

अथ नेपथ्यार्द्धप्रविष्टा प्रतीहारी । एसा भअवदी कामन्दई (३८) । (ङ)

उभे । किं भअवदी (३९) । (च)

प्रती । भट्टिदारिअं दट्ठुकामा आअदा (४०) ।

उभे । तदो किं विलम्बीअदि (४१) ।

प्रतीहारी निष्क्रान्ता ।

मालती चित्रं प्रच्छादयति ।

---

(३७) अत्रेदानीं क उपायः ।

(३८) एषा भगवती कामन्दकी ।

(३९) किं भगवती ।

(४०) भर्तृदारिकां द्रष्टुकामागता ।

(४१) ततः किं विलम्ब्यते ।

---

बाह्यक्रियेति शेषः । तर्हि कथं जीवनमत आह । न च जीवितमिष्टम् । अत जीवितद्वेषादुद्वेगावस्था । यदाह । प्रद्वेषः प्राणितव्ये यः स उद्वेगः स्मृतो बुधैः ॥

(ख) उद्वेगनाशोपायं चिन्तयन्ती लवङ्गिकाह । अत्रेदानीं क उपायः ।

(ङ) प्रतीहारी । एषा भगवती कामन्दकी । मालतीजीवनोपाय इति भावः । प्रतीहारीत्यनेन संबन्धघटनं सूचितम् । यदाह । संधिविग्रहसंबन्धनानाचारसमन्वितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः ॥ प्रतीहारीत्यत्र बहुलवचनात्क्षुप्येऽपि दीर्घः ।

(च) उभयोर्वाक्ये । किमर्थमागतेत्यर्थमागतेत्यर्थः । अत एषाभिमवाक्ये तद्यापारकथनम् ।

लव। स्वगतम्। सुसमोहिदं क्खु जादं (४२)। (क)

ततः प्रविशति कामन्दक्यवलोकिता च।

काम। साधु सखि भूरिवसो साधु। प्रभवति निजस्य कन्यकाजनस्य महाराज इत्युभयलोकाविरुद्धं वचनमुपन्यस्तम्। अपिच। अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरनुकूलतामवगच्छामि बकुलावलीचित्रफलकव्यतिकरसंविधानकौतुकमङ्गुतं प्रमोदमुल्लासयति। इतरेतरानुरागो हि दारकर्मणि पराध्यं मङ्गलं गीतश्चायमर्थोऽङ्गिरसा यस्यां मनश्चक्षुषोरनुबन्धस्तस्यामृद्धिरिति। (ख)

अव। एसा मालदी (४३)।

काम। निर्वर्ण्य।

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा

कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी।

---

(४२) सुसमीहितं खलु जातम्।

(४३) एषा मालती।

---

(क) सुसमीहितं खलु जातम्। इदानीं यत् कामन्दक्यागमनमिति भावः।

(ख) उभयेति। इहलोकाविरुद्धं साक्षादप्रतिषेधेन राजकोपाजननात्। परलोकाविरोधस्तु कन्यायाः कुमारीजनस्य प्रभुर्न परस्येति शास्त्रार्थोल्लङ्घनाभावादुदीरणादित्यर्थः। व्यतिकरो मिलनं तद्रूपं संविधानम्। दारकर्मणि परिणये। पराध्यं श्रेष्ठम्। अनुबन्धो रतिः। ऋद्धिरुपचयः।

(ग) निकाममित्यादि। इयं कल्याणबालकं मनो रमयति। कुतः। अत्यर्थं क्षीणाङ्गी। सरस आर्द्रोऽपर्युषित इति यावत्। कदल्या

अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥ (ग)

अपि च । परिपाण्डुपांसुलकपोलमाननं
दधती मनोहरतरत्वमागता ।
रमणीयजन्मनि जने परिभ्रम-
न्नँलितो विधिर्विजयते हि मान्मथः ॥ (घ)

अथवा । नियतमनया संकल्पनिर्मितः (ङ) प्रियसमागमोऽनुभूयते ।

तथाह्यस्याः

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः
स्वेदश्चनुर्मसृणमधुराकेकरस्निग्धमुग्धम् ।
गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
गण्डाभोगे पुलकपटलं मूर्च्छना चेतना च ॥ (च)

---

गर्भो मज्जा तद्वद्रम्या क्षीणत्वपाण्डुत्वाभ्याम् । इह गर्भपदेनातिपाण्डुत्वं चोक्तम् । कलाशेषा शशिनो मूर्तिरिव द्वितीयाचन्द्रलेखेव । अत एव प्रस्तुतकार्यसंपादकत्वेन रमयति । उद्दाहेनोत्कटदाहेन विह्वलां दशामापन्ना सती मनः कम्पयति । अतिपीड़नादनिष्टशङ्कित्वादिति भावः । इह तनुताख्या कामदशा सूचिता ।

(घ) परीत्यादि । पांसुलं रूक्षम् । पाण्डुरूक्षकपोलवदनापीयं रम्या । यतो मनोज्ञजन्मनि जने वलन् कामस्य विकारो यादृशस्तादृश ईप्सितः सन्विजयी भवति ।

(ङ) संकल्पो मनोव्यापारः ।

(च) नीवीत्यादि । जघनवस्त्रबन्धनं नीवी । तस्या बन्धस्य यन्मे-दुच्छ्वसनं शिथिलता । वासःश्लथतानुरागादपि । यदाह । स्वेदोद-

इत्युपसर्पति।

लवङ्गिका मालतीं चालयति। उभे उत्तिष्ठतः।

माल। भअवदि! वन्दामि (४४)। (क)

(४४) भगवति! वन्दे।

वेपथुस्तम्भः स्रथता जघनच्छेदे। आविर्भवति नारीणामनुरागवशात्मनाम्॥ अधरस्पन्दनमधरकम्पनम्। एतत्तु स्फुरितचुम्बने। यदाह। रदने विशन्तमोष्ठं ग्रहीतुं या समिच्छति। निजोष्ठः कम्पते यत्र स्फुरितं चुम्बनं मतम्॥ दोर्विषादो बाह्वोर्निःसहत्वम्। आलिङ्गनौत्सुक्यात्। खेद आयासात्। मसृणं कोमलम्। मधुरं ललितम्। संकल्पलब्धस्य दुरालोकत्वादाकेकरम्। शृङ्गारात् स्निग्धम्। सुखभावनया मुग्धम्। चक्षुः। संकल्पमात्रलब्धतया प्रियेऽसूयायोगाज्जिह्मा दृष्टिः। जिह्मा दृष्टिरसूयायाम्। यदाह। ललिताकुञ्चितपुटा शनैस्तिर्यग्विसर्पिणी। निगूढागूढतारा च जिह्मा दृष्टिरुदाहृता॥ लब्धे सति धृतिहर्षाभ्यां ललितम्। तल्लक्षणं तृक्तमेव। आकेकरा घनालोके विच्छेदे प्रोषितेषु च। आकुञ्चितपुटापाङ्गसंगतार्धनिमेषिणी॥ मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा मता॥ दोर्दोषा भुजा भुज इति शब्दभेदः। गात्रस्तम्भः शरीरनिश्चलता। अतिहर्षात्। यदाह। अतिहर्षभयरोषरागेभ्यः स्तम्भसंभवः॥ मुकुलाकारत्वात् स्तनावेव मुकुलौ। तयोरलब्धो विच्छेदरहितः कम्पः। प्रियस्य गाढालिङ्गनात्। गण्डाभोगे गण्डमण्डले पुलकपटलं रोमाञ्चसंघः। प्रियचुम्बनसंकल्पात्। आत्यन्तिकत्वार्थं पटलग्रहणम्। मूर्छना मोहः। निरतिशयानन्दयोगात्। यदाह। स्रस्तता वपुषि मीलनं दृशोर्मूर्छना च रतिलाभलक्षणम्॥ रतिविलाससंकल्पेनान्तरा चेतना च।

(क) बौद्धानां प्रव्रजितं प्रति वन्दामीति नतिसंप्रदायः। यद्वा। वन्दामि वन्द इति सामान्यत एव।

काम । महाभागे ! समीहितफलभाजनं (ज) भूयाः ।

लव । सुविहिदं आसणं एत्थ उवविसदु भअवदी (४५) ।

सर्वा उपविशन्ति ।

माल । कुसलं भअवदीए (४६) ।

काम । निःश्वस्य । कुशलमिव ।

लव । स्वगतम् । पत्थावणा क्खु एसा कवडणाडअस्स । प्रकाशम् । गुरुअवाहत्थम्भमन्थरिदकण्ठपडिलग्गणीसासं (झ) अण्णारिसं ज्जेव्व भअवदीए वअणं । ता किं दाणिं उव्वेअकारणं भविस्सदि (४७) ।

काम । नन्वयमेव चीरचीवरविरुद्धः परिचयः । (ञ)

लव । कधं विअ (४८) ।

काम । अयि किं न जानासि ।

(४५) सुविहितमासनमत्रोपविशतु भगवती ।

(४६) कुशलं भगवत्याः ।

(४७) प्रस्तावना खल्वेषा कपटनाटकस्य । गुरुकवाष्पस्तम्भमन्थरितकण्ठप्रतिलग्ननिःश्वासमन्यादृशमेव भगवत्या वचनम् । तत् किमिदानीमुद्वेगकारणं भविष्यति ।

(४८) कथमिव ।

(ज) मालतीचित्तविनोदाय स्वस्य च तद्विषयावष्टम्भदर्शनायाह । भाजनमिति ।

(झ) कपटमेव नाटकम् । यत्र वाष्पं नेत्रजलम् । स्तम्भः प्रतिबन्धः । मन्थरितो मन्दीकृतः । तादृशकण्ठे प्रतिलग्नो निःश्वासो यत्र तत् ।

(ञ) परिचयो मालत्यभिव्यङ्गः । उद्वेगकारणमिति शेषः ।

इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम्।
अनुचितवरसंप्रयोगशोच्यं विफलगुणातिशयं भविष्यतीति॥(ट)

मालती वैचित्र्यं नाटयति। (ठ)

लव। अत्थि एदं णरेन्दवअणाणुरोहिणा अमच्चेण णन्द-णस्स पडिवण्णा मालदित्ति सअलो जणो अमच्चं जुगु-प्सेदि (४९)। (ड)

माल। स्वगतम्। कधं उवहारीकिदह्मि ताद्दणो तादेण (५०)। (ढ)

काम। आश्चर्यम्।

(४९) अस्त्येतन्नरेन्द्रवचनानुरोधिनामात्येन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सते।

(५०) कथमुपहारीकृतास्मि राज्ञस्तातेन।

(ट) इदमित्यादि। मालत्या इदं शरीरं विफलगुणातिशयं भविष्यतीति त्वं किं न वेत्सि। अनुचितजामातृसंबन्धशोचनावहम्। यतः। इह जगति यत् कामस्य जैत्रं जयनशीलमस्त्रं सहजविलासस्य निबन्धनं कारणं च। एतेनैव सहजविलासा जायन्त इत्यर्थः। वरो जामातरि श्रेष्ठ इति विश्वः।

(ठ) वैचित्र्यं विमनस्कत्वम्। नाटयति करोति।

(ड) पितृनिन्दैव पूर्वश्लोकार्थ इति द्योतयति लवङ्गिका। अत्र जुगुप्सते निन्दति।

(ढ) अत्रानुपहरणीयाप्युपहारीकृतेत्यनेन पर्यायेण पितुर्दान-भिन्नत्वं सूचितम्। उपहारश्च मरणपरणच्छागादिः क्रियत इति मरणतुल्यतास्य दर्शिता। इह पश्चात्तापनामा नाट्यालङ्कारः। यदाह। अनुतापातिरेकस्तु पश्चात्ताप उदाहृतः॥ इति।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स हि नो नन्दन इति ॥ (थ)

माल । स्वगतम् । राआराहणं क्खु तादस्स गुरुअं ण उण मालदी (५१) ।

लव । एव्वं जधा भअवदीए आसत्तं । अण्णधा तस्सिं वरे दुद्दंसणे अदिक्कन्तजोव्वणे किं त्ति (त) ण विआरिदं अमच्चेण (५२) ।

(५१) राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती ।

(५२) एवं यथा भगवत्याख्यातम् । अन्यथा तस्मिन्वरे दुर्दर्शनेतिक्रान्तयौवने किमिति न विचारितममात्येन ।

---

(थ) बालत्वात् स्नेहाच्च तातस्य गुणानभिज्ञत्वं मालती न जानातीत्याशयेनाह गुणेत्यादि । इदं कार्यं गुणनिरपेक्षममात्येन कथमारब्धम् । रूपादिमति पुरजने सति तद्रहितनन्दनाय मालतीदानं कथमुपक्रान्तमिति भावः । अत एवाश्चर्यम् । अथवा पक्षान्तरे । कुटिलनये परवञ्चननीतौ कुशलचित्तानां कुतोऽपत्यस्नेहः । नैवेत्यर्थः । स्नेहस्य निरुपाध्युपकारेच्छारूपस्य नृपानुरञ्जनादावुपाधावभावादित्यर्थः । इदं यदुपक्रान्तं तदैदंपर्यमिदंपरम् । एतदभिप्रायकमिति यावत् । चतुर्वर्णादित्वादिदंपरशब्दे ष्यञ् । उत निश्चये वितर्के वा । यन्नृपतेर्नर्मसचिवो नन्दनः कन्यादानादस्माकं मित्रमनपकारी भवत्विति त्वेवमुपक्रान्तम् । निष्णात इत्यत्र निनदीभ्यां स्नातेः कौशल इति षत्वम् । उत निश्चयवितर्कयोरिति धरणिः । कामोपचरणं नर्म । यदाह । उपचारः स्त्रीपुंसयोर्मनोजन्मनिबन्धनः । स एवात्र परिज्ञेयो नर्मसंज्ञः प्रयोक्तृभिः ॥ इति भरतः ।

(त) इतीति दुर्दर्शनादिकम् ।

माल । स्वगतम् । हा इदम्हि समुत्थिदाणत्थवज्जपड़णा मन्दभाइणी (५३) ।

लव । ता भअवदि पसीद परित्ताहि इमादो जीविद-मरणादो(घ) पिअसहिं तवावि एसा दुहिदा ज्जेव्व (५४) ।

काम । अयि सरले ! किमत्र मया भगवत्या शक्यम् । प्रभवति प्रायः कुमारीणां जनयिता दैवं च । यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकम इत्या-ख्यानविद आचक्षते वासवदत्ता च संजयाय राज्ञे पित्रा दत्तमात्मानमुदयनाय प्रायच्छदित्यादि तदपि साहसा-भासमित्यनुपदेष्टव्य एवायमर्थः (ङ) । सर्वथा

---

(५३) हा हतास्मि ! समुत्थितानर्थवज्रपतना मन्दभागिनी ।

(५४) तद्भगवति प्रसीद परित्रायस्वास्माज्जीवितमरणात्प्रियसखी तवाप्येषा दुहितैव ।

---

(घ) अत्र जीवितमपि निष्फलत्वदुःखबहुलत्वाभ्यां मरणकल्पं जीवितमरणम् ।

(ङ) उक्तप्रबन्धेन मालतीनैराश्यं विधायाह । अयीति । भग-वत्येति कल्यानां कर्तरि वेति तृतीया न तु षष्ठी । अशक्यमित्यकार-प्रश्लेषसंभवात् । गान्धर्वविवाहे कन्यावरौ प्रभवत इति प्रायःपदतात्-पर्यम् । जनयितेति । न राजेति भावः । माधवविवाहे भूरिवसुरेव साग्रहः । अत एव सरल इत्युक्तम् । किल प्रसिद्धौ । कौशिकी कुशिकवंशजा । चकमे कामयते स्म । आख्यानं पुरावृत्तम् । इत्या-ख्याननामा नाट्यालङ्कारः । यदाह । आख्यानं तु तदुद्दिष्टं यत् पुरा-वृत्तकीर्तनम् ॥ इति । निदर्शननामा नाट्यालङ्कारोऽपि । यदाह । कथनादन्यचेष्टानां साध्यसिद्धिर्निदर्शनम् ॥ इति । कल्पपदेनोपदेष्ट-व्यत्वसूचनम् ।

राज्ञः प्रियाय सुहृदे सचिवाय कार्या-

द्दत्वात्मजां भवतु निर्वृतिमानमात्यः ।

दुर्दर्शनेन घटतामियमप्यनेन

धूमग्रहेण विमला शशिनः कलेव । (ध)

माल । (अस्रं) स्वगतम् । हा ताद ! तुमं पि मम णाम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए (५५) । (न)

लव । चिराअदं भअवदीए । णं भणामि पसत्थसरीरो महाभाओ माहवो त्ति (५६) । (प)

काम । दूरं गम्यते । वत्से ! अनुजानीहि माम् ।

लव । जनान्तिकम् । सहि मालदि ! संपदं भअवदीपसादो तस्स महाणुभावस्स उग्गमं जाणीमो (५७) । (फ)

---

(५५) हा तत ! त्वमपि मम नामैवमिति सर्वथा जितं भोगतृष्णया ।

(५६) चिरायितं भगवत्या । ननु भणामि प्रशस्तशरीरो महाभागो माधव इति ।

(५७) सखि मालति ! सांप्रतं भगवतीप्रसादात्तस्य महानुभावस्योद्गमं जानीमः ।

---

(ध) अधुना साहसेऽपि प्रवृत्त्यर्थं मालत्यनुशयाय पितुर्वरस्य च दोषमाह । राज्ञ इति । कार्याद्दाराधनादेर्न त्वदृष्टार्थमित्यर्थः । अनेन सचिवेन । वार्धक्यात् कौरूप्याच्च दुर्दर्शनेन । धूमग्रहेण राहुणोत्पातधूमग्रहेण वा । पीडाकारित्वाद्दुर्दर्शनेन । ग्रहणं ग्रहः ।

(न) मालती जातानुशयाह । एवं निःस्पृह इत्यर्थः । भोगेति । स्वभोगाय त्वमेवं करोषीत्यर्थः ।

(प) अत्र चिरायितं बहुकालमागतम् । इतीति । अतः शीघ्रं गम्यतामिति भावः ।

(फ) जनान्तिकमिति । उक्तस्याश्रवणं कार्यात्पार्श्वस्थैः स्याज्ज-

माल । अपवार्य । सहि ! अत्थि मे कोदूहलं (५८) । (ब)

लव । प्रकाशम् । को एसो माहवो णाम जस्स (भ) भअ-वदी सिणेहगुरुअं अत्ताणं धारेदि (५९) ।

काम । अप्रास्ताविकी महत्येषा कथा । (म)

लव । तधावि आचक्खदु भअवदी । पसादं करेदु (६०) । (य)

काम । श्रूयताम् । अस्ति विदर्भाधिपस्य नरपतेरमात्यः समग्रधुर्यंपुरुषप्रकाण्डचक्रचूड़ामणिर्देवरातो नाम यस-शेषभुवनसहनीयपुण्यमहिमानमात्मनः सतीर्थ्यं पितैव ते जानाति योसौ याद्दशश्चे ति (र) । अपिच ।

---

(५८) सखि ! अस्ति मे कौतूहलम् ।

(५९) क एष माधवो नाम यस्य भगवती स्नेहगुरुकमात्मानं धारयते ।

(६०) तथाप्याचष्टां भगवती । प्रसादं करोतु ।

---

नान्तिकम् ॥ इति भरतः । लवङ्गिका मालतीं साकाङ्क्षयति । उद्गम-सुत्पत्तिम् ।

(ब) अस्ति मे कुतूहलम् । तदृच्छेत्यर्थः ।

(भ) अत्र यस्य कृत इति शेषः ।

(म) सङ्गतिमावहितुमाह । अप्रास्ताविकीति । अयमाशयः । माधवगुणस्तुतावुपाधिमाशङ्क्य मालत्या अनादरे मम तटस्थता न घटेत ।

(य) अतः सानुबन्धं पृच्छत्विति सानुबन्धमियमप्य हेति ।

(र) समग्रः संपूर्णः । धुरि कार्यभारे साधुर्धुर्यो मन्त्री । प्रकाण्डं

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनं मङ्गलानां
कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ (ल)

माल। सहि ! तं क्खु भअवदीगहिदणामहेअं सव्वदा तादो सुमरेदि (६१)। (व)

---

(६१) सखि ! तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति ।

---

प्रशस्तम् । चूडामणिरिव चूडामणिः श्लाघ्यः । सर्वमन्त्रिप्रधानमित्यर्थः । महनीयं पूज्यम् । पुण्यं प्रशस्तम् । यद्वा । महनीयौ पुण्यमहिमानौ यस्य तम् । सतीर्थ्य एकगुरुः । समानं तीर्थमुपाध्यायो यस्य । तीर्थे य इति यत्प्रत्ययः ।

(ल) व्यतिकरितेत्यादि । इह जगति कथमपि शापादिना तादृशाः स्वर्गिणः संभवन्ति । कीदृशाः यशोभिर्व्याप्तदिक्स्वरूपाः । श्वेतमानैरिति वर्तमाननिर्देशेन शेषामभिनवयशोयोगित्वमुक्तम् । बलवतां पुण्यविपाकानां त एव स्थानम् । त एव महापुण्यशालिन इत्यर्थः । यद्वा । पुण्यविलासानां बलवतां च त एव स्थानम् । तथा च पुण्यवन्तो बलवन्तश्च त एवेत्यर्थः । अत एवाधिकमहत्त्वाः । मङ्गलानामर्थसिद्धानां केतनं निवासः । केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोरिति विश्वः ।

(व) अत्र नामापदर्शं स्वगुरुत्वेनाङ्गीकारात् । गुरोर्नाम न गृह्णीयादिति श्रुतेः । तं देवरातम् ।

लव। सहि! समं किल विज्जाहिगमो किदो त्ति तक्कालवेदी जणो मन्तेदि (६२)। (ग)

काम। तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान्।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः॥ (घ)

लव। जनान्तिकम्। सहि! अवि णाम माहवो भवे (६३)।

---

(६२) सखि! समं किल विद्याधिगमः कृत इति तत्कालवेदी जनो मन्त्रयते।

(६३) सखि! अपि नाम माधवो भवेत्।

---

(ग) अत्र समं तुल्यं यथा तथा पाठः कृतो देवरातभूरिवसुभ्याम्। मन्त्रयन्ते कर्णाकर्णिकया वदन्ति।

(घ) प्रकृतसिद्ध्यर्थं पितृगुणानुक्त्वा नायकगुणानाह तत इत्यादि। ततो देवरातादेक एव बालचन्द्र उदियाय। एको बालो जात इत्यर्थः। यद्वा। बालश्चन्द्र इव बालचन्द्रः। एकापत्यतया स्नेहाधिक्यसूचनार्थमेकपदग्रहणम्। धरायामेकाधिपत्यकथनाय वा। कीदृशः। स्फुरिता व्यक्तीकृता गुणानां शीलादीनां या द्युतिरौज्ज्वल्यं तया सुन्दरः। यद्वा। स्फुरितगुणद्युतिश्चासौ सुन्दरश्चेति। कलावांश्चतुःषष्टिकलायुक्तः। नायके वर्णयेद्दूती कलावत्त्वं च रम्यताम्। इति भरतः। नयनवतां चक्षुष्मतां महोत्सवस्य कारणम्। नेत्रप्रीतिजनकत्वात्। यथोदयगिरेरेको बालचन्द्रोऽभिनवश्चन्द्र उदेति सोऽपि स्फुरितगुणोन्मीलनैर्मल्यादिका या द्युतिः प्रभा तया सुन्दरः कान्तः कलावान्लोकानन्दहेतुश्च भवति।

काम। असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ (ख)

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकी-मधिगच्छति(ङ)। स एष माधवो नाम।

माल। सानन्दं जनान्तिकम्। सहि! सुदं तुए (६४)। (च)

---

(६४) सखि! श्रुतं त्वया।

---

(ख) बालत्वादितस्तदनागमनमाशङ्क्याह। असावित्यादि। असौ शिशुरपि बालोऽपि संप्रतीहागतः। अस्तीति शेषः। कीदृशः। विद्याधारः। तर्कतदङ्गविद्यावित्। बालः पञ्चदशवर्षवयस्कः। बालो वाप्यूनषोडश इति वचनात्। भवनाद्विनिर्गत्य बहिर्भूय। अनेन पथिकत्वमपास्तम्। यौवनमाह। अविकलः पूर्णो यः शारदशशी तस्मान्मनोज्ञस्तद्वद्वा मनोज्ञः। यद्दृष्टिविषये पुरं नारीणां कटाक्षैः संजातनीलनलिनगवाक्षमिव भवति। कुवलयितमित्यत्र तारकादित्वादितच्। कीदृशैः। उन्मादतरलैः कामावेशचपलैः। यदायं रथ्यया याति तदोन्मादान्विता युवत्यो वातायनेनैनं पश्यन्ति। तत्र तन्नयनैः संजातकुवलयमिव लक्ष्यत इत्याशयः। अनेन विद्यावत्त्वनूतनत्वरम्यत्वादिकमुक्तम्।

(ङ) विद्यामित्यनेन विद्यावशेनायात इत्यनौद्धत्यं संबन्धार्थदेवरातप्रस्थापनगोपनं च कृतम्।

(च) सखि! श्रुतं त्वया। एतेनाभिलाषं दर्शयति।

लव। सहि! कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो त्ति (६५)। (क)

नेपथ्ये शङ्खध्वनिः।

काम। अहो कालातिपातः (ख)। संप्रति हि।

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-
मवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः।
दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति॥ (ग)

तदुत्तिष्ठामः। इत्युत्तिष्ठन्ति।

---

(६५) सखि! कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति।

---

(क) लवङ्गिकैतद् द्रढ़यति। अनेन महाकुलीनत्वं न तु काम-न्दक्याः कल्पनेति दर्शितम्।

(ख) कालातिपातः कालक्षेपः।

(ग) क्षिपन्नित्यादि। संप्रति गगनेऽयं संध्याशङ्खध्वनिः संध्या-कालसूचकः शङ्खशब्दो विचरति श्रूयते। किं कुर्वन् विहगमिथुनानां चक्रद्वन्द्वानां प्रत्यासन्नविरहात्प्राप्तोत्कण्ठानाम्। निद्रैव मुद्रा। संभा-षणप्रतिरोधात्। तां प्रथमतः क्षिपन् हरन्। कीदृशीम्। मदन-कलहः सुरतं तस्य छेदोऽवसानं तेन सुलभाम्। यद्वा। मदनकलह-श्छिद्यतेऽनेनेति घञ्। पुंसि संज्ञायामिति वा घः। मदनकलह-च्छेदो रतं ततः सुलभाम्। सुरतश्रमजनितामित्यर्थः। संप्रति धवल-गृहाणां महत्सु गह्वरप्रदेशेषु प्रतिध्वनितो घनतां दधानः। अत एवानिभृतः प्रौढः सन् विचरति। यद्वा। प्रथमतः खे विचरति तदनु दिवाकैलिककलहच्छेदात् सौधसमीपतरुनिवासकवविहङ्गमिथुनानां निद्रा-

माध । अपवार्य । कधं उवहारीकिदह्मि राइणा तादेण राआराहणं क्खु तादस्स गुरुअं ण उण मालदी । सास्रम् । हा ताद ! तुमं पि णाम मम एव्वं त्ति सव्वधा जिदं भोअतिह्णाए । सानन्दम् । कधं महाकुलप्पभवो (घ) वि सो महाभाओ । सुभणिदं पिअसहीए कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो त्ति । अवि णाम तं पुणो वि पेक्खिस्सं (६६) ।

लव । अवलोइदे ! इदो इदो एदिणा सोवाणेण (ङ) ओदरह्म (६७) ।

काम । अपवार्य । साधु संप्रति मया तटस्थयेव मालतीं प्रति निसृष्टार्थदूतीवृत्तस्य लघूकृतो भारः (च) । तथाहि ।

---

(६६) कथमुपहारीकृतास्मि राज्ञा तातेन राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती । हा तात ! त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया । कथं महाकुलप्रभवोऽपि स महाभागः । सुभणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये ।

(६७) अवलोकिते ! इत इत एतेन सोपानेनावतरावः ।

---

मुद्रां क्षिपन् विचरति । ते हि प्रबलशङ्खध्वनिनिबोधिताः कलकलं कुर्वन्तीति भावः ।

(घ) अपवार्य निभृतम् । निगूढ़भावसंयुक्तमपवारितकं भवेत् ॥ इति भरतः । अधुना मनःप्रविष्टसाहसवाञ्छया ब्रूते ।

(ङ) संजननेनेति पाठे संजननं सोपानमेव ।

(च) तटस्थतया घटितकत्वेन साधुत्वम् । निसृष्टार्थेति । स्त्रीपुंसयोरागमसादधाना स्वयं च कार्यं प्रतिपादयन्ती । सृष्टार्थिका वा

वरेऽन्यस्मिन् द्वेषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपद्वी ।
स्तुतं तन्माहात्म्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ विधिविधेयः परिचयः । (क)

इति परिक्रम्य निष्क्रान्ताः सर्वे ।

धवलगृहो नाम द्वितीयोऽङ्कः । (ज)

---

परदारयोगे दूती नियोज्या बहुधा सुधीभिः ॥ इति भरतः । मालतीं प्रतीत्यनेन मदयन्तिकां प्रति विद्यत एवेति भावः ।

(क) प्रकृते निष्पन्नं स्वव्यापारमाह । वर इत्यादि । अन्यस्मिन् वरे नन्दने द्वेषः कारितः । पितरि निन्दा जनिता । पुरावृत्तोद्गारैः शकुन्तलादीनां पितृनिरपेक्षात्मदानकथनैः कार्य्यपरिपाटी कथिता । माहात्म्यं महत्त्वं तस्य स्तुतं यत् कुलाद्यच्च गुणात्तदपि । इति हेतोः । अनन्तरं वत्सस्य परिचयः समागमो विधातुः कर्त्तव्यः । एतेनाङ्कावतारोऽपि सूचितः । प्रसङ्गाद्व्याजादन्यापदेशादिति सर्वत्र योज्यम् ।

(ज) धवलगृह इति धवलगृहोपलक्षित इत्यर्थः । यस्तूत यं रत्नधरोऽनवद्योऽनवद्यरूपा दमयन्तिका च । जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमद्द्वितीयो रत्नराशिवासः ॥

इति द्वितीयोऽङ्कः ।

---

# तृतीयोऽङ्कः ।



ततः प्रविशति बुद्धरक्षिता । (क)

बुद्ध । परिक्रम्याकाशे । अवलोइदे ! अवि जाणासि कहिं भअवदित्ति (१) ।

प्रविश्य । अवलोकिता । उपसृत्य । बुद्धरक्खिदे ! किं पमुद्धासि । को वि अकालो भअवदीए पिण्डवादवेलं वज्जिय मालदिं अणुवट्टमाणाए (२) । (ख)

बुद्ध । हुं (ग) तुमं उण कहिं पत्थिदासि (३) ।

---

(१) अवलोकिते ! अपि जानासि क्व भगवतीति ।

(२) बुद्धरक्षिते ! किं प्रमुग्धासि । कोऽप्यकालो भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्त्तमानायाः ।

(३) हुं त्वं पुनः कुत्र प्रस्थितासि ।

---

(क) परिचयसाम्योन्यदर्शनाद्यापादितपरस्परानुरागमालतीमाधवानुरागे तदारम्भस्य प्रतिज्ञातत्वेन तन्निर्वाहिकाया मदयन्तिकायाः सूचनाय तत्सम्बन्धाद्बुद्धरक्षिताप्रवेशः । यद्वा । नियुक्तैव मया बुद्धरक्षितेत्यनेन प्रथमाङ्के द्वितीये च मालतीं प्रति लघूकृतो भार इत्यनेन सूचितो बुद्धरक्षितायाः प्रवेशः ।

(ख) अत्र प्रमुग्धा प्रमूढा । पिण्डपातः सौगतान्नम् । कोऽप्यकालो निषिद्धकालः । तथा च सदैव मालतीसमीपे भगवती वर्तत इत्यर्थः ।

(ग) हुमनुमतौ स्मरणे वा ।

अव। अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा। संदिट्ठं अ तस्स जधा संकरघरसंबद्धं कुसुमाअरं णाम उज्जाणं गदुअ कुज्जअणिउञ्जपेरन्तरत्तासोअगहणे (घ) चिट्ठ त्ति। गदो अ तत्थ माहवो (४)।

बुद्ध। किं त्ति तहिं माहवो अणुप्पेसिदो (५)।

अव। अज्ज कसणचउद्दसित्ति तहिं भअवदीए समं मालदी संकरघरं गमिस्सदि तदो एवं किल सोहग्गं वड्ढदि त्ति देवदाराहणणिमित्तं सहत्थकुसुमावचअं उद्दिसिअ लवङ्गिआदुदीअं मालदिं भअवदी ज्जेव्व कुसुमाअरु-ज्जाणं आणइस्सदि तदो अण्णोण्णदंसणं भोदु त्ति (ङ)। तुमं उण कहिं पत्थिदा (६)।

---

(४) अहं खलु भगवत्या माधवसकाशमनुप्रेषिता। सन्दिष्टं च तस्य यथा शङ्करगृहसम्बद्धं कुसुमाकरं नामोद्यानं गत्वा कुब्जकनि-कुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति। गतश्च तत्र माधवः।

(५) किमिति तत्र माधवोऽनुप्रेषितः।

(६) अद्य कृष्णचतुर्दशीति तत्र भगवत्या समं मालती शङ्कर-गृहं गमिष्यति तत एवं किल सौभाग्यं वर्धत इति देवताराधननि-मित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यति ततोऽन्योन्यदर्शनं भवत्विति। त्वं पुनः क्व प्रस्थिता।

---

(घ) अत्र कुब्जकं कुब्जा इति ख्यातस्तरुविटपः। कुब्जकव्याप्त-रक्ताशोकवनस्य दुःसंचारत्वाद्विजनत्वं सूचितम्। पर्यन्तो मध्यम्। काननं गहनं वनमित्यमरः।

(ङ) अत्र किल लोके सौभाग्यवृद्धिप्रयोजनस्य व्याजत्वात्। एव-मिति। स्वहस्तत्रोटितपुष्पैर्देवताः पूजयेत्यर्थः। आनेष्यतीति।

बुद्ध । अहं क्खु संकरधरं ज्जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा । तदो भअवदीए पाअवन्दणं कदुअ तहिं ज्जेव्व गच्छामि (७) । (च)

अव । तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता तत्थ को वुत्तन्तो (८) । (छ)

बुद्ध । मए क्खु भअवदीए समादेसेण तासु तासु वीस-म्भकधासु ईदिसो तादिसो त्ति मअरन्दस्स उपरि पिअस-हीए मदअन्तिआए दूरं आरोविदो परोक्खाणुराओ । एसो अ से मणोरहो अवि णाम तं पेक्खामि त्ति(९) । (ज)

---

(७) अहं खलु शङ्करगृहमेव प्रस्थितया प्रियसख्या मदयन्तिक-यामन्त्रिता । ततो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि ।

(८) त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता तत्र को वृत्तान्तः ।

(९) मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथा-स्वीदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया दूरमा-रोपितः परोक्षानुरागः । एष च तस्या मनोरथोऽपि नाम तं प्रेक्षे इति ।

---

मालतीमाधवयोरतर्कितदर्शनेन विजने तयोरनुरागो वर्धतामिति भगवत्या आशय इति भावः ।

(च) अत्रामन्त्रिताऽहता । गच्छामि मदयन्तिकास्थानमिति शेषः ।

(छ) मकरन्दमदयन्तिकापरिचये किं वृत्तमिति भावः ।

(ज) अत्र विस्रम्भो विश्वासः । ईदृशस्तादृश इति मकरन्दगुण-प्रकाशनमित्यर्थः । तस्या मदयन्तिकायाः । तं मकरन्दम् ।

अव। साहु बुद्धरक्खिदे ! साहु (१०)। (झ)

बुद्ध। एहि गच्छम्ह (११)।

इति परिक्रम्य निष्क्रान्ते। प्रवेशकः।

ततः प्रविशति कामन्दकी।

काम। तथा विनयनम्रापि मया मालत्युपायतः।
नीता कतिपयाहेन सखीविस्रम्भसेव्यताम्॥ (ञ)

संप्रति। व्रजति विरहे वैचित्यं नः प्रसीदति संनिधौ
रहसि रमते प्रीत्या दायं ददात्यनुवर्तते।
गमनसमये कण्ठे लग्ना निरुध्य निरुध्य मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते॥ (ट)

---

(१०) साधु बुद्धरक्षिते ! साधु।

(११) एहि गच्छावः।

---

(झ) त्वया भगवतीभारो लघूकृत इति भावः।

(ञ) तथेत्यादि। तथा तेन प्रकारेण विनयनम्रानुद्धताकारतया नम्रा मालती कतिपयदिनैरुपायाच्छकुन्तलादिकथया मया सख्यामिव विश्वासबुद्धिप्रवर्तनेन सेव्यतां शालीनत्वादिपरिहारं नीता। अत्रापिशब्द एवार्थे। यद्वा। अविनयनम्रापीत्यकारप्रश्लेषः। कतिपयाहोभिरित्यत्राह्नो जातिपरतया न समासान्तविधिः।

(ट) सखीचिह्नं दर्शयति। व्रजतीत्यादि। सम्प्रति यतोऽस्माकं विरहे दौर्मनस्यं गच्छति नः सन्निधौ प्रसन्ना भवति। विजने रमते मया सहेति शेषः। प्रीत्या दायं मोक्षुण्ठनमुत्तरं ददाति। यद्वा। दायं कर्पूरादिदेयं ददाति। गमनसमये मामनुवर्ततेऽनुगच्छति। ततः कण्ठे लग्ना सती पुनःपुनर्निरुध्य मां शपथैः प्रणम्य तत्क्षणमेव प्रत्यावृत्तिं पुनरागमनं याचते च। सख्योऽप्येवं कुर्वन्ति।

इदं च तत्र साधीयः प्रत्याशानिबन्धनम् । (ठ)

शाकुन्तलादीनितिहासवादान्
प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी
चिराय चिन्तास्तिमितत्वमेति ॥ (ड)

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये । (ढ)

नेपथ्याभिमुखम् । वत्से ! इत इतः । (ण)

ततः प्रविशति मालती लवङ्गिका च ।

माल । स्वगतम् । कधं उवहारीकिदह्मि इत्यादि पूर्वोक्तं पठति ।

लव । सहि ! एसो क्खु महुरमहुरसोल्लोलमञ्जरीक-

---

अतः सखीत्वं गता सा मे मनोगतं करिष्यतीति भावः । दैये दाने च दायः स्वाहायः सोल्लुण्ठभाषण इति मेदिनीकारः ।

(ठ) साधीयः साधु । निबन्धनं कारणम् ।

(ड) शाकुन्तलादीनित्यादि । इयं शाकुन्तलादीनितिहासवादान् पुरावृत्तान्यन्यपरैर्वचोभिरन्यकथाप्रसङ्गेन प्रस्तावयति । शकुन्तलादिभिः पितृनिरपेक्षमेवात्मा दत्त इति भगवति किं सत्यमिति मां पृच्छतीति भावः । अत्रान्यपदेनाखेटकाश्रमवर्णनशुश्रूषादेः साक्षादुद्देश्यत्वं साहसकरणं चाशयस्थमिति सूचितम् । एवमिति श्रुत्वा चेतोधृतनायकानुस्मरणान्मदीयक्रोडे निवेशितशरीरा भवति । ततः किमेवं करोमीति चिन्तास्तिमितत्वं निश्चलत्वं चिरकालमेति । चिन्तेत्युपलक्षणं निःश्वासादिनापि लक्षिता भवतीत्यर्थः । यद्वा । मदिति पञ्चमी । मत्सकाशाच्छ्रुत्वैवं करोतीत्यर्थः ।

(ढ) समक्षं प्रत्यक्षम् । उत्तरमनन्तरकृत्यम् ।

(ण) इत आगच्छेति शेषः ।

वलणकेलिकलकोइलउलकोलाहलाकुलिदसहआरसिहरु-
ड्डीणचडुलचञ्चरीअणिअरव्वइअरुद्दलिददलकरालचम्पआ-
हिवासमणोहरो मरालमंसलजहणपरिणाहुव्वहणमन्थरो-
रुभरविसंठुलक्खलिदचलणसंचारमसिणगमणोवणीदसेअ-
सीअरसुहाविन्दुइज्जन्तमुद्धमुहचन्दचन्दणाअमाणसीअलफं-
सो तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो ता पवि-
सम्ह (१२) । (त) इति परिक्रम्य प्रविशतः ।

---

(१२) सखि ! एष खलु मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलिकल-
कोकिलकुलकोलाहलाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्य-
तिकरोद्दलितदलकरालचम्पकाधिवासमनोहरो मरालमांसलजघनपरि-
णाहोद्वहनमन्थरोरुभरविसंष्ठुलस्खलितचरणसंचारमसृणगमनोपनीत-
स्वेदशीकरसुधाविन्दूयमानमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शस्त्वां प-
रिष्वजति कुसुमाकरोद्यानमारुतस्तत्प्रविशावः ।

---

(त) अत्रैष खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति सम्बन्धः ।
कीदृशः । अतिमधुरमधुरसेनार्द्रार्द्रया मञ्जर्याः कवलने भक्षणे केलिः
क्रीड़ा तया कलमव्यक्तध्वानं यत् कोकिलकुलं तस्य कोलाहलेनाकुलि-
तादतिसुरभिचूतशिखरादुड्डीनश्चटुलो मनोज्ञो यो भ्रमरसमूहस्तस्य
सम्पर्केण विकसितपुटस्यात एव करालस्य दन्तुरस्य चम्पकस्याधि-
वासेन गन्धेन मनोहरः । एतेन शैत्यसौगन्ध्ये दर्शिते । सहकार-
मञ्जरीणां कोकिलाकुलत्वं भ्रमरस्य तत्त्यागे हेतुः । मरालो हस्ती
हंसो वा तस्य मांसलजघनपरिणाहोद्वहनेन मन्थरावलसौ यावूरू ।
त्वदीयाविति भावः । तयोर्गौरवेण विसंष्ठुलं विषमं यथा तथा स्खलि-
तस्य चरणस्य सञ्चारेण मसृणं मन्दं यद्गमनं तेनोपनीतेन स्वेदशीकरे-
णामृतविन्दुसदृशे मुग्धमुखचन्द्रे । अर्थात्तव । चन्दनायमानः शीत-
लस्पर्शो यस्य सः । अनेन मान्द्यं शैत्यमपि ध्वनितम् । सहकारो-
ऽतिसौरभ आम्रः । चञ्चरीकोऽलिगीतयोरिति धरणिः । करालो

ततः प्रविशति माधवः।

माध। सहर्षम्। हन्त परागता (थ) भगवती। इयं हि मम

आविर्भवन्ती प्रथमं प्रियायाः
सोच्छ्वासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनो
दृष्टेः पुरस्तादचिरप्रभेव॥ (द)

दृष्ट्वा। अये! लवङ्गिकाद्वितीया मालत्यपि। (ध)

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जडिमानमेत्य।
जाड्येन चन्द्रमणिनेव महीधरस्य
संधार्यते द्रवमयो मनसा विकारः॥ (न)

---

दन्तुर इत्यमरः। मरालो हंसगन्त्र्योर्मरालो विस्तृते शुभ इति विश्वः। तेन मरालस्य विस्तृतस्य शुभस्येति वा योज्यम्। मसृणं चिक्कणं समसित्यमरः।

(थ) हन्त हर्षे। परागतायाता।

(द) आविरित्यादि। इयं भगवती प्रियायाः पुरस्तादाविर्भवन्ती प्रथमं मम चित्तं सविकासं करोति। कीदृशस्य। सन्तापदग्धस्य कामाग्निदग्धस्य। यथा विद्युद्दृष्टेः पुरस्तादाविर्भवन्ती मयूरतरुणस्य चित्तं सोच्छ्वासं करोति निदाघतप्तस्य। युवग्रहणमुन्मादहेतुद्योतनाय। प्रियाया इत्यत्र षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी। अत एव प्रियायाः प्रथममिति न योजना। प्रथमपदयोगे षष्ठ्यभावात्। अनेन प्रियाप्रागमिष्यतीति सूचितम्।

(ध) मालतीत्यत्रापिशब्दो गौरवे। निपातानामनेकार्थत्वात्।

(न) आश्चर्यमित्यादि। अस्याः पद्माक्ष्या मुखनिर्मलचन्द्रसन्निधौ

संप्रति रमणीयतरा मालती। (प)
ज्वलयति मनोभवाग्निं मदयति हृदयं कृतार्थयति चक्षुः।
परिमृदितचम्पकावलिविलासलुलितालसैरङ्गैः॥ (फ)

---

वारं वारं जडिमानं सर्वकार्याप्रतिपत्तिरूपं प्राप्य जाड्येन जडिम्ना करणेन मम मनसा विकारः स्वरूपान्यथाभावः सम्वार्यते। कीदृशः। द्रवमय इव द्रवमयः। हृदयद्रवीकरणात् स्वेदादिमत्त्वाच्च। अन्यस्याः समागमाद् द्रवमयो विकारोऽस्यास्तु सान्निध्यादेवेति कर्मातिशयदर्शनादाश्चर्यम्। यदाह भरतः। कर्मातिशयनिर्वृत्तो भवेद्विस्मयसम्भवः। सिद्धिस्थानेष्वसौ साध्यः प्रहर्षपुलकादिभिः॥ यथामलेन्दुर्सान्निध्यौ जड़िमानं शैत्यमासाद्य शैत्येनैव चन्द्रकान्तेन शैलस्य द्रवमयो विकारः द्रवत्वं संधार्यते। अत्र महीधरसादृश्येन माधवस्य धीरत्वादिगुणावष्टम्भसंभार उक्तः। जात्येनेति पाठे जात्येन जातिमता। उत्कृष्टेनेति यावत्। चन्द्रकान्तेनेत्यस्य परं विशेषणं द्रष्टव्यम्। यद्वा मनोविशेषणमपि। जात्येनाभिजनवतापि। अत्रापिरध्याहार्यः। अत एवाश्चर्यम्।

(प) संप्रतीति। पुरा कामवेगस्याङ्कुरावस्थया रमणीया। अधुना तु तस्य पल्लवितत्वेन रमणीयतरा।

(फ) इदमेव स्फोटयति। ज्वलयतीत्यादि। संप्रति मालत्यङ्गैः कामाग्निमुद्दीपयति। चित्तं सोन्मादं करोति। नेत्रं कृतप्रयोजनं विधत्ते। ममेति शेषः। कीदृशैः। परिमृदितचम्पकमालावद्विलासैर्ललितैश्च। अलसैर्मन्दैर्लज्जया निभृतत्वेनेति भावः। यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम्। उपयातविशेषो यः स विलासो मतो बुधैः॥ इति भरतः। हस्तपादाङ्गविन्यासभ्रूनेत्रोष्ठप्रयोजितम्। सुकुमारविधानेन ललितं तन्निगद्यते॥ इति भरतः। यद्वा। परिमृदितचम्पकमालाविलासानि म्लानानि। ललितानीतस्ततः क्षिप्तानि। अलसानि मन्दानि। ततस्त्रिपदकर्मधारयः। बलघातुसाम्यत्वार्थेऽपि।

माल । सहि ! इमस्सिं कुञ्जअणिउञ्जे कुसुमाइं अव-चिणुह्म (१३) ।

माध ।

प्रथमप्रियावचनसंश्रवस्फुरत्पुलकेन संप्रति मया विडम्ब्यते ।
घनराजिनूतनपयःसमुच्चयाच्चयबद्धकुड्मलकदम्बडम्बरः ॥ (ब)

लव । सहि ! एवं करेह्म (१४) । पुष्पावचयं नाटयतः ।

माध । अपरिमेयाश्चर्यमाचार्यकं (भ) भगवत्याः ।

माल । इदो वि अस्सिं अवचिणुह्म (१५) ।

काम । मालतीं परिष्वज्य । अयि ! विरम निःसहासि जाता । (म)

---

(१३) सखि ! अस्मिन् कुञ्जकनिकुञ्जे कुसुमान्यवचिनुवः ।

(१४) सखि ! एवं कुर्वः ।

(१५) इतोऽप्यस्मिन्नवचिनुवः ।

---

धातोरनेकार्थत्वात् । लुलितालसैरिति पाठे लुलितानीतस्ततः क्षिप्तानीत्यर्थः ।

(ब) प्रथमेत्यादि । संप्रति मया मेघमालानवजलसेचनेन सम्यग्बद्धकलिकनीपस्य डम्बरः साम्यं प्रपञ्चो वावलम्ब्यते । कीदृशेन । प्रथमप्रियावचनसंश्रवणादुद्गतरोमाञ्चेन । संस्तवेति पाठे संस्तवः परिचयः । तदनेन दृष्टान्तेन सर्वाङ्गीणं पुलकं तस्य च स्थैर्यमुक्तम् । घनजीमूतसुदिरेत्यमरः ।

(भ) अपरिमेयेत्यादि । पुष्पत्रोटनकाले मालतीस्तनमुकुलादिदर्शनादानन्दसन्दोहेन माधवस्य सन्तोषप्रकाश इति भावः ।

(म) अज्ञातमाधवसन्निधानां मालतीं श्रमोपन्यासव्याजेन कामन्दकी श्लिष्टनर्मवचनमाह । अयीत्यादि । निःसहा परिश्रान्तासि

तथाहि।

खलयति वचनं ते संश्रयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून्।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन॥ (य)

मालती लज्जते।

लव। सोहणं भअवदीए आणत्तं (१६)। (र)

माध। हृदयङ्गमः परिहासः।

काम। तदास्यतां किञ्चिदाख्येयमाख्यातुकामास्मि।

सर्वा उपविशन्ति।

---

(१६) शोभनं भगवत्याज्ञप्तम्।

---

त्वमतो विरम त्यज खेदमिति शेषः। यद्वा। विरम पुष्पावचयात्। उपविशेति भावः। पक्षे निःस्पृहा कामाद् ग्लाना त्वं जातासि ततो विशेषेण रमस्व। आशंसायां लोट्।

(य) खलयतीत्यादि। हे सुभ्रु! शोभनभ्रूयुते वल्लभालोकनेन समं यथा तथा त्वयि खेदो विलसति स्वव्यापारं कुरुते। यथा वल्लभालोकनं तथा खेद इति भावः। पक्षे वल्लभेनावलोकनं खेदश्च। अत एव सर्वथेति तुल्यत्वम्। तदेवाह। खेदो वचनं तव स्खलयति। प्रत्यङ्गं संश्रयत्याश्रयति। संसयतीति पाठे शिथिलयति। आस्य-शशिनो निःसरत्स्वेदकणाञ्जनयति। नयनद्वयं मुकुलयति च। रतान्ते च श्रमे चैव सुखसम्भोगभावने। गन्धे स्पर्शे च हर्षे च मुकुला दृष्टिरिष्यते॥ इति भरतः। वल्लभालोकनेऽप्येवं भवति। इह वल्लभालोकनं त्वयि वर्तत इति भावः।

(र) विरम्यतामित्याशयः।

काम। मालत्याश्चिबुकस्तनमध्य। शृणु विचित्रमिदं सुभगे! (क)।

माल। अवहिदह्मि (१७)।

काम। अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम्। (ख)

लव। सुमरामो (१८)।

काम। स खलु मन्मथोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव (ग) शरीरोपतापेन।

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं
वपुः क्षामं क्षामं वहति रमणीयश्च भवति॥ (घ)

---

(१७) अवहितास्मि।

(१८) स्मरामः।

---

(क) चिबुकमधरतलावयवस्तनमध्योत्सोल्य। सुभग इत्यनेन माधवचित्ताकर्षणेन त्वमेव सौभाग्यवतीति ध्वनितम्।

(ख) कुमार इत्यनेन विस्मय उक्तः। निबन्धनमालम्बनम्।

(ग) परवानस्वतन्त्रः।

(घ) यदित्यादि। शरीरोपतापेनायं परवानिव। यद्यथाचन्द्रे प्रणयिनि जने वानन्दं प्रीतिं न भजते न लभते। तत्तथार्थे। तथातिधैर्ययुक्तोऽप्ययं दुःसहमन्तस्तापं प्रकाशयति। फलिनीश्यामशरीरस्वभावोऽप्यापाण्डुमधुरमीषत्पाण्डु मनोहरमतिक्षीणं वपुर्वहति च

लव। एवं वि तस्सिं अवसरे भअवदिं तुवरावन्तीए अवलोइदाए उदीरिदं आसो अस्सत्थसरीरो माहवो त्ति (१९)।

काम। यावदश्रूणवं (ख) मालत्येवास्य मन्मथोन्माद-हेतुरिति। ममापि स एव निश्चयः।

अनुभवं वदनेन्दुरुपागमन्नियतमेष यदस्य महात्मनः।
क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः॥ (ङ)

माध। अहो! उपन्यासशुद्धिः (च)। अहो! महत्त्वारोपणे यत्नः। अथवा

---

(१९) एवमपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितयोदीरितमासीदस्वस्थशरीरो माधव इति।

---

यथा यथा तथा तथा रस्यस्य भवति। आपर्विस्मये। चकारः समुच्चये। आपर्वेति समस्त एव समुच्चये वा। तदिह रागावस्थायां यथोचितं विधेहीत्याशयः। प्रियङ्गुः फलिनीत्यमरः।

(ख) यावदनवधारणे मालत्येव हेतुरित्येवाश्रूणवमित्यर्थः। अश्रूणवमश्रौषम्।

(ङ) अनुभवमित्यादि। अयं वदनेन्दुरस्य महात्मनो निश्चितमेवानुभवमुपागमदुपागतः। यत्कारणादस्य स्तिमितस्य स्थिरस्य मनो विचलितम्। तदेवं ममापि स एव निश्चयः। किंभूतम्। उत्कण्ठाचपलम्। यथा स्तिमितस्य निश्चलस्य महात्मनोऽगाधस्य समुद्रस्य चन्द्रानुभवात् कल्लोलचपलं जलं क्षुभ्यति। कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिर्ष्विति मेदिनीकारः।

(च) शुद्धिरक्लिष्टता।

शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालावबोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥

(क)

काम । अतस्तेन जीवितादुद्विजमानेन दुष्करमपि न किञ्चिन्न क्रियते (ख) । असौ हि

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः ।
दाहप्रेम्णा सरसबिसिनीपत्त्रमात्रान्तराय-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ (ग)

---

(क) दूतीगुणानाह । शास्त्रेष्वित्यादि । निष्ठेदमित्थमेवेति निर्णयः । तत्र सहजो बोधो नैसर्गिकं ज्ञानम् । ज्ञाने सति प्रागल्भ्यं वावदूकता । अभ्यस्ता गुणाः श्लेषादयो यत्र तादृशी वाणी । यद्वा । अभ्यस्तमभ्यासस्तदनुगुणा वाणी च । कालावबोधः समयज्ञानम् । प्रतिभानमनुरूपं तात्कालिकस्फुरणं तद्योगित्वम् । एते गुणाः सर्वकर्मसु प्रकरणाद् दूतीकृत्येषु वा कामदुघोऽभिलषितप्रदाः । तत्र शास्त्रनिष्ठया पटुत्वं प्रागल्भ्येन धार्ष्ट्यं प्रतिभानवत्त्वेनेङ्गितज्ञत्वं दूतीगुण उक्तम् । यदाह । पटुता धृष्टता चेतोङ्गितज्ञत्वं प्रतारणम् । देशकालज्ञता चैव दूतीकृत्ये गुणा मताः ॥ कामदुह इत्यत्र सत्सूद्विष्यादिना क्विप् ।

(ख) जीवितादुद्विजमानेनेति प्रद्वेषः प्राणितव्येऽपीति भरतानुसरणम् । न क्रियत इति पाठे नः शिरश्चालने ।

(ग) दुष्करमेवाह । धत्त इत्यादि । तेन दुष्करं क्रियते । यस्मादयं नवाम्रे कलिकायुक्ते ध्वनत्कोकिले मृत्यवे मरणाय नेत्रं धत्ते । वकुलगन्धबन्धोर्वातस्य वर्त्मनि शरीरं क्षिपति स्थापयति । अत्र मार्गपदेनानागतेन वायुना येन पथा समागन्तव्यं तत्सूचितम् ।

माध । अन्य एवाश्रुतः कथाप्रकारो (घ) भगवत्याः ।

माल । स्वगतम् । अदिदुक्करं करेदि (२०) । (ङ)

काम । तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यथापरिक्लिष्टपूर्वस्तपस्वी यतोऽधुना शक्यमनेन मरणमप्यनुभवितुम् । (च)

---

(२०) अतिदुष्करं करोति ।

---

बकुलामोदपदेन स्वकायत्वमना । गर्भपदेन बाह्यान्तरभावनाद्दृढतोक्ता । दावप्रेम्णा वनवह्निप्रीत्या चन्द्रकिरणान् वारं वारं श्रयति । एतेन चन्द्ररश्मीनां दाहकत्वमुक्तम् । अत्र प्रेमपदेन नायिकानुरागस्य च शिरोभिविमर्शशून्यत्वं तृतीयया चाङ्गसङ्गहेतुत्वं च ध्वनितम् । कीदृशः । सरसपद्मिनीपत्रमात्रान्तरितो ग्लायमानकायः । सर्वत्र स्त्वत्र इति योज्यम् । तथा च मरणाय कृतोद्यम इति भावः । यद्वा । अन्तरायो मरणे विघ्नः । तत्र पद्मिनीपत्रहेतुत्वम् । तदिह चन्द्रपादादीनां कामोद्दीपकतयानर्थहेतुत्वेन विप्रलम्भस्योत्कर्षः सूचितः । किं च मनोविकार इन्द्रियजन्य इत्यनेनेन्द्रियाणां शान्तिः कृता । नवचूतदर्शनेन नेत्रस्य । चूतैरानद्धत्वमुकुलितत्वाभ्यामतिदुःखदत्वम् । कोकिलरवाकर्णनेन श्रोत्रस्य । बकुलगन्धसम्बन्धेन घ्राणस्य । वायुचन्द्रकरयोः स्पर्शेन त्वच इति ।

(घ) अश्रुतोऽन्याननुभूतः कथाप्रकारः कथनक्रमः ।

(ङ) बालचूतदर्शनादेरतिपीड़ाकरत्वेन मालत्यापि ज्ञानादेवमुक्तमिति भावः ।

(च) अन्यथेत्यादिना त्वय्येव प्रथममनुरक्तोऽयमिति दर्शितम् । तपस्व्यनुकम्प्यः । तपस्वी तापसे चानुकम्प्ये चेति विश्वः । अनेन वैदेशिकोऽयं वराक इति मयैतदुच्यते न कारणादित्युक्तम् । शक्यमिति । तथा च त्वमनुरागिणी भवेत्यर्थः ।

माल। जनान्तिकम्। सहि! अत्तणो कारणादो तस्स सव्वलोअलंकारभूदस्स किं पि आसङ्कन्तीए भअवदीए भीदाविदह्मि। ता किं दाणिं एत्थ पडिवज्जिस्सं (२१)। (छ)

माध। दिष्ट्यानुकम्पितोऽस्मि भगवत्या। (ज)

लव। भअवदी एवंवादिणित्ति आचक्खिअदि। अह्माणं पि भट्टिदारिआ भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ रविकिरणासिलिट्ठ-मुद्धकमलिणीकन्दसुन्दराव अवसोहाविभाविदाणङ्गवेअणा-धिअदररमणीआ वि परिअणं दुम्मेइ। णाभिणन्ददि केलि-कलाओ केवलं कमलाअन्तकन्तहत्थपल्हत्थगण्डमण्डला दिअसं गमेदि। अवि अ। विअसिआरविन्दमअरन्दणीस-न्दसुन्दरेण दरदलिदकुन्दमाअन्दमहुविन्दुसंदोहवाहिणा भवणुज्जाणपेरन्तमारुदेण उत्तम्मदि (२२)। (झ)

---

(२१) सखि! आत्मनः कारणात्तस्य सर्वलोकालंकारभूतस्य किमप्याशङ्कमानया भगवत्या भीतायितास्मि। तत् किमिदानीमत्र प्रतिपत्स्ये।

(२२) भगवत्येवंवादिनीत्याख्यायते। अस्माकमपि भर्तृदारिका धवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रवि-

---

(छ) अत्रात्मनो मम। किमपीत्यमङ्गलतयावचनीयं मरणमित्यर्थः। भीतायितेत्यत्राचारे क्यङ्। किमिति। तज्जीवनाय ममापि तत्रानुराग इति वक्तुमुचितमपि कुमारीत्वेनानुक्तमतस्त्वं वदेति भावः। कामन्दकीं प्रति जनान्तिकमिदम्। माधवस्य गुप्तः।

(ज) स श्रुत्वाह दिष्ट्येत्यादि।

(झ) अत्र एवंवादिनीत्यत्र कामावस्था गुरुजने लज्जया वक्तुमनर्हापि मालतीनिमित्तमाधवावस्थाश्रवणात् सापि तन्निमित्ता कथ्यत

जं च तस्सिं जत्तादिअहे णिअमहूसवाब्भुदअदंसणपडिवसरूवस्स भअवदो कामस्स विअ कामकाणणालंकारआरिणो तस्स विविहविब्भमाहिरामं अणुरूआणुराआणुबन्धमहग्घोकिदजोव्वणारम्भं असोअदोहविणिवादवञ्चणावसरजूरविदचित्ततुवरन्तकोदूहलं समुल्लसिदसङ्गसत्थअसत्थरावअवपडिलग्गसेअपुलअकम्पसुन्दरं आणन्दिदसहीअणं पिअसहीए परप्परावलोअणसुहं समासादिदं तदो

---

किरणाश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभाविताअनङ्गवेदनाधिकतररमणीयापि परिजनं दुनोति । नाभिनन्दति केलिकलाः केवलं कमलायमानकान्तहस्तपर्यस्तगण्डमण्डला दिवसं गमयति । अपि च । विकसितारविन्दमकरन्दनिःस्यन्दसुन्दरेण दरदलितकुन्दमाकन्दमधुबिन्दुसंदोहवर्षिणा भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति ।

---

इति भावः । अस्माकं भर्तृदारिका परिजनं दुनोतीत्यन्वयः । आश्लिष्टं स्पृष्टम् । मुग्धो बालः । कन्दं बिसम् । बालकमलिनीमूलं मृदुतरं रविकरस्पर्शान्म्लानं च भवति । तदनेन दृष्टान्तेन निःसहत्वतनुत्वे अवयवानामुक्ते । तद्दशायामपि सौन्दर्यद्योतनाय सुन्दरपदम् । अधिकतररमणीयापीत्यनेन कामालिङ्गितकायस्य कान्तिप्रकर्ष उक्तः । अत एवापिविस्मये । अतिकान्तस्य सुखजनकत्वनैयत्येन दुःखजनकत्वे चित्रात् । दुःखप्रकारमाह । नाभीत्यादि । अत्र यत इत्यध्याहार्यम् । केलिः क्रीडा । कलाश्चतुःषष्टिः । यद्वा । केलीनां कलांशमात्रम् । कथं तर्हि दिनानि गमयतीत्याह । केवलमित्यादि । कमलायमानं प्रसारितम् । इदं भरतानुमतम् । यदाह । अप्राप्ते च प्रिये कार्यः स्त्रीभिर्गण्डान्वितः करः । पर्यस्तं क्षिप्तम् । निःस्यन्दः क्षरणम् । ईषदर्थे दराव्ययमित्यमरः । दलितं विकसितम् । माकन्दश्चूतः । पुष्पपरमत्र । माकन्दः सहकारेऽस्त्रीति मेदिनी । एतेन वयोस्त्रैगुण्यमुक्तम् ।

पहुदि सविसेसदूसहाआसविअम्भमाणुद्दामदेहदाहदारुणं दसापरिणामं अणुभवन्ती मुहुत्तमेत्तसंपत्तपुण्णचन्दोदआ विअ बालकमलिणी पम्मलाअदि (२३)। (ज)

---

(२३) यच्च तस्मिन् यावद्दिवसे निजमहोत्सवाभ्युदयदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव कामकाननालंकारकस्त्रियास्तस्य विविधविभ्रमाभिराममनुरूपानुरागानुबन्धमहार्घीकृत–यौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरखिद्यमानचित्तत्वरमाणकौतूहलं समुल्लसितसाध्वसस्तम्भमन्थरावयव· प्रतिलग्नस्वेदपुलकोत्कम्प- सुन्दरमानन्दित· सखीजनं प्रियसख्या परस्परावलोकनसुखं समासादितं ततः प्रभृति सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणाममनुभवन्ती मुहूर्तमात्रसंप्राप्तपूर्णचन्द्रोदयेव बालकमलिनी प्रम्लायति।

---

(ज) यच्च प्रियसख्या यावद्दिने तस्य दर्शनसुखं समासादितं तत आरभ्य सा कमलिनीव प्रम्लायतीत्यन्वयः। प्रतिपन्नरूपस्य कृतदेहपरिग्रहस्य। कामस्यानङ्गत्वात् पुरातनत्वाच्च। महोत्सवदर्शनार्थमिदमुक्तमिति भावः। अङ्गनप्रतिपन्नरूपस्येत्याहिताग्न्यादिः। विविधविलासैरभिरामम्। यद्वा। विविधभ्रमणमभिरामोऽभिरतिर्यत्र तत्। वञ्चनाद्दर्शनाभावः। त्वरमाणं शीघ्रमुपजायमानम्। कथं पश्यामीति कुतुकं तयोश्चित्तेऽभवदित्याशयः। आनन्दितसखीजनं कामसंपत्त्येति भावः। विजृम्भमाणो वर्धमानः। उद्दामो महान्। दारुणो भयङ्करः। मरणशङ्कयेति भावः। दशा कामावस्था। यथा क्षणमात्रप्राप्तचन्द्रोदया कमलिनी म्लायति तथेयमपि प्राप्तपूर्णचन्द्रोदया म्लायति। चन्द्रकरमपि सोढुमक्षमेति भावः। यद्वा। यथा प्राप्तचन्द्रोदया पद्मिनी म्लायति तथा प्राप्तदर्शनसुखेयं म्लायतीत्यर्थः। ननु चन्द्रे च विरोधात्पद्मिन्या म्लानिर्युक्ता। अस्यास्तु माधवानुरागात्तद्दर्शने कथं म्लानिरिति। नैवम्। यथा शीतस्पर्शत्वेन चन्द्रः क्षणं पद्मिनीं

तहावि अ मुहुत्तमेत्तहिअअविणिहिदणिम्भाअन्तवल्लहसमाअमा णिब्भरसलिलासारसिच्चमाणेव्व मेइणी सीदलाअदि त्ति जाणामि । जेण पप्फुरन्तकन्तदसणच्छदुच्छलन्तदन्तमुत्तिआवलिकन्तिसविसेससोहिदं णिरन्तरूल्लसिदपुलअपम्हलकन्तकवोल-घोलन्तसंतदाणन्दबाहत्थवअ' ईसिविअसिअणिप्फन्दमन्दताररत्ताणमसिणमउलाअन्तणेत्तणीलुप्पलं अविरलुब्भिण्णसेअजलविन्दुसुन्दरललाटपट्टणवचन्दलेहामणोहरं मुद्धमुहपुण्डरीअं उव्वहन्ती विअड्ढसहअरीचित्तसंसइदकुमारीभावा भोदि (२४) । (ट)

---

(२४) तथापि च मुहूर्तमात्रहृदयविनिहितनिर्भीयमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि । येन प्रस्फुरत्कान्तदशनच्छदोच्छलद्दन्तमुक्तिकावलिकान्तिसविशेषशोभितं निरन्तरोल्लसितपुलकपक्ष्मलकान्तकपोलघूर्णमानसन्ततानन्दबाष्पस्तवकमीषद्विकसित-निष्पन्दमन्दतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्पलमविरलोद्भिन्नस्वेदजलविन्दुसुन्दरललाटपट्ट-नवचन्द्रलेखामनोहरं मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकुमारीभावा भवति ।

---

सुखयति तथा माधवो मालतीमिति विवक्षितत्वात् । यद्वा । मुहूर्तपदेनेह प्रथमचन्द्रोदय उक्तः । एवं चाभिनवोदितं चन्द्रं रक्ततया सूर्याभं दृष्ट्वा भ्रान्त्या मुहूर्तं पद्मिनी तिष्ठत्यथ प्रम्लायति तथेयमपीत्यर्थः ।

(ट) तथापि चेत्यत्रापि चेति भिन्नक्रमः । तथा शीतलायत इत्यपि जानामि चेति सम्बन्धः । निर्भरं मात्रारहितं सत्यमित्यर्थः । समागमेति भावनाबलादिति भावः । मेदिनी ग्रीष्मावसानकालीनेत्यर्थः । समागमनेन द्रढयति । येनेति । येन हृदिस्थकान्तसङ्गमेनेवं

किं अ । उद्दामसिसिरससिमऊहणिउरम्बचुम्बिदपउत्तणीसन्दचन्दमणिहारधारिणी पउरकप्पूरसविसेससिसिरचन्दण-रसच्छडासारणिम्मरदन्तुरिदबालकदलीवत्तसंवाहवादिव्वावारतुवरन्त-सहअरीसत्थविरइदोवणीदकमलिणीदलजलद्दासअणीए उसिदा रअणिं गमेदि (२५) । (ठ)

---

(२५) किञ्च । उद्दामशिशिरशशिमयूखनिकुरम्बचुम्बितप्रवृत्तनिःस्यन्दचन्द्रमणिहारधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटा-

---

सा भवति तेन विदग्धसहचरीचित्तसंशयितकौमारभावा भवति । वैदग्ध्यप्रयुक्ततया सहचरीसंघेनैवं संशय्यते यन्मत्परोक्षेऽपि प्रियसङ्गतेयम् । कथमन्यथैतादृक्संस्थानमस्या इति भावः । दशनच्छदमधरम् । स्खलन् प्रकाशमानः । अधरस्फुरणं भावनार्पितप्रियतमचुम्बनात् । शुक्तिका मौक्तिकं शुक्तेति शब्दभेदः । निरन्तरेति । सङ्कल्पकृतवल्लभसमागमोद्भूतसात्त्विकभावेनेत्याशयः । घूर्णमानं लसमानम् । यद्यपि रोमाञ्चः सर्वाङ्गीण एव भवति तथापि रागातिशयद्योतनाय कपोलपुलक एव वर्ण्यते कविसंप्रदायेनेत्यवधेयम् । मन्दतारं किञ्चिच्चलतारकम् । उत्तानमूर्ध्वविस्तृतम् । भावनोपनीतप्रिये लज्जादिदृष्ट्याश्यामीषद्विकसितत्वम् । निष्पन्दता मौग्ध्यात् । मन्दतारता नखदशनक्षतभावनया प्रियं प्रति साक्ष्यत्वात् । उत्तानत्वं सुखदिदृक्षया । मसृणत्वं स्नेहभावनया । मुकुलत्वं रतावसानभावनया । यदाह । निश्चलत्वं तदा यातो मुकुलत्वं च लोचने ॥ उद्भिन्नमुद्भूतम् । स्वेदेति । रतिश्रमादयं स्वेदः । तदनेन प्रबन्धेन दृष्टिरुक्ता । यदाह । रोमाञ्चो वेपथुः स्वेदो लुलिते च विलोचने । सज्जन्त्या इव देहेषु चासेचस्तु प्रियसङ्गमम् ॥ तदिह यदीयं वल्लभसमागमं न जानाति तदा कथमधरस्पन्दादिमती स्यात् । कुमारस्य भावः कौमारं शैशवं तस्य भावोऽभिप्रायः कटाक्षविक्षेपादिः संशयितो यस्याः सा ।

(ठ) निशाचेष्टामाह । किं चेति । निकुरम्बः समूहः । चुम्बि-

कधं वि उवलद्धणिद्दासुहा सेअपअम्भरिदपादपल्लवुव्व-न्तपिण्डालत्तअरसा थरथरामन्तपीवरोरुमूलविसंवदिदणी-वीवन्धणा उक्खुब्भन्तहिअअन्तरत्तरंगणीसासवसविसमु-च्छसन्तपम्हलपओहरोवरिणिहिदवेवन्तभुअलदावेढ़बन्धण झत्ति पड़िबोधवेलाविसज्जिदुव्विसहदिट्ठिविणिवादविसाद-सुसहअणिज्जसंजादमोहमोलन्तलोअणा ससंभमसहीअ-णपअत्त पड़िवसमुच्छाविच्छेअसमअसंगलिददीहणीसास-सेसजीविदा किंकादव्वमूढ़दाए पढ़मप्पत्थिदणिअजीवि-दावसाणं दुव्वारदेव्वविलसिदोवालम्भमेत्तव्वावारं अप्पा-रिसं जणं करेदि (२६)। (ङ)

---

वारनिकरदन्तुरितबालकदलीपत्त्रसंवाहनादिव्यापारत्वरमाण-सहचरो-सार्थविरचितोपनीतकमलिनीदलजलार्द्राशयनीय उन्निद्रा रजनीं गम-यति।

(२६) कथमप्युपलब्धनिद्रासुखा स्वेदप्रसृतपादपल्लवोद्वान्तपिण्डा-लक्तकरसा थरथरायमानपीवरोरुमूलविसंवदितनीवीबन्धनोत्क्षुभ्यमान-हृदयान्तरोत्तरङ्ग-निःश्वासवशविषमोच्छ्वसत्पक्ष्मलपयोधरोपरिनिहित-

---

तेन चुम्बनेन प्रवृत्तनिःस्यन्दः संजातचरणः। छटा च्छट इति यस्याः प्रसिद्धिः। दन्तुरितं विषमीकृतम्। संवाहनमर्पणम्। विरचितोपनीतं विरचनेनाकृष्टत्वम्। अस्मिन् पदे पूरः समूहः पूरणं वा। सविशेषप-देन शीतलकर्पूरसंस्पर्शादतिशीतलत्वमुक्तम्। कदलीपत्रस्य बालत्वेन शैत्य-सौकुमार्ये उक्ते। कमलिनीदलमेव जलार्द्रार्द्रवस्त्रं तच्छय्यायाम्। आर्द्रवस्त्रं जलार्द्रा स्यादिति हारावली। औन्निद्र्ये यौन्निद्रतया। आत्मनः सखीनां चेति शेषः। एतेन निद्राच्छेदोद्वेगावुक्तौ।

(ङ) निद्रैव सुखं निद्रासुखम्। उद्वेगादिदुःखमयजागरविपर्यय-रूपत्वादिदम्। निद्रेयं चिन्तावशात्। यदाह। दौर्बल्यावस्थचिन्ता-

ता पेक्खदु भअवदी इमेसु दाव लावसभूइट्ठविम्माण-परिवेलवेसु अङ्गेसु दारुणविअम्भिदस्स किमच्चिरं कुसलावसावदा मम्महस्स भविस्सदि कधं अ इमाइं रमणकेलि-कलहकोवीवराअपल्लविअकेरलीकवोलकोमलुव्वेल्लन्तविमलचन्दचन्दिओहामदलिदतिमिरावणाइं विहावरीमुहाइं ।

---

वेपमानभुजलतावेष्टबन्धना झटिति प्रतिबोधवेलाविवर्जितोद्विग्न-दृष्टिविनिपातविज्ञातशून्यशयनीयसञ्जातमोहमीलल्लोचना ससंभ्रमस-खीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसङ्गलितदीर्घनिःश्वास-ग्रेषजीविता किंकर्तव्यमूढ़तया प्रथमप्रार्थितनिजजीवितावसानं दुर्वारदैवविलसितो-पालम्भमात्रव्यापारमस्मादृशं जनं करोति ।

---

यैर्निद्रा स्यात् कथयापि चेति । वल्लभसमागमसङ्कल्पजखेदेन प्रसृत-स्वेदपल्लवेनोद्गान्तः पिण्डीभूतालक्तकरसो यस्याः सा । अलक्तक-च्छलेनानुरागमिवोद्वमतीति भावः । घ्नतिघनत्वार्थं पिण्डपदम् । थरथरायमानं कम्पमानम् । पीवरं महत् । वर्गं संसक्तम् । विसंवदितं स्खलितम् । प्रियस्योर्वाक्रमणभावनया प्रकम्पः । तदा-कर्षणभावनया नीवीस्खलनम् । उत्खण्ड्यमानमुच्छलत् । उत्तरङ्गो यातायातवान् । विषमं यथा तथोच्छ्वसन् । पक्ष्मलः सरोमाञ्चः । वेष्टनं वेष्टः । इह हृदयोत्खण्डनादिकं प्रियसम्भोगव्यायामभावनया । उपरिवर्तिप्रियस्य भुजलताबन्धनमालिङ्गनभावनया । प्रियप्राप्त्या प्रबुद्धा । प्रबोधश्च स्पर्शादिना भवति । मोहेति । शून्यशय्यादि-दर्शनान्मूर्च्छितेत्यर्थः । ससंभ्रमः सादरः सावेगो वा । सगलितो निःसृतः । अनेन युगपन्नासापुटनिःसरणमाह । मूर्च्छाविच्छेदे तथैव श्वासप्रवृत्तेः । जीवितेति । मोहे सखीजनसेकादिना मूर्च्छापगमे दीर्घनिःश्वासेन जीवतीत्यवधार्यत इत्यर्थः । किंकर्तव्येति । जीविता सती किं करोमीति न वेत्तीत्यर्थः । प्रथमेति । वयमेव प्रथमं म्रियामह इत्यर्थः ।

इमे अ उल्लसिददुद्धसिन्धुपूरधवलुज्जलजोण्हाजलप्पक्खालिदगअणङ्गणा परिमलिदपाडलावउलणिम्महणबहलपरिमलुग्गारसंवलणमसिणमंसलाअन्तमलअमारुदुडूमाविददहदिहामुहा वसन्तरअणीपरिणाहा अणत्थकारिणो भविस्सन्ति पिअसहीए त्ति (२७)। (ढ)

काम। लवङ्गिके!

---

(२७) तत् प्रेक्षतां भगवत्येषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेष्वङ्गेषु दारुणविजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य भविष्यति कथं चेमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमललोहितल्लोहिमलचन्द्रचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि। इमे चोल्लसितदुग्धसिन्धुपूरधवलोज्ज्वलज्योत्स्नाजलप्रक्षालितगगनाङ्गनाः परिमलितपाटलावकुलनिर्मथनबहलपरिमलोद्गारसंवलनमसृणमांसलायमानमलयमारुतोद्धूमायितदशदिङ्मुखा वसन्तरजनीपरिणाहा अनर्थकारिणो भविष्यन्ति प्रियसख्या इति।

---

(ढ) स्वयमनध्यवसायाल्लवङ्गिका कामन्दकीं पृच्छति तस्मात् प्रेक्षतां भगवतीति। पेलवं कोमलम्। दारुणत्वं देहदाहादिकारित्वात्। इमानि विभावरीमुखानि प्रियसख्याः कथमेवं भविष्यन्तीत्यन्वयः। उपरागो लौहित्यम्। पल्लवितः पल्लवाकारीकृतः। केरली केरलदेशस्त्री। तस्या अतिगौरत्वेन लौहित्यार्थं ग्रहणम्। उद्वेल्लन् पतन्। उद्दामदलितमतिदारितम्। इह रक्तकेरलीकपोलसाम्येनोदितचन्द्रेण तिमिरावरणनाशे रात्रेरुपक्रमः कथितस्तत्चन्द्रस्य दुःसहता मालत्या ध्वनिता। परिमलितं क्षतम्। निर्मन्थनं मर्दनम्। उद्गार उद्गमः। संवलनं मिश्रीभावः। मसृणं मन्दम्। मांसलः पुष्टः। धूमायितं धूमेनेवाकुलीकृतम्। परिणाह आभोगः।

यदि तद्विषयोऽनुरागबन्धः
स्फुटमेतद्धि फलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयास्या
हृदयं दारुणया विदीर्यते मे ॥ (ण)

माध । स्थान एव हृदयोद्वेगो भगवत्याः । (त)

काम । अहो ! प्रमादः ।

प्रकृतिललितमेतत्सौकुमार्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः ।
चलितमलयवातोद्धूतचूतप्रसूनः
कथमयमपि कालात्सारचन्द्रावतंसः ॥ (थ)

---

(ण) एवं श्रुत्वा कामन्दकी तटस्थेवाह । यदीत्यादि । यदि तद्विषयोऽनुरागस्तदा गुणज्ञतायाः प्रव्यक्तमेतद्विशिष्टं फलम् । तदा सैव गुणं जानातीत्यर्थः । एतद्धीति पाठ एतद्गुणज्ञतायाः फलमेवेत्यर्थः । हिरवधारणे । इति नन्दितमानन्दं प्रापितमपि मे हृदयमस्या अवस्थया विदार्यते । एतदवस्थतया मरणमप्यस्याः संभाव्यत इति भावः ।

(त) स्थाने युक्तम् । स्थानेशब्दोऽत्र योग्यवाची । हृद्वासो हृदयघोषः ।

(थ) प्रकृतीत्यादि । अस्या वपुरिदं स्वभावसुन्दरं सौकुमार्यमेवैकः सारः स्थिरांशो यत्र तत् । एतत्सत्यं निश्चितम् । अयमेव कामचरितानुभावात् कामोऽप्ययं निर्दयः । अदोऽपि सत्यम् । पञ्चबाण इत्यनेनैकबाणापेक्षया दुःसहत्वमुक्तम् । अयमपि कालसलन्मलयानिलकम्पितचूतपुष्पसारचन्द्रभूषणश्च । कथमिति शिरश्चालने । हिमादेरपगमाच्चारुचन्द्रत्वम् । तदीदृशेऽनर्थहेतौ कथमियं जीविष्यतीत्यहो प्रमादः । अत्र नाथपदेन चित्रगतस्यापि माधवस्य मालतीनाथत्वं ध्वनितम् ।

तव। अस्सं च जाणिदं भोदु भअवदीए। एदं माहव-पड़िच्छन्दअसणाहं चित्तफलअं। मालत्याः स्तनांशुकमपनीय दर्शयति। एसा वि तस्स ज्जेव सहत्थविरइदत्ति कण्ठावलम्बिदा बउलमाला जीवणं पिअसहीए त्ति (२८)। (द)

माध। सस्पृहम्। (ध)

जितमिह भुवने त्वया यदस्याः
सखि वकुलावलि वल्लभाऽसि जाता।
परिणतबिसकाण्डपाण्डुमुग्ध-
स्तनपरिणाहविलासवैजयन्ती॥ (न)

नेपथ्ये कलकलः। सर्वे आकर्णयन्ति।

पुनर्नेपथ्ये। रे रे संकरधराधिवासिणो जणवदा! एसो क्खु जोव्वणारम्भगव्वसंभारदुद्दुव्विसहामरिसरोसवइअरबलामोड़िअविहड़िदुग्गवाड़दलोहपञ्जरणिबद्धसिङ्खलाणिरोहपाड़िभ-

(२८) अन्यच्च ज्ञातं भवतु भगवत्या। एतन्माधवप्रतिच्छन्दकसनाथं चित्रफलकम्। एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला जीवनं प्रियसख्या इति।

विरचितेति हेतोः। जीवितफलकत्वाज्जीवितम्। कार्यकारणयोरभेदात्।

(ध) स्तनांशुकापनयनेन व्यक्तस्तनदर्शनात् सस्पृहम्।

(न) जितमित्यादि। सखि वकुलमाले! त्वयेह भुवने जितम्। यतः प्रौढ़मृणालदण्डपाण्डुरमनोहरस्तनविस्तारविलासपताकेवास्या मालत्या वल्लभा जातासि। मालतीवल्लभत्वात् सखीत्युक्तम्। हृदयधारणेन वल्लभेत्युक्तम्। तथा च मालत्यालिङ्गनं तव सम्पन्नं न ममेति भावः। कलकलः कोलाहलः।

ङ्गसंकलिदणिअलीलाविलासुव्वेल्लन्त-बहलुत्तुङ्गलङ्गूलविअ-ड्वेजअन्तिआडम्बरुद्दामसरीरसंणिवेसो मडादो अवक्कमिअ तक्खणसतिह्न-कवलिदाणेअदेहिदेहावअवमज्झणिट्ठुरट्ठिख-ण्डटंकारकडकडाअन्तकरवत्तकठिणदाढ़ाकरालमुहकन्दरो पअण्डवज्जणिग्घाददारुणचवेड़ामोड़णपाड़िदाणेअणरतुरं-गजङ्गलुग्गारभरिदगलगुहागब्भगम्भीरघग्घरोरल्लिगल्लूरण-सद्दसंदब्भ-पड़िरवाभोअभीसाविदणट्ठविद्दाविदासेस-जण-णिवहो कठोरणहरकप्परक्कमणाणिहअदारिदजन्तुगत्तावअ-

---

(२८) रे रे श्मशानरथ्याधिवासिनो जानपदाः ! एष खलु यौवना-रम्भगर्वसंभृतदुर्विषहामर्षरोषव्यतिकरबलात्कारविघटितोद्घाटितलोह-पञ्जरनिबद्धशृङ्खलानिरोधप्रतिभङ्गसङ्कलित-निजलीलाविलासोद्वेल्लद्बह-लोत्तुङ्गलाङ्गूलविकटवैजयन्तिकाडम्बरोद्दामशरीरसन्निवेशो मठादप-क्रम्य तत्क्षणसतृष्णकवलितानेकदेहिदेहावयवमध्यानिष्ठुरास्थिखण्डट-ङ्कारकटकटायमानकरपत्त्रकठिनदंष्ट्राकरालमुखकन्दरः प्रचण्डवज्रनि-र्घातदारुणचपेटामोटनपातितानेकनरतुरङ्गजाङ्गलोद्गारभरितगलगुहा-गर्भगम्भीरघर्घरोराल्लिगल्लपूरणशब्दसन्दर्भप्रतिरवाभोगभीषितनष्टविद्रावि-

---

(य) खल्वेष व्याघ्रः क्रुद्धयमविलासं कुरुते । सर्वं भक्षयतीत्यर्थः । मठाच्छालादिरूपान्निर्गत्य । कीदृशः । यौवनारम्भेण प्रवृद्धौ यौ दुःसहावचान्तिक्रोधौ तयोर्मिलनेन यो बलात्कारस्तेन विघटितं त्यक्त-बन्धीकृतमुद्घाटितं मोटितं च यल्लोहपञ्जरं तत्र प्रतिबद्धश्रृङ्खलानिरोध-प्रतिभङ्गो विपरीतभङ्गस्तेन संकलिता मिलिताया निजलीला तद्विला-सपर्यन्त उद्वेल्लन् कम्पमानोऽत एवोच्छलन्नूर्ध्वं गच्छन् यो बहलतुङ्गला-ङ्गूलः स्थूलोच्छ्रितलाङ्गूलस्तस्य विस्तीर्णवैजयन्तिकासदृशप्रपञ्चेनोड्डामर उत्कटकठोरक्रियः शरीरसन्निवेशो यस्य सः । परगुणासहिष्णुतामर्षः । रोषः क्रोध एव । यद्वा । स्थिरः क्रोध एवामर्षः । यदाह ।

वप्फुडत्तरत्तकद्दमिअगइवहो दुट्ठसद्दूलो कुविअकअन्तली-
लाइदं करेदि। ता रक्खध जधासत्ति पिअसहीए मदअ-
अन्तिआए जीविदं त्ति। प्रविश्य बुद्धरक्षिता सत्रासम्। परि-
त्ताअध परित्ताअध। एसा णो पिअसही अमच्चणन्दणस्स
बहिणिआ मदअन्तिआ एदिणा दुट्ठसद्दूलेण विणिहद-
विद्दाविदासेसपरिअणा अभिभवीअदि (२८)। (प)

---

ताशेषजननिवहः कठोरनखरकर्पराक्रमणनिर्दयदारितजन्तुगात्रावयव-
प्रवृत्तरक्तकर्दमितगतिपथो दुष्टशार्दूलः कुपितकृतान्तलीलायितं क-
रोति। तद्रक्षत यथाशक्ति प्रियसख्या मदयन्तिकाया जीवितमिति।
परित्रायध्वं परित्रायध्वम्। एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी
मदयन्तिकैतेन दुष्टशार्दूलेन विनिहतविद्रावितशेषपरिजनाभिभू-
यते।

---

क्रोधः कृतापराधेषु स्थिरोऽमर्ष इति स्थितः। प्रतिकूलेषु तैक्ष्ण्यस्य
प्रबोधः क्रोध उच्यते॥ यद्वा। अमर्षोऽक्षान्तिः। तत्‌च्चर्व सत्पृण
कवलिता येऽनेकप्राणिशरीरावयवास्तेषां मध्ये कठोराणि यान्यस्थीनि
तेषां खण्डेखण्डने यष्टङ्कारो ध्वनिभेदस्तेन कटकटायमानाः करपत्र-
वत् कठिना या दंष्ट्रास्ताभिः करालो भीषणो मुखकन्दर आस्यकुहरं
यस्य सः। टङ्कारेण दुर्भेद्यत्वमुक्तम्। दुर्भेद्यप्रवृत्तौ दन्तानां कटकटा-
शब्दकरणं स्वभावः। विस्तीर्णत्वात् कन्दर इव कन्दरः। प्रचण्ड-
वज्रप्रहारदारुणो यश्चपेटः पाणितलप्रहारस्तेन यदास्फोटनं चूर्णनं
तेन कवलिता आस्वादिता येऽनेकनरासुरङ्गास्तेषां जाङ्गलं मांसं
तस्योद्गारेण प्रपूरणेन भरितो यो गलगुहागर्भस्तत्र गम्भीरो घर्घरो
दीर्घमधुरो य उदग्रगलगर्जितं तेन यो गम्भपूरणशब्दस्तस्य संदर्भेण
समूहेन प्रतिरवाभोगः प्रतिशब्दविस्तारस्तेन भीषितो भयं नीतो नष्टो
विद्राणो निष्ठापितो निष्ठापर्यन्तं लम्भितोऽशेषजननिवहो येन सः।

माल । लवङ्गिए ! अहो पमादो (२०) ।

माध । ससंभ्रममुत्थाय । बुद्धरक्षिते ! क्वासौ । (फ)

माल । माधवं दृष्ट्वा सहर्षसाध्वसमात्मगतम् । अम्महे एसो वि इहत्थो ज्जेव्व (२१) । (ब)

माध । स्वगतम् । हन्त पुण्यवानस्मि यदहमतर्कितोपनतदर्शनोल्लसितलोचनयानया ।

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः । (भ)

---

(२०) लवङ्गिके ! अहो प्रमादः ।

(२१) अम्महे एषोऽपीहस्थ एव ।

---

कठोरनखकर्परात्क्रमणेन निर्दयं दारितं यज्जन्तुशरीरं ततः प्रवृत्तरक्तेन संजातरुधिरेण कर्दमीकृतो गतिपथो गमनवाटो येन सः । कर्पर इव कर्परः । निम्नत्वात् । उरश्छिर्गलगर्जितमिति रत्नकोशः ।

(फ) मदयन्तिकापरिरक्षणत्वरयाह क्वासाविति ।

(ब) अम्महे सभयहर्षे आश्चर्ये वा । एषोऽपीहस्थ एव । अत्रापिर्विस्मये । यस्यावस्था भगवत्योक्ता यश्चिन्तिता वा सैवेयमवस्था स एष इति भावः । स्वच्छन्दप्रियालोकनतुष्टस्य माधवस्योक्तिः ।

(भ) हन्तेत्यादि । अयं श्लोको गद्यादिः । हन्त हर्षे । अचिन्तितोपस्थितदर्शनानन्दितलोचनयानया चक्षुषा पौण्डरीकेणेव दाम्ना स्रजाविरलं घनं यथा तथाहं नद्धो बद्धः । आवृत इति यावत् । कान्तालोकनेन सात्त्विकभावाविर्भावात् स्वीयस्तम्भं ज्ञात्वा नद्ध इत्युत्प्रेक्षितम् । अत्राविरलपदेन पौनःपुन्यं पुण्डरीकपदेन श्वेतभागविभा-

बुद्ध । महाभाअ ! उज्जाणबहिरत्थामुहे (२२) । (अ)

माधवः साटोपं (ब) परिक्रामति ।

काम । वत्स ! अप्रमत्तो भूत्वा विक्रमस्व । (स)

माध । जनान्तिकम् । लवङ्गिए ! हद्धी हद्धी संसओ क्खु जादो (२३) ।

---

(२२) महाभाग ! उद्यानबाह्यरथ्यामुखे ।

(२३) लवङ्गिके ! हा धिक् हा धिक् संशयः खलु जातः ।

---

वनं च ध्वनितम् । दुग्धस्रोतसा दुग्धाम्भःप्रवाहेण निर्भरेण निरतिशयेन संसक्तेन वा स्नापित इवाप्लुत इवाहम् । तथाविधावलोकनजातरोमाञ्चतया स्नपितत्वेनोत्प्रेक्षितम् । अत्र निर्भरपदेन परिचयपर्यवसानतोक्ता । एवं च द्वाभ्यां नेत्रनैर्मल्यमुक्तम् । तदसौ निःशेषोऽहं स्फारितेन विस्तारितेन चक्षुषा कवलित इव पीत इव । स्फारितत्वेन कवलनयोग्यतोक्ता । कवलने बाह्यसंवेदनाभावात्तथाय उत्प्रेक्षितः । सान्द्रेण निविडेन सुधामयजलधरेण प्रसभं बलात्सिक्त इवाहम् । आनन्दातिशयशालितयामृतसिक्तत्वेनोत्प्रेक्षा । तदिह माधवस्य परमनिर्वृतिसौख्यमुक्तम् । तत्र च प्रथमपदेन तारकातरलता । द्वितीयेन गोलकचाञ्चल्यम् । तृतीयेन पुटविस्तारो विलासश्च । चतुर्थेन चैतत्त्रयसम्पत्तौ सुखवत्तोपपादनम् । तत्रापि मेघपदेन सन्तापशान्तिः । अमृतपदेन सत्त्वसम्भावना । प्रसभपदेन तत्प्रकृतितेव विपत्प्रतीकार इति सूचितम् । सेचनपदेन तस्मिन् दरालोकनेऽसम्पूर्णता । सान्द्रपदेन तत्कालिकसकलक्लेशविलयः सूचितः । स्रोतसां निर्भरेणेति पाठे निर्भरेण प्रवाहेणेत्यर्थः ।

(अ) कामावित्ति प्रश्नोत्तरमिदम् ।

(ब) साटोपं सावेगम् ।

(स) अप्रमत्तं सावधानम् । क्रियाविशेषणमिदम् ।

सर्वास्त्वरितं परिक्रामन्ति ।

माध । अये दृष्टा सबीभत्सम् । अहह । (ल)

संसक्तत्रुटितविवर्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तखण्डखण्डः ।
कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्ड्यं वहति नखायुधस्य मार्गः ॥ (व)

अहो प्रमादः ।

वयं बत विदूरतः क्रमगता पशोः कन्यका

सर्वाः । हा मदअन्तिए (२४) ।

कामन्दकीमाधवौ । सहर्षाकूतम् ।

कथं तदभिपातितादधिगतायुधः पूरुषात् ।

---

(२४) हा मदयन्तिके ।

---

(ल) रुधिरादिकं वीक्ष्य सबीभत्सं सहर्षम् । अहह विस्मये खेदे हर्षायां च ।

(व) संसक्तेत्यादि । नखायुधस्य व्याघ्रस्य मार्गः प्राचण्ड्यं रौद्रत्वं वहति । कीदृशः । संसक्तः संलग्नस्त्रुटितश्छिन्नो विवर्तितः खण्डखण्डीकृतोऽन्त्रजालमन्त्रसमूहस्तेन व्याकीर्णं व्याप्तं सद्यो हतत्वात् स्फुरत्किञ्चिच्चलदपवृत्तमधोमुखं खण्डखण्डं कबन्धरूपं शकलं यत्र सः । उद्वृत्तेति पाठ उद् सद्द्(?) क्रमग्रमांसम् । कीलालव्यतिकरेण रक्तसंचैन गुल्फदघ्नो गुल्फपरिमाणः पङ्कः कर्दमो यत्र । अत एव बीभत्सयोगित्वम् । कबन्धे खण्डमस्त्रियामित्यमरः । कीलालं रुधिरे तोय इति मेदिनीकारः । प्रमाणे दघ्नच् । पङ्कः पापे च कर्दम इति विश्वः ।

(श) वयमित्यादिना दंष्ट्रायुधपर्यन्तेन पृथ्वीच्छन्दसा श्लोकः स

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः

इतराः। साहु महाभाअ! साहु (३५)।

कामन्दकीमाधवौ। सभयम्। दृढं च पशुना हतः

इतराः। अच्चाहिदं अच्चाहिदं (३६)।

कामन्दकीमाधवौ। सहर्षम्। प्रमथितश्च दंष्ट्रायुधः॥ (प्र)

इतराः। सानन्दम्। दिट्ठिआ पडिहदं दुज्जादं (३७)। (ष)

काम। साकूतम्। कथं व्यालनखरप्रहारनिःसृतरक्तनिवहः चितितलनिपत्तखड्गलतावष्टम्भनिश्चलः संभ्रान्तमदयन्तिकावलम्बितस्ताम्यतीव वत्सो मे मकरन्दः। (स)

(३५) साधु महाभाग! साधु।

(३६) अत्याहितमत्याहितम्।

(३७) दिष्ट्या प्रतिहतं दुर्जातम्।

वाचनिकः। वयं तस्य व्याघ्रस्यातिदूरतः। पयोः क्रमगताक्रमणं प्राप्ता। कन्यका मदयन्तिका। कथं मकरन्दः कुतोऽपि स्थानादेत्यागत्य शीघ्रं मध्ये व्याघ्रमदयन्तिकयोः स्थितः। तेन व्याघ्रेणावपातिताद् गृहीतात् पुरुषाद् गृहीतखड्गः सन्। अत आकाङ्क्षितलाभः। अत एव सहर्षाकूतमित्युक्तम्। पुरुषाः पूरुषा अपीत्यमरः। पूरुषशब्दश्छन्दस्येव युज्यत इत्यदेश्यम्। पूर्वपूरुषतपांसि जयन्तीत्यादिनैषधदर्शनाद्भाषायामपि तत्प्रयोगात्। मकरन्दः पशुना दृढं निहतो दृढमाहतस्ताडितो वा। रक्तदर्शनेन सभयम्। अत्याहितं महाभयम्। अत्याहितं महाभीतिरित्यमरः। व्याघ्रभयत्राणोपकारितया व्यवस्थितमदयन्तिकासम्बन्धात् सहर्षत्वम्। दंष्ट्रायुधो व्याघ्रः। प्रमथितो निहतः। अमुनेत्यर्थात्।

(ष) दुष्टमुपक्रान्तं दुर्जातम्।

(स) व्याघ्रे चोरे च व्याल इति शाश्वतः। स मकरन्दः चिति॰

दूतरा:। हद्धी हद्धी गाढ़प्पहारदाए किलम्मदि महाभाओ (३८)।

माध। कथं प्रमुग्ध एव। कामन्दकीं प्रति। भगवति! मां परित्रायस्व।

काम। वत्स! प्रतिकारोमि तदेहि तावत्पश्यामः। (छ)

इति परिक्रम्य निष्क्रान्ताः सर्वे।

इति मालतीमाधवे शार्दूलविद्रावणो नाम तृतीयोऽङ्कः। (ज)

---

(३८) हा धिक् हा धिक् गाढ़प्रहारतया क्लाम्यति महाभागः।

---

तज्जनिषक्तखड्गलतावष्टम्भेन निश्चलः। इह मकरन्दक्षतेन रुजारूपः सञ्चिप्रवेश उक्तः। यदाह। रुजा प्रोक्ता प्रहारव्यथेति। अवष्टम्भनमवष्टम्भः। संभ्रान्ता विमुग्धा। प्रमुग्धो मोहं गतः।

(छ) पश्याम इति दर्शनात्समाश्वास इति भावः।

(ज) प्राकृत यं रत्नधरोऽतिमान्योऽतिमान्यरूपा दमयन्तिकापि। जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमत्तृतीयो रसराजिरम्यः।

इति तृतीयोऽङ्कः।

---

# चतुर्थोऽङ्कः ।



ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ प्रमुग्धौ माधव-मकरन्दौ संभ्रान्ता (क) कामन्दकी मालती बुद्धरक्षिता च ।

मद । पसीद भअवदि ! परित्ताहि परित्ताहि मद-अन्तिआणिमित्तसंसइदजीविदं (आवस)विवसजणानुकम्पिणं (ख) महाभाअं (१) ।

इतराः । हद्धी हद्धी किं दाणिं अह्मेहिं एत्थ पेक्खिदव्वं (२) ।

काम । उभौ कमण्डलूदकेन सिञ्चा । ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु । मालत्यादयस्तथा कुर्वन्ति ।

मक । समाश्वस्यावलोक्य च । वयस्य ! कातरोऽसि किमेतत् । ननु स्वस्थ एवास्मि ।

मद । सहर्षम् । अम्महे (ग) पड़िबुद्धं दाणिं मअरन्दपुस-अन्देण (३) ।

---

(१) प्रसीद भगवति ! परित्रायस्व परित्रायस्व मदयन्तिकानिमित्तसंशयितजीवितं (आपन्न)विपन्नजनानुकम्पिनं महाभागम् ।

(२) हा धिक् हा धिक् किमिदानीमस्माभिरिह प्रेक्षितव्यम् ।

(३) अम्महे प्रतिबुद्धमिदानीं मकरन्दपूर्णचन्द्रेण ।

---

(क) संभ्रान्ता व्याकुला ।

(ख) अत्रापन्नमापद्गतम् ।

(ग) अम्महे हर्षे आश्चर्ये वा ।

माल। माधवस्य ललाटे हस्तं दत्त्वा। सहि लवङ्गिए! दिट्ठिआ वड्ढसि(घ)। णं भणामि पड़िबुद्धो ज्जेव्व दे पिअ-वअस्सो पड़िवण्णचेअणो महाभाओ मअरन्दो त्ति (४)।

माध। आश्वस्य। वयस्य साहसिक! एह्येहि। इत्यालि-ङ्गति।

काम। उभौ शिरस्याघ्राय (ङ)। दिष्ट्या जीवितवत्-सास्मि।

इतराः। पिअं पिअं णो संवुत्तं (५)। सर्वा हर्षं नाट-यन्ति।

बुद्ध। जनान्तिकम्। हला मदअन्तिए! एसो ज्जेव्व सो (६)। (च)

मद। जाणिदं ज्जेव्व मए जहा एस माहवो अण्णं पि (छ) सो जणो त्ति (७)।

---

(४) सखि लवङ्गिके! दिष्ट्या वर्धसे। ननु भणामि प्रतिबुद्ध एव ते प्रियवयस्यः प्रतिपन्नचेतनो महाभागो मकरन्द इति।

(५) प्रियं प्रियं नः संवृत्तम्।

(६) सखि मदयन्तिके! एष एव सः।

(७) ज्ञातं मया यथैष माधवोऽयमपि स जन इति।

---

(घ) वर्धस इत्यनेन वर्धापनं याचनोक्तिप्रकारः।

(ङ) शिरस्याघ्राणमायुर्वर्धनायेति वृद्धाः।

(च) हलेति सखीसम्बोधनम्। मकरन्दनामाग्रहणेन स्वाभि-त्वमभिप्रैति।

(छ) सम्भावनायामपिशब्दः।

बुद्ध । अवि सच्चवादिणी अहं (८) ।

मद । ण क्खु अम्हारिसेसु तुम्हारिसीओ पक्खवादिणीओ होन्ति (ज) । माधवमवलोक्य । सहि ! मालदीए वि रमणिज्जो इमस्सिं महाणुहावे अणुराअप्पवादो (९) ।

पुनर्मकरन्दमेव सस्पृहमवलोकयति ।

काम । स्वगतम् । रमणीयोर्जितं (झ) हि मदयन्तिका-मकरन्दयोर्दैवादस्य दर्शनम् । प्रकाशम् । वत्स मकरन्द ! कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितत्राणहेतु-र्भगवता दैवेन सन्निधापितः ।

मक । अद्याहमन्तर्नगर एव कांचिद्वार्त्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवे-दितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्द-गोचरगतामेतामभिजातकन्यकामभ्युपपन्नवानस्मि । माल-तीमाधवौ विस्मयतः । (ञ)

---

(८) अपि सत्यवादिन्यहम् ।

(९) न खल्वस्मादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । सखि ! मालत्या अपि रमणीयोऽस्मिन् महानुभावेऽनुरागप्रवादः ।

---

(ज) न हि पक्षपातिन्यस्त्वादृश्यो मन्दं भद्रं वदन्तीति भावः ।

(झ) चक्षुःप्रीतिजनकत्वेन रमणीयम् । शार्दूलनाशेनोपकारपूर्व-कत्वप्रकत्वादूर्जितं चातिशयम् । आयुष्मानिति शब्देन वाच्यो वाचः शुभाशयः ॥ इति भरतः ।

(ञ) उद्यानवृत्तान्तो मालतीप्रत्यवसुत्तरोपक्रमः । परापतन्ना-गच्छन् । अवस्कन्दोऽतिक्रमः । गोचरमित्यजहल्लिङ्गतयान्वयः ।

काम । स्वगतम् । वृत्तेन खलु मालतीप्रदानेन भवितव्यम् । प्रकाशम् । वत्स माधव ! दिष्ट्या सुहृद्बुद्ध्या वर्धितोऽसि मालत्या तदयमवसरः प्रीतिदायस्य । (ट)

माध । भगवति ! इयं हि

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
सौजन्यादिहितवती गतव्यथं माम् ।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च ॥ (ठ)

लव । पडिच्छिदो क्खु णो पिअसहीए अअं पसादो (१०) ।

---

(१०) प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः ।

---

अभिजाता कुलीना । तया चाभिजात्येन मदुपकारं ज्ञास्यतीति भावः । आभिजात्येन ज्ञानं च तथाविधाकारादिना । कन्यकेत्यत्रानुकम्पायां कन् । अभ्युपपत्तिः प्राप्तिः । विस्रम्भतः । परस्परस्नेहकारित्वया शङ्कयेति भावः ।

(ट) प्रीतिदायस्य वर्धापकदानस्य ।

(ठ) यदित्यादि । व्याघ्रखण्डितसुहृत्प्रमोहेन सन्तप्तं मां सौजन्येन विगतक्लेशं कृतवती ततोऽस्यैव मम हृदयं जीवितं च पूर्णपात्रवृत्त्या वर्धापकेन स्वीकर्तुमियं प्रभवति । त्वं च प्रभवसीत्यर्थः । तदायत्ते मे हृदयजीविते इति भावः । यद्वा । चौरिकाविवाहसम्पादनेन हृदयहारिता नोचेज्जीवितहारितेत्यर्थः । वर्धापकं यदानन्दादलङ्कारादिकं पुनः । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥ इति हारावली । पूर्णपात्रं वर्धापकेऽपि चेति मेदिनीकारोऽपि ।

मद। स्वगतम्। जाणादि महाभाअधेओ जणो अवसरे गुरुअरमणिज्जं (ड) मन्तिदुं (११)।

माल। स्वगतम्। किं णाम मअरन्देण उव्वेअकारणं सुदं भविस्सदि (१२)।

माध। वयस्य! का पुनर्ममाधिकोद्वेगहेतुर्वार्त्ता। (ढ)

प्रविश्य पुरुषः। वत्से मदयन्तिके! भ्राता ते ज्यायानमात्यनन्दनः समादिशति। अद्य परमेश्वरेणाभ्यन्तरमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव प्रतिपादिता मालती तदेहि संभावयामः प्रमोदमिति। (ण)

मक। वयस्य! सेयं वार्त्ता। मालतीमाधवौ वैवर्ण्यं नाटयतः।

मद। मालतीं सहर्षमालिङ्ग्य। सहि मालदि! तुमं क्खु एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि मे पिअसही

---

(११) जानाति महाभागधेयो जनोऽवसरे गुरुकरमणीयं मन्त्रयितम्।

(१२) किं नाम मकरन्देनोद्वेगकारणं श्रुतं भविष्यति।

---

(ड) गुरुकरमणीयं श्रोतृसुखदम्।

(ढ) मकरन्देन काञ्चिद्वार्त्तामुपश्रुत्येति यदुक्तमेतच्छृण्वानः पृच्छति। वयस्येति।

(ण) ज्यायाञ्ज्येष्ठः। परमेश्वरो राजा। विश्वासमभेदम्। सम्भावयामः कारयामः। उत्सवपूर्वको हर्षः प्रमोदः।

आसी वहिणिआ अ संपदं उण वरस्स मण्डणं जादासि (१३)। (त)

काम। वत्से मदयन्तिके ! दिष्ट्या वर्धसे भ्रातुर्मालतीलाभेन। (थ)

मद। तुह्माणं आसिसां पहावेण। सहि लवङ्गिए ! फलिदा णो मणोरहा तुह्माणं लाहेण (१४)। (द)

लव। सहि ! किं अह्माणं पि णत्थि मन्तिदव्वं (१५)। (ध)

---

(१३) सखि मालति ! त्वं खल्वेकनगरनिवासेन सहपांशुक्रीडनादारभ्य मे प्रियसख्यासीर्भगिनिका च साम्प्रतं पुनर्वरस्य मण्डनं जातासि।

(१४) युष्माकमाशीःप्रभावेण। सखि लवङ्गिके ! फलिता नो मनोरथा युष्माकं लाभेन।

(१५) सखि ! किमस्माकमप्यस्ति मन्त्रयितव्यम्।

---

(त) मद्भ्रातृवधूर्भविष्यसीति भावः।

(थ) नोशब्दोऽस्माकमित्यर्थे निषेधे च तुल्यरूप इति निषेधोऽप्यत्र स्फुरति। अत एवोत्कण्ठमाह। भ्रातुरित्यादि।

(द) उभयत्रोत्तरमाह। फलिता इति पाठ इतः पूर्णा इत्यर्थः। अयमभिसन्धिः। यूयं राज्ञः प्रणयिनो वयं सेवकाः। अतो युष्मत्सम्बन्धेन वयं पूर्णमनोरथा इति वचनमात्रम्। वस्तुतस्तु तत्सम्बन्ध एवास्माकं न भवितेति। माधवविवाहस्यावश्यकत्वात्।

(ध) यद्वा यदेतत्त्वया मन्त्रितमस्माकं मनोरथाः पूर्णा युष्माकं लाभेनेति वयमेव तद्दासः। तेन त्वं मकरन्देन परिणतव्येति मनोरथा अस्माकमेव पूर्णा भविष्यन्तीति गूढमुक्तम्। व्यक्तं तु युष्माकं राज-

मद। सहि बुद्धरक्खिदे! दाणिं विवाहमहूसवं संभावेह्म (१६)।

बुद्ध। सहि! एहि गच्छह्म (१७)। इत्युत्तिष्ठतः।

लव। जनान्तिकम्। भअवदि जहा एदे हिअअभरिदुव्वित्तविह्मआणन्दसुन्दरं अन्दोलाअन्तधीरत्तणमणोहरा पल्हत्थन्ति मदअन्तिआमअरन्दाणं दलिदकन्दोट्टदामसरिच्छा कडक्खविक्खेवा तहा तक्केमि मणोरहणिव्वुत्तसंवन्धा एदे त्ति (१८)। (न)

---

(१६) सखि बुद्धरक्षिते! इदानीं विवाहमहोत्सवं सम्भावयावः।

(१७) सखि! एहि गच्छावः।

(१८) भगवति! यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरमान्दोलायमानधीरत्वमनोहराः पर्यवस्यन्ति मदयन्तिकामकरन्दयोर्दलितनीलोत्पलदामसदृशाः कटाक्षविक्षेपास्तथा तर्कयामि मनोरथनिर्वृत्तसम्बन्धावेताविति।

---

मितानां लाभेन राजसेवका वयमेव पूर्णमनोरथा इति भावः। यद्वा। एतत् कामन्दक्याख्यं मन्त्रिरूपं द्रव्यमस्माकमपत्र विषये वर्तते तेन प्रतिहतमेतत्।

(न) अत्र भरमितो भरितः। शकन्ध्वादित्वात्पररूपम्। यद्वा। भरणं भरः सञ्जातोऽस्य। तारकादित्वादितच्। व्यवस्थितविभाषया वेट्प्राप्तेः। अत एव वासवदत्तादौ भरितेति प्रयोगः। हृदये भरितौ पूर्णावुद्वृत्तावमान्तौ विस्मयानन्दौ ताभ्यां सुन्दराः। व्याघ्रनिपाताद्धृदयनिहितो विस्मयः। इष्टदर्शनादानन्दः। आन्दोलितं परित्यक्तं यद्धीरत्वं तेन मनोहराः। दलितं विकसितम्। कन्दोट्टं नीलोत्पलम्। सदृक्षास्तुल्याः। कान्ता दृष्टिरियम्।

काम। (विहस्य।) नन्विमौ विलोकनेन मानसं मुहुर्मुहुर्मोहनमनुभवतः। (प)

तथाहि। ईषत्तिर्यग्वलनविषमं कूणितप्रान्तमेत-
त्प्रेमोद्भेदस्तिमितलुलितं किञ्चिदाकुञ्चितभ्रु।
अन्तर्मोदानुभवमसृणं स्तम्भनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम्॥ (फ)

---

(प) मोहनं सुरतम्। अत एव कामशास्त्रम्। मोहनं नारभेत्तावद्यावन्नोत्कण्ठिता प्रिया॥ इति।

(फ) ईषदित्यादि। एतदनयोर्दृष्टं दर्शनं व्यक्तं शंसति यदेतौ मानसं मोहनमनुभवत इत्यन्वयः। दृष्टं कीदृशम्। ईषन्मनाक् तिर्यग्वलितेन विषमं मन्दम्। अनेन सङ्कल्पसङ्गतानङ्गस्य पराभ्युहशङ्कितेयं दृगित्युक्तम्। यदाह। शङ्कायां शङ्किता ज्ञेयेति। कुञ्चितप्रान्तमाकुञ्चितापाङ्गम्। मदयन्तिकाया जडत्वान्मकरन्दस्यान्यदर्शनसासूयत्वाज्जिह्मा दृष्टिः। यदाह। जिह्मा दृष्टिरसूयायां जडतालक्षयोस्तथा॥ इति। दृष्टिद्वयेन सुरतप्रागवस्थोक्ता। प्रेम्ण उद्भेदादतिपरिपाकात् स्तिमितं स्थिरं लुलितमर्धमुकुलितं च। अर्धमुकुलितेयं दृक्। यदाह। आङ्गादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु। अर्धव्याकोषपक्ष्माग्रपत्त्रार्धमुकुलैः पुटैः॥ स्यूताधमुकुला दृष्टिः किञ्चिन्मीलिततारका॥ अनेन रताभोग उक्तः। नखदशनक्षताद्दिशङ्कया मानं सूचयति। किञ्चिदाकुञ्चिते आनमिते भ्रुवौ यत्र तत्। एकस्या एव भ्रुव उत्क्षेपणं कुञ्चनमिह। यदाह। एकस्या एव उत्क्षेपो भ्रुवः कुञ्चनमुच्यते॥ कोपे चास्य प्रयोगः। यदाह। कोपे वितर्के हेलायां लीलादौ सहजे तथा। दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत्॥ मानस्याल्पत्वसूचनार्थमाङ्प्रयोगः। रतावसानमाह। हृदये हर्षानुभवेन मसृणं स्निग्धं मन्दं वा। रतान्ते लज्जामाह। स्तम्भं लज्जान्विततया परितोऽर्धपुटत्वात्। कथं पुनः

पुरुषः । वत्स ! इत इतः ।

मद । सहि बुद्धरक्खिदे ! अवि (ब) पुणो वि दीसइ एस जीविदप्पदाई पुण्डरीअलोअणो (१९) ।

बुद्ध । जइ देव्वमणुऊलं भविस्सदि त्ति (२०) । पुरुषेण सह निष्क्रान्ते ।

माध । अपवार्य ।

चिरादाशातन्तुस्त्रुटतु बिसिनीसूत्रभिदुरो
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु ।
प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥ (भ)

---

(१९) सखि बुद्धरक्षिते ! अपि पुनरपि दृश्यत एष जीवित-प्रदायी पुण्डरीकलोचनः ।

(२०) यदि दैवमनुकूलं भविष्यति ।

---

सम्भोगो भावीति चिन्तया निष्कम्पम् । शून्यतया निष्कम्पं वा । तादृशं पक्ष्म यत्र । तद्विच्छेदमाह । आकेकरमक्षि यत्र तत् । आकेकरा त्वरालोके विच्छेदे प्रोषितेषु चेत्याद्युक्तम् । तदिहाकेक-रलक्षण आकुञ्चितेत्यादि प्रथमपदेनोक्तम् । द्वितीयेन मुहुर्व्यावृत्त-तारेत्युक्तम् । तृतीयेन हर्षिताश्चैत्याद्युक्तम् ।

(ब) अपिनाम सम्भावनायाम् । अव्ययसमुदायत्वात् ।

(भ) करुणावस्थामाह । चिरादित्यादि । चिरमाङ्कुत आशा-तन्तुर्मालतीप्राप्त्याशारूपहृदयावलम्बनं सम्प्रति भिद्यताम् । बिसि-नीसूत्रवद्भिदुरो भेदनस्वभावो यतः । भिदेः कर्मकर्तरीति कुरच् । सम्भूय त्रुटितत्वेन मृणालतन्तुसाम्यम् । नैराश्यान्मरणमाह ।

अथवा । समानप्रेमाणं जनमसुलभं प्रार्थितवती
विधौ वामारम्भे मम समुचितैषा परिणतिः ।
तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥-(म)

काम । स्वगतम् । एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो वत्सा मालती च दुष्करं निराशा प्राणिति ।

---

आधिर्मनोव्यथा तद्रूपो व्याधिरनवच्छिन्नोऽत एव महान् व्याप्नोतु । इह महत्त्वानिरवधित्वाभ्यां मरणमाह । आशाच्छेदानन्तरं च मरणमुचितमेव । आह । सर्वैः कृतैः प्रतीकारैर्यदा नास्ति समागमः । कामाग्निना समाप्तस्य जायते मरणं ततः ॥ स्त्रोहेतुमरणादधीरत्वमाशङ्क्याशुत्तोत्तरमाह । पारिप्लवधुरा चपलकक्षा सत्यं स्थितिं मयि बध्नातु । अभीष्टलाभेन विधिर्निराकुलो भवतु । मालतीं विना दुःसहवेदनादायी मनोभूः कृतकृत्यो भवतु । मरणादधिकं किं कर्तव्यमस्येत्यर्थः । एतदुपालम्भगर्भं वच उद्वेगात् । यदाह । हृद्दाहचिन्तानिःश्वासग्लानिखेदप्रजागरैः । रोदनैर्मन्दभणितैर्दैवोपालम्भनेन च ॥ इति ।

(म) समानेत्यादि । वामारम्भे प्रतिकूले विधौ ममैषा परिणतिः पूर्वोक्ता युक्तैव । कीदृशस्य । तुल्यप्रीतिं दुष्प्रापं जनं याचितवतः । वामे हि विधौ सुलभमपि न लभ्यते किं पुनरसुलभमिति भावः । इष्टकारणस्यानुपलम्भाद्विधेर्वामत्वम् । असुलभत्वं परतन्त्रत्वात् । यद्यपि युक्तोऽर्थे खेदो नास्ति तथाप्यस्या मालत्यास्तादृशं मुखं मामन्तर्दहति । एतन्मुखं वीक्ष्य मनस्तापो मे भवतीति भावः । अस्मिन्दानश्रवणसमये नन्दनाय मालती दातव्येति श्रुत्वा खेदात् कान्तिशून्यत्वम् । अत एव प्रातश्चन्द्रकान्ति क्वापि विगतकान्ति भवति । अत्र च प्रातश्चन्द्रोपमया रागध्वनेर्विधिं प्रति मालतीकोपोऽपि सूचितः ।

प्रकाशम्। पृच्छामि तावदायुष्मन्तम्। अपि भवानमंस्त (य) यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यति।

माध। सलज्जम्। न हि न हि।

काम। न तर्हि प्रागवस्थाया: (र) परिहीयसे।

मक। भगवति! अदत्तपूर्वेत्याशङ्क्यते। (ल)

काम। जानामि तां खलु वार्त्ताम्। इदं तु प्रसिद्धमेव यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान् प्रभवति निजस्य कन्यकाजनस्य महाराज इति।

मक। अस्त्येतत्।

काम। अद्य च स्वयं राज्ञैव दत्ता मालतीति पुरुषेणा-वेदितम्। तदेतत् वाक्प्रतिष्ठानिबन्धनानि देहिनां व्यव-हारतन्त्राणि वाचि पुण्यापुण्यहेतवो व्यवस्थिता: सर्वं च वचनानामायत्तम्। सा च भूरिवसोर्वागनृतात्मिकेव न खलु महाराजस्य मालती निजा कन्यका कन्यादाने च नृपतय: प्रमाणमिति नैवंविधो धर्माचारसमयस्तस्मादवि-मर्शितव्यमेतत् (व)। कथं च वत्स! मामनवधानां मन्यसे। पश्य।

---

(य) दुष्करं यथा तथा प्रार्थितं जीवति। अमंस्त मन्यते स्म।

(र) प्रागवस्था मालतीप्राप्तिलक्षणा। तदा तस्याज्ञानमिति भाव:।

(ल) दत्तपूर्वा पूर्वं दत्ता। सुप्सुपेति समास:। इदं च तापहेतु:।

(व) वागिति वाचि सर्वं प्रतिष्ठितमिति भाव:। अन्तरात्मिका-सत्या। धर्माचारसमया धार्मिकसिद्धान्ता:। समया: शपथाचार-कालसिद्धान्तसंविद इति विश्व:।

मा वा भवत्स्वपि नाम तद्भूत्
पापं यदस्यां त्वयि वा विशङ्क्यम् ।
तत्सर्वथा संगमनाय यत्नः
प्राणव्ययेनापि मया विधेयः ॥ (ग)

मक । सुष्ठु युज्यमानमादिश्यते युष्माभिः ।

अपि च । दया वा स्नेहो वा भगवति निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति ।
अतश्च प्रव्रज्यासुलभसमयाचारविमुखः
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ (घ)

---

(ग) निजावधानमाह । मा वेति । अस्यां मालत्यां त्वयि च यत्पापं विवाहानिर्वाहे मरणरूपं शङ्कनीयं विप्रयोगजन्यदुःखादि वा तत्कत्स्वपि नाम प्राकाम्ये मा वा भून्नैव भविष्यति । वाशब्द एवार्थे । स्वकर्तव्यमाह । तदिति । तस्माद्युवयोः सम्बन्धाय सर्वप्रकारेण जीवत्यागेनापि मया प्रयत्नः कार्यः । यदि बुद्धिकौशलेन न सिद्धिस्तदा प्राणव्ययेनापि साध्यमित्यपेः स्वरसः । मरणादेरमङ्गलतया पापपदेनोपन्यासः । यत्स्वपि मा भूदिति लोकोक्तिच्छायानुकारः ।

(घ) दयेत्यादि । हे भगवति ! अस्मिन् शिशुजने बालजने माधवे मालत्यां च दया करुणा स्नेहो ममता च संसाराद्विरक्तमपि भगवत्याश्चित्तं द्रवयत्याद्रींकरोति । भवत्या इति दयाद्यन्वयि चित्तान्वयि च । काकाक्षिगोलकवत् । वाशब्दौ चार्थे । अत एव चित्तद्रवणात् । व्रतग्रहणपूर्वकसर्वैषणानिवृत्तिः प्रव्रज्या । तस्यां सुलभोऽवश्यम्भावी समयाचारोऽनुष्ठानविशेषो ध्यानादिविषयस्तत्र विमुखो निरुद्धो यतस्ते प्रसक्तोऽविच्छिन्नः सन् प्रभवति । च एवार्थे । कार्यासिद्धिरदृष्टविलम्बात् । तत्र न भवत्या दोष इत्याह । अपरं पुनर्दैवं

नेपथ्ये। भअवदि कामन्दइ! एसा भट्टिणी विस्सवेदि जधा मालदिं घेत्तूण तुरिदं आअच्छदु त्ति (२१)।

काम। वत्से! उत्तिष्ठ। सर्वे उत्तिष्ठन्ति।

मालतीमाधवौ सकरुणानुरागमन्योन्यमवलोकयतः।

माध। स्वगतम्। कष्टमेतावती लोकयात्रा मालत्या समं माधवस्य। अहो नु खलु भोः। (स)

सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम्।
पुनरकाण्डविवर्त्तनदारुणो
प्रविशिनष्टि विधिर्मनसो रुजम्॥ (ह)

---

(२१) भगवति कामन्दकि! एषा भट्टिनी विज्ञापयति यथा मालतीं गृहीत्वा त्वरितमागच्छत्विति।

---

प्रभवति। ईश्वरस्त्रिषु राज्ञीपदोपचारेण भट्टिनीत्युक्तम्। भरतोऽप्याह। राजस्त्रियस्तु सम्भाष्याः सर्वाः परिजनेन तु। भट्टिनी स्वामिनीत्येवं नाट्ये प्राङ्गविचक्षणाः॥

(स) लोकयात्रा दर्शनादिकम्। अहो नु खलु भो इत्यव्ययसमुदायो निर्वेदे।

(ह) सुहृदित्यादि। एकत्रैव रसो रतिर्यस्यास्ताम्। यद्वा। एक एव रसः शृङ्गारो यस्यां ताम्। निरन्तरां वानुकूलतामानुकूल्यं प्रथमं प्रकाश्य सुखप्रदो विधिः पुनर्मनसो रुजं पीड़ां प्रविशिनष्ट्यतिशयितां करोति। कीदृशः। अकाण्डादकस्माद्विवर्तनेनान्यथाभावेन विरुद्धवर्तनेन वा दारुणो दुःखदायी। सुहृदिव। यथा मित्रमानुकूल्यमुत्पाद्य सुखप्रदं सदकाण्ड एव विरुद्धाचरणान्मनःपीड़ां करोति तथेत्यर्थः।

माल । स्वगतम् । महाभाअ लोअणाणन्द ! एत्तिअं दिट्ठोसि (२२) । (च)

लव । हद्धी हद्धी सरीरसंसअं ज्जेव्व णो पिअसही आरोविदा अमच्चेण (२३) ।

माल । स्वगतम् । परिणदं मे दाणिं जीविदतिह्णाए फलं । णिव्वूढं अ णिक्करुणदाए तादस्स वि कावालि-अत्तणं (क) । पडिट्ठिदो दुट्ठदेवस्स दारुणसमारम्भसरिसो परिणामो । कं एत्थ उवालहामि मन्दभाइणी कं वा असरणा सरणं पडिवज्जामि (२४) ।

लव । सहि ! हदो हदो (२५) । इति कामन्दक्या सह निष्क्रान्ते ।

---

(२२) महाभाग लोचनानन्द ! एतावद्दृष्टोऽसि ।

(२३) हा धिक् हा धिक् शरीरसंशयमेव नः प्रियसख्यारोपिता-मात्येन ।

(२४) परिणतमिदानीं मे जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम् । प्रतिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः । कमिहोपालभे मन्दभागिनी कं वाशरणा शरणं प्रतिपद्ये ।

(२५) सखि ! हत हतः ।

---

(च) पुनर्दर्शनं न भवितेति भावः । अत एवैतावदित्यनेन करुणा । नयनानन्देत्यनेनानुरागः ।

(क) अत्र पुरा विरहदशायां माधवप्रतिच्छन्दकादिदर्शनाद्धारितस्य जीवितस्य पर्यवसानं वृत्तमिति परिणतपदस्यार्थः । कापालिकत्वं नृशंसता । अघोरघण्टस्य सूचनमप्येतत् ।

माध । स्वगतम् । नूनमाश्वासनमात्रमेतन्माधवस्य सहजस्नेहकातरा करोति भगवती । सोद्वेगम् । हन्त संशयितजन्मसाफल्यः संवृत्तोऽस्मि । तत्किमिदानीं कर्तव्यम् । विचिन्त्य । न खलु महामांसविक्रयादन्यमुपायं पश्यामि । प्रकाशम् । वयस्य मकरन्द ! अपि भवानुत्कण्ठते मदयन्तिकायाः । (ख)

मक । अथ किम् । (ग)

तन्मे मनः क्षिपति यत् सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥ (घ)

---

(ख) जन्मसाफल्यं मालतीप्राप्त्या । महामांसेति भाव्यङ्कसूचनम् । वीरहस्तान्मांसं गृहीत्वा वीरायाभिमतवरदानमिति श्मशानविद्ययोगिनीमतम् । यद्वा । उभयथा मरणमुपस्थितम् । महामांसविक्रये मालतीलाभोऽपि शङ्क्यत इति तत्करणम् । मांसविक्रयस्य मकरन्दसन्निधावशक्यत्वान्मकरन्दं मदयन्तिकां प्रत्युत्कण्ठयति । वयस्येति । मदयन्तिकायाः कृत इति शेषः । यद्वा । अधीगर्थेति कर्मणि षष्ठी ।

(ग) अथ किं स्वीकारे ।

(घ) तन्मे इत्यादि । तन्मम चित्तं हरति यदेतादृशैरङ्गैर्मामालिङ्गितवती । सरसः सरक्तः प्रहारो यत्र तादृशं मामवलोक्य । अत एव त्वरयागणितं स्खलत् प्रभ्रश्यदुत्तरीयं स्तनावरणवासो यस्याः सा । एतेन निरन्तरस्तनस्पर्शः सूचितः । अत एवानन्दसन्दोहदायित्वादमृतसिक्तैरिव । भयवत्त्वेन त्रस्तैकवर्षीयहरिणस्येव चञ्चला दृष्टिर्यस्याः सा । वर्षोऽब्दो हायनोऽस्त्री स्यादित्यमरः ।

माध । सुलभैव बुद्धरक्षिताप्रियसखी भवतः ।
अपि च ।

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।
तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥ (ङ)

मक । तदुत्तिष्ठ पारासिन्धुसंभेदमवगाह्य (च) नगरीमेव प्रविशाव: । उत्थाय परिक्रम्य ।

माध । अयमसौ महानद्योः संभेदः (व्यतिकरः) (छ) ।
य एषः

---

(ङ) तासेन त्वदालिङ्गनं न तु स्नेहादिति शङ्कापनोदाय दुर्लभतयानुरागमेवाह । सुलभेति । प्रमथ्येत्यादि । सा तवालिङ्गनं प्राप्यान्यत्र कथं रमताम् । अपि तु नैव । इत्यशब्दोऽत्रवक्तृमौ । कुलीनैकमार्गिलङ्गत्र नान्यत्र रमत इति भावः । कीदृशस्य । क्रव्यात्मामसांसमत्तीति क्रव्याद्याघ्रः । तं विनाश्य मरणकाले तां रक्षितवतः । एतेन कृतोपकारितोक्ता । अतोऽपि नान्यत्र रमते । पद्माक्ष्याश्चक्षुषोस्तथा तेन प्रकारेण त्वयि व्यापारस्य व्यक्तः स्नेहात् स्तिमितो मन्दोऽत एव रमणीयश्चिरमभूत् । रागेण तया साभिलाषमालोकितोऽसीति भावः । एतेनानुराग उक्तः । यदाहानुरागप्रकरणे । तुष्यत्यस्य कथाभिस्तु सस्नेहं च निरीक्षते ॥ क्रव्यमामिषमुद्दिष्टमिति हारावली ।

(च) पारा च सिन्धुश्च ते नद्यौ तयोः सम्भेदः सङ्गमः । अवगाह्य विलोड्य । स्नात्वेति यावत् । श्रमशान्तिहेतुतया महामांसदानहेतुतया च स्नानम् ।

(छ) व्यतिकरः सङ्गमः ।

जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नानमात्रोत्थिताभिः ।
रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ (ज)

इति निष्क्रान्ताः सर्वे ।

शार्दूलविभ्रमो नाम चतुर्थोऽङ्कः । (झ)

---

(ज) जलेत्यादि । वधूभिर्नारीभिः सेविततटदेशः । कीदृशीभिः । जलेन निबिडितसङ्कलग्नं यद्वासस्तेन व्यक्तौ निम्नोन्नतौ जघनादिस्तनाद्यौ यासाम् । अत एव स्नानमात्रोत्थिताभिः । मात्रपदेन स्नानार्द्रवस्त्रापरित्यागः सूचितः । अत एव चाह्लादहेतुतया स्नानमपि । तौ दृष्ट्वा तासां लज्जामाह । मनोज्ञस्वर्णघटशोभावानाभोगः परिपूर्णता ययोरुच्चकुचयोस्तयोर्विनिहितौ दत्तौ हस्तावेव स्वस्तिकौ याभिस्ताभिः । हस्ताभ्यां स्वस्तिकोऽन्योन्यासमर्दाच्छादनविन्यासः । यदाह । मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ । उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ अरालस्त्वेवम् । आद्या धनुर्लताकारा कुञ्चितोऽङ्गुष्ठकस्तथा । शेषा भिन्नोर्ध्ववलिता अरालेऽङ्गुलयः करे ॥ कनकेत्यादिना तासां गौरीत्वमुक्तम् । मङ्गलकलशानामिवैषां दर्शनेनेष्टसिद्धिरपि सूचिता ।

(झ) असूत यं रत्नधरो द्विजेशो द्विजेशकन्या दमयन्तिकापि ।
जगद्वरं तत्कृतटिप्पणेऽङ्कोऽगमच्चतुर्थो रसराशिवासः ॥

इति चतुर्थोऽङ्कः ।

---

# पञ्चमोऽङ्कः। (क)



ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेशा कपालकुण्डला। (ख)

कपा। षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥ (ग)

---

(क) सम्प्रति प्रमथ्य क्रव्यादमित्यनेनाघोरघण्टकपालकुण्डलाप्रवेशे सूचिते महामांसविक्रयप्रतिज्ञया च माधवस्य श्मशानप्रवेशे सत्यङ्कावतारः।

(ख) आकाशयानेन प्रवेशो योगसिद्धिसूचनाय। भीषणा भयंकरी। उज्ज्वलवेशा विशुद्धशरीरा। एतदपि योगिनीत्वादेव।

(ग) षडधिकेत्यादि। स शक्तिनाथः शिवो जयति जययुक्तो भवति। कालसामान्ये भवत्विति वक्तव्ये भाष्यकारवचनात् कालत्रितयेऽपि वा लट्। श्मशाननाथस्य जयेन श्मशानसाधनसिद्धिः सूचिता। कीदृशः। अविचलितं निःस्पन्दीभूतम्। विषयान्तरव्यावृत्तमिति यावत्। मनो येषां तैः साधकैर्मृग्यमाणोऽन्विष्यमाणः। अनेन ध्यानानुष्ठानमुक्तम्। यदाह। रूपवर्णप्रमाणाद्यं परिकल्प्य सुबुद्धिना। तथा ध्यायेत देवेशं यथा चित्तं स्थिरं भवेत्॥ चित्तस्थैर्यं च निर्विषयतयैव। यदाह। मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धस्य विषयासङ्गि मुक्तौ निर्विषयं मनः॥ तथाच निराकारोऽप्ययं सहसैव न साक्षात्कारविषयो भवतीति न योग्यानुपलम्भमात्रेण निरस्य इत्यपि कटाक्षितम्। शक्तिभिर्ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीमाहेन्द्रीचामुण्डाचण्डिकाख्याभिरष्टाभिः परितो नद्धो वेष्टितो भैरवमूर्तित्वात्। यद्वा। शक्तिभिर्ज्ञानेच्छाप्रयत्नात्मि-

इयमहमिदानीं

नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।

---

काभिः परिणद्ध उपचितः । अत एव शक्तीनामणिमादीनां नाथः प्रभुः । अत एव जयति सर्वोत्कृष्टो वर्त्तते । कीदृशः । षट्सु कर्णनाभिहृत्कण्ठतालुभ्रूमध्यवर्तिषु शिवशक्तिसङ्घट्टस्थानेषु नाडीसङ्घट्टेषु हृष्टान्यधिष्ठितप्राणविशेषचलनयोगाच्चक्रेष्विव मध्येऽधिकं प्रधानं यद्दशनाडीचक्रमिडापिङ्गलासुषुम्णागान्धारीहस्तिजिह्वापूषारुणालम्बुषाकुहूशङ्खिन्याख्या दश नाड्यो हृद्गतैकोत्तरशतसंख्यासु तिर्यगूर्ध्वाधोगतनाडीषु प्रधानतमास्तासां चक्रं तस्य मध्ये पद्ममध्यवर्तिसूक्ष्माकाशदेशे प्राणाद्याधारे स्थित आत्मा कूटस्थो नित्यो यस्य स तथा । तत्र प्रमाणम् । आशिरःश्रवणं देहं यद्यपि व्याप्य तिष्ठति । तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम् ॥ इति । स्थितिरपि तस्य तत्र परमात्मतत्त्वाविर्भाव एव । यद्वा । षड्भिरधिका दशनाड्यः षोडशसंख्यास्तासां चक्रं तत्र मध्ये स्थितश्चासावात्मा चात्मस्वरूपः । तदुक्तम् । सर्वं शिवमयं मतमिति । यद्वा । षड्धिकं यद्दशनाडीचक्रम् । मतभेदेनैते पक्षाः । हृदि हृत्पद्मे विनिहितरूपो ध्यानमूर्तिः सन्न्यस्तहृदां शिवसाक्षात्कारवतां सिद्धिदोऽणिमाद्यैश्वर्यप्रदः । अत्र मानम् । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । सकलं चिन्तयेत्तस्मात्सिद्ध्यर्थं सततं शिवम् ॥ ध्यानेन तत्परं गच्छेत्तदैश्वर्यगुणाष्टकम् । महिमा लघिमाणुत्वं प्राकाम्यं वशितेशिता ॥ प्राप्तिः कामावसायित्वं शम्भोरैश्वर्यमष्टधा ॥ मृग्यमाणोऽप्ययं केनापि ज्ञायते न तु सर्वेण । यदाह । यततामपि सिद्धानां कश्चिन्मां वेति तत्त्वतः ॥ इति । यद्वा । तद्विदां ताः सिद्धीरुपायदेशकालप्रमाणेतिकर्तव्यताभिर्ये विदन्ति तेषां सिद्धिदोऽभिलषितसिद्धिद इत्यर्थः ।

(घ) आत्मनि योगसिद्धिमाह । नित्यमित्यादि । इयमह-

नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-
दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोम्भोमुचः॥ ध)

---

मिदानीमभ्यागताभीष्टस्थानाभिमुखमागता श्रीपर्वतादित्याक्षेपात्। कीदृशी। शिवस्वरूपमात्मानं पश्यन्ती। लयवशाच्चित्तैकाग्रतया। अनेन सर्वेषां तत्प्रकाशोपास्तिः। कीदृशम्। नित्यमविनाशिनम्। न्यस्तानि देहे मन्त्रन्यासेनार्पितानि यानि षडङ्गानि हृदयशिरःशिखानेत्रकवचास्त्राणि तेषां चक्रे समूहे निहितमारोपितं मन्त्रन्यासेन। यदाह। षडङ्गमेतत् कथितं सर्वसिद्धिप्रदायकम्। न्यसेद्वै भक्तियुक्तात्मा साधको ज्ञानचिन्तकः॥ त्रिकालमेककालं वा शरीरे विन्यसेद्बुधः॥ अनेनाङ्गावरणमुक्तम्। नित्यन्यस्तेति पाठे नित्यं प्रत्यहं न्यस्तानीत्यर्थः। हृत्पद्ममध्ये हृत्कमलकर्णिकायां ध्यानाभ्यासात् सूर्यवदुदितम्। यदाह। पद्मसङ्काशसंस्थानं हृदयं तत्र दृश्यते। सूक्ष्मो हि पुरुषो ज्ञेयः परमात्मा हृदि स्थितः॥ अभ्यासात्पश्यते सूर्यं परमात्मनेमात्मना॥ नाडीनां पूर्वोक्तानामिडापिङ्गलादीनामुदयक्रमेण वायुपूरणपरिपाट्या जगतः शरीरस्य पञ्चभूतात्मकस्य पञ्चामृतानां पृथिव्यप्तेजोवाय्वाकाशानां योगर्द्धिबलाद्य आकर्षस्तस्मादप्राप्तोऽनल्प उत्पतनेनाकाशयानेन श्रमो यया सा। यद्वा। अमृतमिवामृतं देहस्थितिहेतुत्वात्। तत् पुनर्विन्दुस्थानात् कुण्डलिनीस्रावणेन स्रवद्रसविशेषो रसनाग्रःस्थितरसस्रवद्रसविशेषो वा। स हि व्यापकत्वेन पञ्चशब्दवाच्यः। तदाकर्षणात्। यद्वा। जगतः शरीरस्य पञ्च यान्यमृतानि शिवशक्त्यात्मकानि रूपरसगन्धस्पर्शशब्दलक्षणानि नित्यानि स्थूलमहाभूतमात्रापरिपोषकानि। योगिनीनां तेषामुपयोगात्। तदाकर्षणेन सामर्थ्यादिकं योगिनीनामिति भावः। न च लयवशत्वेन निष्क्रियतयोत्पतनं न सम्भवतीति वाच्यम्। लयस्यान्तरापि सामर्थ्यात्। यदाह। मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम्। तथापि योगिनां योगो ह्यविच्छिन्नः प्रकीर्तितः॥ उत्पतनादिसाहाय्याद्देवाग्रे भुवः पुरोवर्तिनो मेघान् विघटयन्ती द्विधा कुर्वन्ती। अग्रे नभ इति पाठे। आकाशमेघानग्रे

अपिच । उल्लोलस्खलितकपालकण्ठमाला-

संघट्टक्वणितकरालकिङ्किणीकः ।

पर्याप्तं मयि रमणीयडामरत्वं

संधत्ते गगनतलप्रयाणवेगः ॥ (ङ)

तथाहि ।

विष्वग्वृत्तिर्जटानां प्रचलति निबिड़ग्रन्थिनद्धोपि भारः

संस्कारक्वाणदीर्घं पटु रटति कृतावृत्तिखट्वाङ्गघण्टा ।

---

विघटयन्तीत्यर्थः । न च नभःपदवैयर्थ्यम् । वनपर्वतादावपि मेघसद्भावेन तद्विघटन आकाशगामित्वोत्कर्षाप्रतिपादनात् । यद्वा । अभ्रे नभो नभसि मेघान् विघटयन्ती । अभ्रे शब्दो विभक्तिप्रतिरूपको निपातः । तस्य विभक्त्यर्थेऽव्ययीभावः । अनेन श्लोकद्वयेन शान्तो रस उक्तः । अत्र भरतोऽपि शान्तस्तु नवमो रस इत्याह । स च विषयवैरस्यादुपजायते । यदाह । शान्तो विषयवैरस्याद्रसः संजायते पुनः ॥ इति ।

(ङ) कपालकुण्डलायाः पूर्वोक्तभीषणोज्ज्वलत्वमुपपादयति उल्लोलेति । गगनतलगमनवेगो मयि सकलं रमणीयडामरत्वं रमणीयत्वं मनोहरत्वं डामरत्वं भीषणत्वमुद्भटत्वं वा केलिसंरम्भनिर्भरत्वं वा संधत्ते समर्थं कुरुते । डामरोड्डामरौ भीमे केलिसंरम्भनिर्भर इति रत्नकोषः । वेगबलादुल्लोलेन यातायातेन स्खलिता या कपालानां कण्ठवर्तिनी माला तस्याः संघट्टक्वणितेनान्योन्यकपालसंघट्टध्वनिना करालाः मूका क्षुद्रघण्टिका यत्र सः । कपालमालोच्चध्वनिना तद्ध्वनेरश्रवणान्मूकत्वमिव मूकत्वम् । यद्वा । तथाविधक्वणितेन करालाः दन्तुराः । विषमेति यावत् । किङ्किणी यत्र सः । कुलयोगिनीनां किङ्किण्यादिध्वनिना सानन्दत्वम् । यदाह । समुद्रघोषसंभारकिङ्किणीघण्टिकास्वनैः । सदानन्दो भवेद्योगी न निद्रा न क्षुधा तृषा ॥ इति ।

(च) तदेवाह । विष्वगिति । जटानां भारः समूहो निबिड़ं

ऊर्ध्वं धूनोति वायुर्विततशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किङ्किणीनामनवरतरणत्कारहेतुः पताकाः ॥ (च)

परिक्रम्यावलोक्य च । गन्धमाघ्राय । इदं तावत् पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनगन्धिभिश्चिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवाटस्य नेदीयः करालायतनं यत्र पर्यवसितमन्त्रसाधनस्याऽस्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य पूजासंभारो मया संनिधापनीयः । कथितं च मे गुरुणा वत्से कपालकुण्डले ! अद्य मया भगवत्याः

---

इह यथा तथा अन्यत्रस्थोऽपि विष्वग्वृत्तिः सर्वतोव्यापी सन् प्रचलति । गगनगमनवेगादित्यर्थात् । विष्वक्शब्दो नानार्थः सुषमादिषु पठ्यते तेन षत्वम् । कृतावृत्तिः कृतगतागता कृतखण्डभ्रमणा खट्वाङ्गसहिता घण्टा संस्कारेण सन्तानेन यः क्वाणो ध्वननं तेन दीर्घं पटु रमणीयं च यथा तथा रटति शब्दायते । एतेन डामरत्वमुक्तम् । खट्वाङ्गं वाद्यभेदः । वायुरूर्ध्वं पताका धूनोति कम्पयति । धूञ् कम्पने । दीर्घान्तः स्वरतीत्यादिसूत्रे न्यासकारेणोक्तः । कीदृशः । विहृतानि यानि निर्मांसतया शवशिरांसि तेषां श्रेणयः पङ्क्तयस्तावा यानि कुञ्जानि गहनाः प्रदेशास्तेषु गुञ्जन् ध्वनन् । अत एवोत्तालः उद्भटध्वानः क्षुद्रघण्टिकानामजस्ररणत्कृतिहेतुश्च । अनेन रमणीयत्वमुक्तम् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपीत्यमरः । यद्वा । पटुरटनेन रमणीयत्वं पताकाकम्पनेन डामरत्वमेवोक्तम् ।

(छ) पुराणेत्यादिना चिताधूमानां स्वभावाख्यानम् । अक्तं व्याप्तम् । परिभर्जनं वह्निमध्यनिक्षेपपाकः । अम्लरसेनैकेनोनं पञ्चरसं रसोनम् । लशुन इति ख्यातम् । वध्यते वेष्ट्यतेऽनेनेति वाटः । हलश्चेति घञ् । यद्वा वाटः पथो मार्ग इति भागुरिः । नेदीयो निकटम् । पर्यवसितं समाप्तं विनष्टं च । मन्त्रसाधनं पुरश्चरणजपादि । संभारः समूहः । उपयाचितं मनीषितार्थं स्वीकृतम् ।

करालायाः प्रागुपयाचितं स्त्रीरत्नमुपहर्तव्यम् । तदत्रैव नगरे विदितमास्ते इति तद्विचिनोमि । सकौतुकमग्रेऽवलोक्य । तत्कोऽयमतिगम्भीरमधुराकृतिरुत्तम्भितकुटिलकुन्तलः (छ) कृपाणपाणिः श्मशानवाटमवतरति । य एषः

कुवलयदलश्यामोऽप्यङ्गं दधत् परिपाण्डुरं
ललितविकटन्यासः श्रीमान् मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥ (ज)

---

यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु दोहदं सम्प्रचक्षते इति हारावली । स्त्रीरत्नमिति । जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते इति विश्वः । विदितमुपलभ्यम् । विचितमिति पाठेऽन्विष्टम् । गम्भीरेत्यादि । विकाराः सहजा यस्य हर्षक्रोधभयादिषु । भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥ इति । अभ्यासात् करणानां तु श्लिष्टत्वमुपजायते । महत्स्वपि विकारेषु तन्माधुर्यमुदाहृतम् ॥ इति भरतः । उत्तम्भितो जूटाकारेण बद्धः कुटिलो वक्रः कुन्तलः केशो यस्य सः । एतेन रौद्ररसवत्तोक्ता ।

(ज) कुवलयेत्यादि । य एष स्वभावान्नीलनलिनपत्रवच्छ्यामोऽपि विप्रलम्भात् सर्वतः पाण्डुरमङ्गं दधत् । ललितो रमणीयो विकटो भीषणो न्यासो देहन्यासो यस्य सः । ललितत्वं स्वभावात् । विकटत्वं रौद्रात् । यद्वा । न्यासः करचरणादिचालनम् । श्रीमानतिरम्यः । मृगाङ्कान्निरतिशया भा यत्र तादृशमाननं यस्य । अत एव हेयत्वार्थं मृगाङ्कपदेनोपन्यासः । यस्य वामः पाणिर्विनयं हरत्यपनयति । अत्र हेतुमाह । प्रविगलदसृक्पङ्कः स्रवद्रुधिरकर्दमः । ललच्चलं नरजाङ्गलं महामांसं यत्र सः । न हि विनीतो रक्तं महामांसं च धारयति । अत्र पूर्वार्धेन ललितत्वमुत्तरार्धेन विकटत्वमुक्तम् । अत

निरूप्य । अये ! स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पण्यायिता माधवः । तत्किमनेन । भवतु समीहितं सम्पादयामि । विगलितप्रायश्च (झ) पश्चिमसन्ध्यासमयः । तथाहि । सम्प्रति

व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ (ञ)

परिक्रम्य निष्क्रान्ता । निष्क्रम्भकः ।

---

एव व्यक्तसाहसः । महामांसधारित्वेन वीरबीभत्सरसावुक्तौ । यदाह । उत्साहाध्यवसायाद्विस्मयहर्षाच्च मोहाच्च । विविधाद्भवविशेषाद्वीररसो नाम सम्भवति ॥ अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च । उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ इत्यादित्यत्र नाप्यस्ताच्छतुरिति तुमो निषेधः । जङ्गलं निर्जनस्थाने त्रिलिङ्गरं पिशितेऽस्त्रियामिति मेदिनीकारः ।

(झ) पण्यायिता विक्रेता । विगलितप्रायो भ्रष्टप्रायः ।

(ञ) व्योम्न इत्यादि । गगनस्योपान्ता ध्वान्तलताभिर्व्याप्यन्ते । तमालपुष्पस्तवकपङ्क्तिभिरिव । एवं च पृथिव्युपान्तभागेन नूतने जले मज्जतीव । उत्प्रेक्षेयम् । त्रियामा रात्रिः । प्रारम्भे प्रदोषमात्रेऽपि नीलत्वं निजं वनेषु तरुणयति । कीदृशम् । वातानां समूहो वात्या तस्याः संवेगेन निवर्तनेन विष्वक् चतुर्दिशं वितता विस्तारिता वलयिता वलयाकारा स्फीता गभीरा या धूम्या धूमसमूहो नीहारो वा तत्सदृशम् । एवं चान्धकारोपगमाद्गतप्राया सन्ध्येत्यर्थः । धूम्या धूमसमूहेऽपि नीहारेऽपि निगद्यत इति धरणिः ।

ततः प्रविशति यथानिर्दिष्टो माधवः ।

माध । साशंसम् । (ट)

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ (ठ)

किञ्च । अतिमुक्तमदुग्रथितकेसरावली-
सततादिवाससुभगार्पितस्तनम् ।
अपि कण्ठजाहविनिवेशितानन:
प्रियया तदङ्कपरिवर्तमाप्नुयाम् ॥ (ड)

---

(ट) साशंसं संप्रार्थनम् ।

(ठ) प्रेमेत्यादि । मुग्धदृशो मालत्यास्तास्ता अनुभूताश्चेष्टाः संभोगे चुम्बनादयो मयि पुनर्भूयासुः । चेष्टाविशेषाः संभोगे चुम्बनालिङ्गनादयः ॥ इति कण्ठाभरणम् । कीदृश्यः । प्रथमं प्रेम्णा संभोगप्रीत्यार्द्रा इव तापशान्तिहेतुरोमाञ्चादिजनकत्वात् । ततो विश्वासमुपेत्य चित्तप्रसादस्पृशः । ततः परिचयात् सुखास्वादभेदादुद्भटरागोद्रेकाः । निसर्गमधुराः सहजमनोज्ञाः । यास्वाशंसोपनीतास्वपि क्षणाच्चिरतिशयसुखघनो लयो लीनता भवति तासु चेष्टासु मनो लीयत इत्यर्थः । कीदृशः । अन्तःकरणस्य मनसो बाह्येन्द्रियव्यापारावरोधनशीलः । मालतीमयत्वेन तन्मनो बाह्यविषये न व्याप्रियत इत्यर्थः । अत एवानेकशङ्कातङ्कसंकुलेऽपि तत्र स्थाने माधवस्य न साध्वसादिकमपीति भावः । यद्वा । तास्ताश्चेष्टा वकुलवीथ्यादिषु यास्तया कृतास्तास्ता मयि भवेयुः । तासामेव दुर्लभत्वादशंसनीयता ।

(ड) प्रथमप्रीतिहेतुत्वादालिङ्गनमाशास्ते । अतिमुक्तेत्यादि । प्रियया सह तदङ्कपरिवर्तिमप्यहमाप्नुयाम् । तत्तस्या अङ्के क्रोडे सर्वतो-

अथवा । दूरे तावदेतत् । इदमेव प्रार्थये ।

संभूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ (ढ)

---

भावेन वर्तनम् । हृदयालिङ्गनमित्यर्थः । अपिर्भिन्नक्रमः । यद्वा । तदङ्गे परिवर्तनमूर्ध्वाधःक्रमेण पुरुषायितमाशुयाम् । कीदृशः । प्रियया कर्णजाहे कर्णमूले विनिवेशितमाननं यत्र । ममापि सः । प्रथमपक्षे कर्णमूलेऽर्पितमाननं येन सः । तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचाविति मूले जाहच्प्रत्ययः । अतिक्रान्ता मुक्ता यया सातिमुक्ता । मुक्ताहारमपास्य तदर्पणादतिक्रमः । यद्वा । अतिमुक्तानिचिरवा मालत्यवलोकनव्यासङ्गात् । एतादृशो वा मदुपचिता केसरावली तस्याः सतताधिवासेन सुभगः सुरभिरर्पितस्तनो यत्रेति क्रियाविशेषणम् । अविमुक्तेति पाठो न मनोहरः । अवियुक्तत्वादेव सतताधिवासस्य लब्धत्वात् सततपदस्य व्यर्थत्वात् ।

(ढ) संभूयेत्यादि । तस्यास्तन्मुखं पुनरपि पश्येयमित्येतदेव प्रार्थये । अङ्कप्राप्तेर्दुर्लभत्वादिति भावः । कीदृशम् । कामस्य मङ्गलार्थं गृहम् । तत्र कामो हृष्टो वसतीत्यर्थः । यद्वा । कामस्य मङ्गलघटितं हिरण्यघटितं गृहम् । कल्याणं मङ्गलं विद्यात् काञ्चनं च तदन्यमिति विश्वः । यद्वा । अनङ्गस्य मङ्गलानामुपचयहेतूनां सौकुमार्यादीनां गृहम् । अत एवोत्प्रेक्ष्यते । बालचन्द्रकलोदयात् सारैर्गृहीतैरुत्पादितमिति । कलोदयादिति भावेन द्रव्याभिधानाद्बालेन्दुकलाया अवचिताः सारास्तैरुत्पादितमित्यर्थः । सकलजनानन्दनबालेन्दुकलातोऽप्यधिकमनोहरमिति भावः । यद्वा । ल्यब्लोपे पञ्चमी । तेन बालेन्दुकलोदयं प्राप्यावचितैरित्यर्थः । यद्वा । बालेन्दुकलोदयात्प्रतिपच्चन्द्रकलोदयादारभ्यावचितैः पूर्णिमापर्यन्तमित्यर्थात् ।

यत्सत्यमधुना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेषः । मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतायमानस्तद्विसदृशप्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानस्तन्मयमिव करोत्यन्तर्वृत्तिसारूप्यतश्चैतन्यम् (ख)। तथाहि

---

आरभ्येत्यस्य लाभः पञ्चमीत एव । तथा च पूर्णेन्दुना मुखसाम्यं लभ्यते । क्वचित् कलोच्चयादिति पाठः । कलोच्चयात् समूहादित्यर्थः । यत्र मुखे सम्मुखीभूते सुखानि । कर्तृणि । मिलित्वेव परं भूमानं बाहुल्यं विस्तारयन्ति चित्ते । अनेनान्तःप्रीतिरुक्ता । इवशब्द उत्प्रेक्षायाम् । एवपाठे विस्मय एवशब्दः । बहिःप्रीतिमाह । नेत्रोत्सवोऽखण्डलाभाभिमानोऽनुरागं प्रस्तौति स्रवति । एतद्द्वयमयीत्वात् । समाधिरलङ्कारः ।

(ख) मानसमौत्सुक्यातिशयमाह । मम हीति । साम्प्रतीनः प्रियास्मरणरूपज्ञानोत्पत्तेः सन्तानः परिणतिसमूहः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति मालतीमयं करोतीत्यर्थः । कीदृशः । प्रतायमानो दीर्घीभवन् । अत्र हेतुः । संस्कारस्य भावनाया अतिशयितप्रबोधादुद्रेकात् । कीदृशस्य संस्कारस्य । सातिशयात्सादरात् स्फुटाकाराद्वा बकुलवीथ्यां पूर्वकालानुभवात्सम्भवजन्मनः । प्रतायमानत्वमेवोपपादयति । तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैरतिरस्कृतप्रवृत्तिः । तथा चान्तरा विषयान्तरास्फुरणान्न प्रवाहतिरस्कार इति भावः । नन्वात्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह । अन्तरिति । अन्तःपदमिह बुद्धितत्त्वपरम् । तथा च बुद्धितत्त्वस्य या प्रवृत्तिः सहजसिद्धो व्यापारः सा यत आत्मतत्त्वे भेदाग्रहात्प्रतिभासते तस्मात् । सांख्यदर्शने बुद्धेर्भोक्तृत्वात् । यद्वा । अन्तर्वृत्तिरिति भावप्रधानम् । तथा चान्तर्वृत्तित्वमन्तरवस्थानरूपं सादृश्यमात्मबुद्ध्योस्तस्मात् ।

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।

---

(त) स्वोक्तमेव दर्शयति । लीनेवेत्यादि । सा प्रियास्माकं चेतसि लग्ना सम्बद्धा । सम्बद्धत्वे यथासम्भवं प्रकारानाह । लीनेव निह्नुतेव । यत्र यस्य सम्बद्धस्य न प्रत्यक्षोपलम्भस्तत्र तल्लीनमित्युच्यते । यथा पयसि लीनं लवणम् । सर्वत्रात्र लग्नत्वस्य प्रकारभेदेनोपमाभेदाः । पूर्वपूर्वापरितोषाद्वा । तथाहि । लीनत्वस्याप्रतिभासात् स्पष्टप्रतिभासार्थमाह । प्रतिबिम्बितेवं । यत्र स्वच्छद्रव्याभिहतं चक्षुः परिवृत्य द्रव्यान्तरं गृह्णाति तत्तत्र प्रतिबिम्बितमित्युच्यते । यथा स्फटिके रक्तपुष्पम् । प्रतिच्छायाया वस्त्वन्तरसंसर्गाधीनत्वेनासाहजिकत्वात् साहजिकत्वोपवर्णनायाह । लिखितेव । यत्राशिथिलावयवसंयोगाश्रयेण द्रव्येण घनद्रव्योपरि संस्थानविशेषवर्णान्निर्मीयते तत्तत्र लिखितमित्युच्यते । यथा पत्रे लिपिः । लिखनस्य जलाद्युपनिपातविनाशितया न चिरस्थायित्वमतस्तदर्थमाह । उत्कीर्णरूपेव । यत्र निविडद्रव्ये ताडनेन किञ्चिदवयवविभागः क्रियते तत् तत्रोत्कीर्णम् । यथा टङ्कादिना शिलादि । तस्याप्येकभागवृत्तितया सर्ववृत्तित्वार्थमाह । प्रत्युप्तेव । प्रत्युप्तमर्धरोपितम् । यत्र द्रव्यान्तरसंसर्गि तत्तत्र प्रत्युप्तम् । यथाङ्गुलीयके मण्यादि । तस्यापि शक्योद्धारत्वान्निविडसम्बन्धायाह । वज्रलेपघटितेव । यत्र किञ्चिद्घनद्रव्याभिघातजन्यकर्मजन्यसंयोगविभागानाश्रयस्तत्तत्र वज्रलेपघटितम् । यथा हीरकादि । तथापि लेपस्य बहिर्वृत्तित्वादन्तःसंसर्गार्थमाह । अन्तर्निखातेव । यत्र सम्बद्धमूर्ध्वाधःसंयोगादिना छन्नं नोपलभ्यते तत्तत्र निखातमुच्यते । यथा भूमौ मूलकादि । निखातत्वं सर्वरोपणमुप्तत्वमर्धरोपणमित्यनयोर्भेदः । निखातस्यापि निर्बन्धातिशयेन शक्योद्धारतया विवेकादिदुःशक्यत्वार्थमाह । कामस्य पञ्चभिः शरैः कीलितेव । कीलितस्य प्रतिकीलनोद्धार्यतयाशक्योन्मूलनायाह । चिन्तापरम्परातन्तुसमूहेन गाढं यथा स्यात्तथा स्यूतेव सीवनं प्रापितेव । जालनिविडसीवनेनानुच्छेदनीय-

सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ (त)

---

त्वमुक्तम् । इहोपमेयाभेदेऽप्युपाधिभेदादपौनरुक्त्यमित्यवधेयम् । एक-मेव हि वस्तु तत्तदुपाधिवैशिष्ट्याद्भिन्नबुद्धिविषयो यथा दण्डिकुण्ड-लित्वादिः । यद्वा । नोऽस्माकं चेतसि सा लग्ना दृढं सम्बद्धा । दृढ-सम्बद्ध एव लग्नपदार्थः । शरो लग्न इत्यादौ तथादर्शनात् । दृढ-सम्बद्ध एव नानाप्रकारेण स्थिरीक्रियते । कामबाणपञ्चकेन कीलि-तेव । चिन्ताप्रवाहरूपतन्तुसन्तत्या स्यूतेव । ननु हृदयमप्यदो न युक्तम् । तया वस्त्वन्तरस्य चैतन्यस्य सम्बन्धाभावात् । अतो विषयविषयिभाव-प्रकारान्तरभेदेनाह । कीलितेति । कीलनत्वं तदात्मतया सम्बद्धत्वम् । विषयविषयिणोस्तदात्मरूप एव सम्बन्ध इति योगाचारमतमनेनोक्तम् । प्रतिबिम्बितेवेति सांख्यमतोपदर्शनम् । लिखितेवेति सौत्रान्तिकमतो-पदर्शनम् । तत्र हि ज्ञानेन स्वीयाकारार्पणं विषये क्रियत इति तत्त-दाकारस्याभिव्यक्तिः । शिलादौ तुरगादिवदिति लिखनसाम्यम् । उत्कीर्णरूपेवेति विषयाकारेण चैतन्यपरिणाम इहोत्कीर्णरूपता । सर्वास्तिवादिमतम् । प्रत्युप्तेवेति पूर्वरूपतिरोधानादन्यरूपाविर्भावेन सुवर्णरचितभाजनादाविव तत्तद्विषयाकारतया ज्ञानविपरिणाम इति पातञ्जलमतम् । वज्रलेपघटितेवेति नैयायिकमतम् । तदीयतादा-त्म्यरूपो हि स्वभावभेदः प्रकाशस्य विषयविषयिभावः । अयं च याव-द्वस्तुस्थिरतया वज्रलेपघटनातो न भिद्यते । अन्तर्निखातेवेति विज्ञानवा-दिमतोपदर्शनम् । अत्र हि विज्ञानस्यान्तर्निखननाद्बाह्यवस्तुस्थिति-रिति । इहापि तथा । एते च विषयविषयिभावविकल्पास्तच्चिन्ता-प्रकारत्वान्माधवस्य चित्ते विपरिवर्तन्ते । एवं च चेतसा सह सम्बन्धः । पश्चात् कीलनेन वा सीवनेन वा गाढसम्बद्धतां गता भवति लग्ना । ततश्च तद्दर्शनं महापुरुषानुभूतं तस्येति किमत्र चित्रमिति भावः । अत्र पञ्चभिरित्यनेन युगपत्कामबाणविषयत्वमात्मनो निवेदयता दुःस-हदशापातित्वं सूचितम् । चेतोभुव इत्यनेन तत्प्रभवस्य तस्य मर्मज्ञता

नेपथ्ये कलकलः।

माध। अहो! संप्रति प्रगल्भमानकौणपनिकायस्य महतो श्मशानवाटस्य रौद्रता (थ)। अस्मिन् हि

पर्यन्तप्रतिरोधिमेदुरचयस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः।
संसक्ताकुलकेलयः किलकिलाकोलाहलैः संमदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते॥ (द)

---

ध्वनिता। यथाशक्ति यथायुक्ति यथागति यथामति। यथाधीति यथानीति विवेचितमिदं मया॥

(थ) कौणपनिकायो राक्षससमूहः। रौद्रता भीषणत्वम्।

(द) पर्य्यन्तेत्यादि। तमः। कर्तृ। चिताज्योतिषामौज्ज्वल्यं परभागतो गुणोत्कर्षाधानात् प्रकटयति व्यक्तीकरोति। तमसि सन्निहिते सति तेजसां कान्त्युत्कर्षः स्फुट एवेति भावः। कीदृशं तमः। आभोगात् परिपूर्णतया भीमम्। चितालोकमण्डलस्य पर्य्यन्ते निकटदेशे प्रतिरोधनशीलं मेदुरं स्निग्धं चयेन सङ्घेन स्त्यानं घनम्। यद्वा। पर्य्यन्ते यः प्रतिरोधोऽन्धकारस्य प्रसरणनिवारणं तेन मेदुरो मांसलो यश्चयस्तेन घनमित्यर्थः। कटाः शवाः पूतनाः श्मशानवासिनो राक्षसास्तत्प्रभृतयोन्येऽपि तत्रत्याः शृगालादयः किलकिलाकोलाहलैः किलकिलारूपारावैः सांराविणं परस्पराह्वानं कुर्वते सम्मदाद्धर्षात्। उत्ताला उद्भटाश्चञ्चला वा। तालादुद्गता उत्तालाः। कुगतिप्रादय इति समासः। तेनान्योन्यहस्ततालवन्त इति वा। संसक्ता मिलिता आकुलास्त्वरायुक्ताः केलयः क्रीड़ा येषां ते। यद्वा। संसक्तत्वेनाकुला केलिर्येषां ते। संसक्त इति भावप्रधानम्। यद्वा। संसक्ताकुलेन स्वयूथेन केलिर्येषां ते। त्रिपदबहुव्रीहावुत्तरपदत्वाभावान्न पुंवद्भावः। सान्द्रे स्निग्धे च मेदुर इत्यमरः। किलकिलेत्यव्यक्तशब्दः। अविभावितविशेषः शब्दसमूहः कोलाहलः। सम्पूर्णीद्रीते-

भवत्वाघोषयामि तावत् । उच्चैः । भो भोः ! श्मशान-निकेतनाः कटपूतनाः । (ध)

अशस्त्रपूतं निर्व्याजं (अव्याजं) पुरुषाङ्गोपकल्पितम् ।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् ॥ (न)

पुनर्नेपथ्ये कलकलः ।

माध । कथमाघोषणानन्तरमेव सर्वतः समुच्चलदुत्ताल-वेतालमुक्ततुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसंकटः (प) श्मशानवाटः । आश्चर्यम् ।

---

गर्भविधौ भाव इत्यण् । तदन्तात्स्वार्थेऽण् । च्वादिष्टाद्धिः । शावानां भद्रकरणं देवताधिष्ठानात् । रौद्ररस इह । तल्लक्षणं तु भरते । इति रौद्रो रसो दृष्टो रौद्रैरेवाङ्गचेष्टितैः । शस्त्रप्रहारभूयिष्ठभय-कर्म्मक्रियात्मकः ॥ इति ।

(ध) भो भो इत्यभिमुखीकरणरूपे सम्बोधने । निकेतनं गृहम् ।

(न) अशस्त्रेत्यादि । अशस्त्रपूतं सम्मुखपतितस्य स्वर्गिणो मांसं शस्त्रपूतमतस्तेषामयोग्यम् । इदमिति न तादृशमिदम् । यद्वा । अश-स्त्रपूतं शस्त्रेणाच्छिन्नम् । धातूनामनेकार्थत्वात् । शस्त्रहतमांसस्य रणे सुलभतया तेषामस्पृहात इदमताडशमिति भावः । अव्याजं निष्कपटम् । यद्वा । इष्टसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम् । अशस्त्रपूतं निर्व्याजमेतन्मांसं विदुर्बुधाः ॥ इति परिभाषितमेव । स्त्रियश्चतुष्पदे श्रेष्ठाः पुरुषा द्विपदे तथा ॥ इति वचनात्प्राशस्त्यार्थ-माह । पुरुषस्याङ्गादानीयोपकल्पितम् । विक्रीयते इष्टसिद्धिमूल्ये-नेत्यर्थात् । विक्रयस्य मूल्यसापेक्षत्वात् । यद्वा । विक्रीयते दीयते । धातोरनेकार्थत्वात् ।

(प) उच्चैर्घुष्टं तु घोषणेत्यमरः । वेतालः श्मशानदेवताकिङ्करः । तुमुलं रणसङ्कुल इत्यमरः । तेषामन्योन्यस्पर्धया रणे सङ्कुलत्वम् । अविभावितार्थत्वेनाव्यक्तत्वम् । प्रचलित उच्चावचः । सङ्कटो व्याप्तः ।

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्यते ।
विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लव्यालव्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥ (फ)

अपि च (ब) ।

एतत् पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृकान्
उत्पुष्णात्यरितो नृमांसविघसैराघर्घरं क्रन्दतः ।

---

(फ) कर्णेत्यादि । उल्का ज्वाला मुखे येषां ते उल्कामुखाः शृगालभेदाः । तेषां मुखैर्नभ आकीर्यते व्याप्यते । यद्वा । उल्कामुखा एतन्नामप्रसिद्धा एव रणवासिनो जन्तुभेदाः । कीदृशैः । कर्णसमीपविदीर्णसृक्कभ्यां विकटं करालं यद्व्यादानमास्यविकाशस्तेन दीप्तोऽग्निर्येषु । ऊर्ध्वाधःस्थितदंष्ट्राणां कोटिभिरग्रैर्विसङ्कटैः सङ्कुलैर्विकरालैर्वा । सर्वतो धावद्भिः । विद्युत्पुञ्जतुल्यानि केशनयनभ्रूश्मश्रुजालानि यत्र तैः । पिङ्गलत्वात् केशादीनां विद्युत्तुल्यता । अत एवोल्कामुखः शृगालान्यो जन्तुभेद इति पक्षः साधीयान् । उल्काप्रकाशात्लव्यालव्यान्यदावच्यानि विशुष्काणि दुर्बलानि दीर्घाणि वपूंषि येषां तेषाम् । एतेन दुर्बलत्वमुक्तम् । प्रान्तावोष्ठस्य सृक्कणी इत्यमरः । केशेत्यादौ पूर्वनिपातविधेरनित्यत्वाद् भ्रूशब्दमपहाय केशशब्दस्य पूर्वनिपातः । लव्यशब्दो शर्यति यकारवान् । कर्मणि घञ् तद्धित इत्यवधेयम् । अद्भुतरसोऽयम् ।

(ब) अपि चेति । अपिर्जुगुप्सायाम् । चः समुच्चये ।

(भ) गर्हामाह । एतदित्यादि । एतत् पूतनचक्रं श्मशानप्रेतसमूह आलोक्यते । किं कुर्वत् । अत्याकुलतयाक्रमेण युगपत्कृतो यो ग्रासस्ततोऽर्धं भूमौ पतितमर्धं चर्वणेन मुख एव स्थितम् । तत्र भूमिपतितैरर्धमुक्तैर्मनुष्यमांसविघसैरुच्छिष्टैः सर्वत्र वृकान् कोकानारण्यकुक्कुरादीनुत्पुष्णात् पुष्टान् कुर्वत् । अक्रमत्वं प्रतिपक्षशङ्कया । अभि-

खर्जूरद्रुमदग्घ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ (भ)

समन्तादवलोक्य विहस्य च। अहो! प्रकारः (म) पिशा-
चानाम्। एते हि

ततपृथुरसनोग्रमास्यगर्त्तं दधति विदार्य्य विवर्णदीर्घदेहाः।
ललदजगरघोरकोटराणां द्युतिमिव दग्धपुराणरोहिणानाम् ॥

(य)

---

त्राधातिशयाद्वा। कीदृशान्। अट्टमट्टमिकया मांसग्रहणादीषद्दुर्घ-
टमव्यक्तशब्दं यथा स्यादेवं रटतः। एतत्तु कुक्कुरेषु स्फुटमेव।
कीदृशं नूतनचक्रम्। खर्जूरद्रुमदग्घ्ना तत्प्रमाणा जङ्घा यस्य तत्।
एतेन जङ्घानां ग्रन्थियोगित्वकर्कशत्वनीरसत्वलोमशत्वानि दर्शितानि।
असिता श्यामा या त्वक् चर्म तया नद्धाः सर्वतो विस्तीर्णा याः स्नायवो
नहरु इति ख्यातास्ताभिर्ग्रन्थिषु सन्धिभागेषु घनानि दृढान्यस्थ्नां
पञ्जराणि येषां तादृशा जरन्तो जीर्णाः कङ्काला मांसादिशून्यास्थि-
भागा यस्य तत्। वृकपदं शृगालाद्युपलक्षणपरम्। कोक ईहामृगो
वृक इत्यमरः। यद्वा। शालावृकाः कपिक्रोष्टुश्वान इति नानार्थे-
ऽमरदर्शनादेतस्यैवैकदेशो वृकशब्दः। तेन भीमभीमसेनादिवदस्यापि
तावदर्थप्रतिपादकतेत्यवधेयम्। वद्रा। वृको घोष इति ख्यातः।
विघसो भोजनशेषेऽपीत्यमरः। स्याच्छरीरास्थ्नि कङ्काल इत्यमरः।

(म) विहस्येति। अतिसात्त्विकेऽपि मयि भीषणत्वसमी पूतनाः
कुर्वन्तीत्यसम्बद्धक्रियया हासः। यदाह। असम्बद्धैस्तु हासः स्याद्वा-
क्यैः पथ्यक्रियादिभिः॥ इति। प्रकारो वैलक्षण्यम्।

(य) ततेत्यादि। एते पूर्वोक्तादन्ये पिशाचा विस्तृतदीर्घजिह्वा-
भीषणमुखविवरं विदार्य्य व्यादाय दग्धपुराणरोहिणानामिव द्युतिं
दधति धारयन्ति। दग्धत्वेन श्यामत्वं पुराणत्वेन जीर्णत्वं दर्शितम्।
रोहिणो रोहण इति ख्यातस्तरुः। लोमशाल्मि इति ख्यातो वा।

परिक्रम्य । हन्त बीभत्समेवाग्रे (र) वर्त्तते ।
निर्भिद्योत्कृत्य कृत्तिं प्रथममथपृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तस्नाय्वस्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ (ल)

---

रोहितोऽपि स एव । अत एव रोहितः स्त्रीहनाशक इत्यमरोऽपि । रोहणानामिति पाठे रोहन्तीति रोहणास्तरवस्तेषामित्यर्थः । लतता चलताजगरेण सर्पेण भीषणच्छिद्राणाम् । निष्कुहः कोटरं वा नेत्यमरः । तदिह कोटरेणाख्यमजगरेण रसना रोहिणेन पिशाच उपनीयन्ते । भय नको रसः । यदाह । विकृतरवसत्त्वदर्शनसन्त्रा-सारण्यशून्यस्थगमनात् । गुरुन्टपयोरपराधात् कृतश्च भयानको ज्ञेयः ॥

(र) बीभत्सं घृणाकरम् ।

(ल) निर्भिद्येत्यादि । अयं प्रेतरङ्कः प्रेतरूपो रङ्कः क्षुधाभि-भूयच्छरीरोऽव्यग्रसनाकुलं यथा तथा क्रव्यं मांसमत्ति खादति । किं कृत्वा । प्रथममादौ कृत्तिं चर्म निर्भिद्य निर्भिन्नीकृत्य पश्चादुत्कृत्य छित्वा । उत्कृत्येति पाठे चर्मकोषाकर्षणमुत्कर्त्तनं तत्पुनः पुनः कृत्वेत्यर्थः । अथानन्तरं पृथुना महतोच्छोफेन भूयांसि बहूनि मांसानि जग्ध्वा भक्षयित्वा । कीदृशानि । अंसयोः स्कन्धयोः स्फिचोः कटिमांसपिण्डयोः पृष्ठे कायपश्चाद्भागे पिण्डयोर्जङ्घापश्चात्भागयोरादिपदात् कक्षामूलाद्यवयवेषु सुलभानि । उच्छूनत्वात्तेषाम् । उग्रपूतीन्युत्कटगन्धानि । पृथूत्सेधेति पाठे पृथुनोत्सेधेन कायेन बहुतां गतानीत्यर्थः । यद्वा । उत्सेधेनोन्नत्या भूयांसीत्यर्थः । उत्सेधः काय उन्नतिरित्यमरः । कीदृशो रङ्कः । आर्तस्वरावान् । पर्य्यस्तमितस्ततः क्षिप्तं नेत्रं येन सः । एतदुभयं रङ्केषु प्रसिद्धमेव । अन्तःपर्य्यस्तनेत्र इति पाठेऽन्तर्मध्ये स्थितनेत्रः । रङ्कत्वेन कोटरा-

अपि च ।

निष्टापस्विद्यदस्नः क्वथनपरिणमन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्पक्वस्रंसिमांसं प्रचलदुभयतः सन्धिनिर्मुक्तमारा-
देते निष्कुष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥ (व)

---

त्वादित्यर्थः । आत्तस्नाव्वन्तनेत्र इति पाठ आत्तानि गृहीतानि स्नाव्वन्तनेत्राणि येन सः । अत एवान्त्रादुत्पाटनाय प्रकटितदन्तः । दौर्बल्यप्रकर्षात्प्रकटितदशनत्वम् । अङ्कस्थात् क्रोडीकृतात् करङ्कात् कपालादाकृष्य चर्वणात् । अन्यथापादानानुपपत्तिः । कीदृशं क्रव्यम् । अस्थिषु यत् सन्तिष्ठति तत् । स्थपुटगतमपि निम्नोन्नतविषमस्थानगतमपीत्यर्थः । अत एव रङ्कः । स्त्रियौ स्फिचौ कोटिप्रोथाविस्यमरः । पिण्डः खण्डेऽङ्गभेदे स्यादिति इति मेदिनीकारः । करङ्को मस्तकेऽपि स्यादिति धरणिः । अयं बीभत्सो रसः ।

(व) निष्टापेत्यादि । एतेऽपि कुणपभुजः शवभक्षकाः पिशाचाः बह्वीभ्यश्चिताभ्यः प्रेतकायानाकृष्य तेषामेव जङ्घानलकं जङ्घाप्रधानमस्थि निष्कुष्य विगतमांसावरणं कृत्वा मज्जधाराः पिबन्ति । मज्जास्थिमध्यस्थितस्नेहः । कीदृशीः । आराद् दूरत एवोदयिनीर्लभ्यमानाः । द्रवमयत्वात् । यद्वा । आरात्समीपे पिबन्तीति योजना । आराद्दूरसमीपयोरिति विश्वः । चिताभूयस्त्वेनातिभीषणतोक्ता । कीदृशान् । निष्टापेनैषत्तापेन स्विद्यन्त्यसृञ्जि येषाम् । पद्दन इत्यादिसूत्रेणासृक्शब्दस्यासन्नादेशेऽल्लोपे रूपम् । अस्नः इति पाठो न युक्तः । तृतीयादावस्थ्यादिनानङ्विधानात् । यद्वा । प्रेतकायादिति पञ्चम्यन्तः पाठः । अतोऽस्नः इति पञ्चम्यामनङि रूपम् । चिताभ्य इति ल्यब्लोपे पञ्चमी । निसस्तपतावित्यनभ्यावृत्तौ षत्वम् । क्वथनेन पाककर्मेणाङ्गेषु परिणमज्जीर्यन् मेदो येषां तान् संसृष्टधूमानपि । कीदृशं जङ्घानलकम् । उत्पक्वमुच्छूनं कृत्वा पक्वमत एव स्रंसन-

विहस्य। अहो प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम्। तथाहि।

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः॥ (श)

---

शीलं मांसं यस्मात्। यद्वा उत्पक्वेनोद्गतपाकेन स्रंसि मांसं यस्मात्। उत्पक्व इति भावे क्तः। प्रचलन्तः शिथिलीभवन्त उभयतो जानूरुपर्वणो गुल्फाश्च ये सन्धयोऽस्थ्नां परस्परमिलनस्थानानि तैर्निर्मुक्तम्। प्रचलमिति पाठ उभयतः पार्श्वाभ्यां प्रचलम्। अत एव सन्धिपरिमुक्तमित्यर्थः। कुणपः शवमस्त्रियामित्यमरः। नलकं नरहड़ इति ख्यातम्। सरी इति ख्यातं वा। बीभत्स एवात्र रसः।

(श) अहो इति बीभत्सशृङ्गारदर्शनेनाश्चर्यम्। प्रादोषिको रात्रिप्रारम्भजः। शृङ्गारबीभत्सयोः परस्परविरोधेऽपि संस्थानसाम्यात् संभेदाभास इह। प्रसाधनाच्चात्र शृङ्गारः। यदाह, ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः। उपवनगमनविहारैः शृङ्गाररसोऽपि सम्भवति॥ अत एवायं श्लोकः कण्ठाभरणेऽपि रससङ्कराभास उदाहृत इति। अन्त्रैरित्यादि। एताः पिशाचस्त्रियः कान्तैः संभूय मिलित्वा कपालचषकैरस्थिस्नेहसुरा मज्जमद्यानि पिबन्ति। कीदृश्यः। अन्त्रै रचितो मङ्गलार्थं प्रतिसरो हस्तसूत्रमूर्णामयं याभिस्ताः। अवैधव्यचिह्नं मङ्गलप्रतिसरो भवति। यद्वा। प्रतिसरः कङ्कणम्। तदप्यवैधव्यचिह्नतया मङ्गलम्। कङ्कणे करसूत्रे च भवेत्प्रतिसरोऽस्त्रियामिति मेदिनीकारः। स्त्रीहस्त एव रक्तपद्मं तेन व्यक्तमुत्तंसं कर्णभूषणं बिभ्रति याः। सहसा शीघ्रं हृत्पद्ममालाः पिनह्य परिधाय। हृत्पद्मस्य श्वेततया पुण्डरीकपदेनोपन्यासः। यदाह। द्वादशाङ्गुलसंपूर्णे श्वेते हृदयपङ्कजे। इति। मालाया मनो-

परिक्रम्य पुनरशस्त्रेति पठित्वा। कथं द्रागतिप्रशान्तभीषणभीषिकाप्रकारैर्झटित्यपक्रान्तं पिशाचैः। अहो निःसत्त्वता पिशाचानाम्। परिक्रम्य दृष्ट्वा सनिर्वेदम्। विचितश्चैष समन्तात् श्मशानवाटः। तथाहि खल्वियं पुरत एव। (घ)

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवल्गित-
क्रन्दत्फेरवचण्डडात्कृतिभृतप्राग्भारभीमैस्तटैः।

---

इत्यमरः। मा स्वल्पावितिति परिधाने शीघ्रता। अत एव प्रोताः। रक्तकर्दमकुङ्कुमवत्यः। अत्र पिबन्त्यस्थीत्यादौ यतिभङ्गशङ्का न कार्या। सन्धिकृतपदविच्छेदे तद्दोषत्वात्। रेवां द्रक्ष्यस्युपलविषमामित्यादौ तथा दर्शनात्। चषकं पानपात्रं स्यादिति हारावली। इह बीभत्समिश्रः शृङ्गाररसः।

(घ) झटिति शीघ्रम्। विभीषिका परभयदायिनी रौद्ररूपता। तस्याः प्रकारा भेदाः। अपक्रान्तं प्रपलाय्य गतम्। निःसत्त्वा इत्यनेनात्मप्रौढिर्दर्शिता। महामांसविक्रयादपि नेष्टलाभ इति निर्वेदः। विचितो व्याप्तः। तमोव्याप्तत्वेन कथं विचितत्वज्ञानमित्यत आहेयमिति।

(ङ) गुञ्जदित्यादि। इयं सरित् पुरत एवास्ति। पारेश्मशानं श्मशानपारदेशे। पारे मध्ये षष्ठ्या वेति समासः। कुञ्ज एव कुटीरोऽल्पा कुटी तत्र या कौशिकघटा पेचकसमूहः। गुञ्जन्तीनां कुञ्जकुटीरकौशिकघटानां घूत्काररूपं संवल्गितं ध्वनितम्। क्रन्दच्छृगालानां डात्कृतिर्डात्कारः शब्दविशेषः। अनयोर्द्वन्द्वः। ताभ्यां भृतः पूरितो यः प्राग्भारोऽग्रतटं तेन भीषणैस्तटैर्लक्षिता। लक्षणे तृतीया। अन्तरभ्यन्तरे शीर्णास्त्रुटिता ये करङ्काः कपालानि तेषां कर्करो भग्नावयवः काकर इति प्रसिद्धो वा कर्करो यत्र। अत एव तरतां सन्तरणशीलानां संरोध्यवरोधकः कूलङ्कषः कूलविदारको यः स्रोतोनि॰

अन्तःशीर्णकरङ्ककर्करतरत्संरोधिकूलंकष-

स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ (ख)

नेपथ्ये । हा ताद ! णिक्करुण एसो दाणिं दे णरेन्द-चित्ताराहणोवअरणं जणो विवज्जइ । (२२) (ङ)

माध । साकूतमाकर्ण्य ।

नादस्तावद्विकलकुररीकूजितस्निग्धतार-

श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।

---

(२२) हा तात ! निष्करुण एष इदानीं ते नरेन्द्रचित्ताराधनोप-करणं जनो विपद्यते ।

---

र्गमस्तेन घोरो घर्घरोऽव्यक्तरूपो रवः शब्दो यत्र सा । तरःसंरो-धीति पाठे तरसा वेगेन संरोधि गमनविरोधि । कर्करेण दृढेन तरसा संरोधीत्यर्थः । अल्पा कुटी कुटीरः स्यादित्यमरः । घटाशब्दः समूह-मात्रवचनोऽपि करिघटादौ त्वात्यन्तिकस्तस्य प्रयोग इत्यवधेयम् । घूत्कारडात्कृती अनुकरणशब्दौ । क्वचित् फात्कृतीति पाठः । तत्रापि फात्कृतिरनुकरणशब्द एव । फेरुफेरवजम्बुका इत्यमरः । तटः प्राग्भार इत्यपीत्यमरः । कर्करो भग्नभागेऽपि दृढेऽपि खण्डिते-ऽपि चेति धरणिः । तदिह करङ्ककर्करसंकुलनदीप्रवाहस्तीरं पात-यति घर्घररवं च कुरुत इति स्फुटमेव ।

(ङ) हा तात ! इत्यत्र हायोगेऽपि न द्वितीया । हाशब्दस्य शोकवाचिन उपग्रहात् । तस्य च सम्बोधने प्रथमाप्रयोगात् । तट-स्थार्थस्य योगे द्वितीयेति न्यासः । अङ्कमुखे स्त्रीरत्नापहारस्य सूचि-तत्वान्नेपथ्ये भणनमिदम् ।

(च) नाद इत्यादि । अयं तावन्नादः श्रोत्रयोः संवादं पूर्वोपलब्धा-कारतामेति । कीदृशः । विकला त्रस्ता या कुररी हापूतीति प्रसिद्धा पक्षिवधूस्तस्याः कूजितवत् स्निग्धः स्नेहवांस्तार उच्चश्च । तारान्ना-

अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं

देहोत्कम्पः स्खलयति गतिं कः प्रकारः किमेतत्॥ (च)

करालायतनाच्चायमुच्चरन् करुणो ध्वनिः।

विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम्॥ (क)

भवतु पश्यामि। इति परिक्रामति।

ततः प्रविशतो देवार्चनव्यग्रौ कपालकुण्डलाघोरघण्टौ
कृतवध्यचिह्ना (ख) मालती च।

माल। हा ताद! णिक्करुण एसो दाणिं दे णरेन्द-
चित्ताराहणोवअरणं जणो विवज्जइ। हा अम्ब! सिणे-

---

अत्याक्षरो नादः। अत एव चित्ताकर्षी प्रियत्वाच्चित्तानुकर्षकः।
परिचित इव पूर्वमुपलब्ध इव। अत एव श्रोत्रसंवादिता च। परि-
चयस्य शङ्करगृहे वृत्तः। यदि श्रोत्रसंवादमेति कथं तर्हि विकार इत्यत
आह। अन्तर्भिन्नं द्विधाभूतं संशयाक्रान्तं हृदयं भ्रमति दोलायते।
उभयत आकर्षात्। अत्र मालतीगमनासम्भवात् संवादस्य च स्फुट-
त्वात्। यद्वा। अन्तर्भिन्नं विदलसम्भवेनेत्यर्थात्। तथा वस्तुगता-
निष्टशङ्काकलङ्कात्प्रत्यङ्गं विह्वलति। करादीनि कम्पन्त इत्यर्थः। तस्याः
कथमिहावस्थानमिति भयाद्देहस्तम्भः। यदाह। हर्षव्याधित्रास-
रोषाद्यैः स्तम्भः सम्भवति। चिन्तास्तिमितत्वाद्गतिश्च स्खलति। कथ-
मकस्मादेव ममेदं वृत्तमिति विमर्शमाह। कोऽयं प्रकारः किंनिमित्त
स्नेहमाविष्करोति। किमेतत्। सैवेयं किमन्यद्वा तत्तुल्यमित्यर्थः।
संमुग्धमिति पाठे कर्णपीडां करोतीत्यर्थः नादस्तुल्या मोहात्।

(क) करालेत्यादि। अयमुत्थितकरुणरसो ध्वनिः कथं वा संभा-
व्यत इत्यन्वयः। उच्चरन्नुत्तिष्ठन्। वितर्कमवधारणमाह। नन्विति।
ननु सम्भावनायाम्। ईदृशां सम्भाव्यमानजातीयानामनिष्टानां जन-
कस्थानामिदं करालायतनं स्थानमिति सम्भाव्यते।

(ख) वध्यचिह्नं न्यस्तालक्तकेत्यादि।

हमग्रहिश्रए! हदासि देव्वदुव्विलसिदेण। हा मालदी-मश्रजीविदे! मम कल्लाणसाहणेक्कसुभसश्रलव्वावारे भश्र-वदि चिरस्स जाणाविदासि दुःखं सिणेहेण (ग)। हा पिश्रसहि लवङ्गिए! सिविणश्रावसरमेत्तदंसणा श्रहं दे संवुत्ता। (२३)

माध। हन्त (घ) सैवेयं मदिरेक्षणा। सम्प्रति निरस्त एव सन्देहः। तदहमपि नामैनां जीवन्तीं सम्भावये। त्वरितं परिक्रामति।

कापालिकौ। देवि चामुण्डे! नमस्ते नमस्ते।

साबष्टम्भनिशुम्भनिर्भरनमद्भूगोलनिष्पीडन-
न्यञ्चत्कर्परकूर्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीडितम्॥ (ङ)

(२३) हा तात! निष्करुण एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते। हा अम्ब! स्नेहमयहृदये! हतासि दैवदुर्विलसितेन। हा मालतीमयजीविते! मम कल्याणसाधनैकशुभसकलव्यापारे भगवति चिरस्य ज्ञापितासि दुःखं स्नेहेन। हा प्रियसखि लवङ्गिके! स्वप्नावसरमात्रदर्शनाहं ते संवृत्ता।

(ग) अत्र भगवति कामन्दकि इति शेषः। चिरस्य बहुकालम्। एकशुभस्थाने। एकसुखमिति पाठ एकसुखमेकवाक्यतापन्नम्।

(घ) हन्तेति निश्चयलाभे।

(ङ) साबष्टम्भेत्यादि। देवि! युष्माकं क्रीडितं नृत्यं वन्दे। कीदृशम्। साटोपो यो निशुम्भो निर्दयनृत्यकरणभेदस्ततः संभ्रमादानमतो भूगोलस्यावनिचक्रस्य निष्पीड़नेन न्यञ्चदधोगच्छत्

अपि च । प्रचलितकरिकृत्तिपर्य्यन्तचञ्चन्नखाघातभिन्नेन्दुनिःस्यन्दमानामृतश्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति श्वसदसितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीड़नस्फारफुल्लत्फणापीठनिर्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःखण्डपर्य्यासितक्ष्माधरम् । ज्वलदनलपिङ्गनेत्रच्छटाच्छन्नभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्रक्रियास्फूर्तदिग्भागमुत्तुङ्गखट्वाङ्गकोटिध्वजोद्भूतिविचित्रतारागणं प्रमुदितकटपूतनोत्तालवेतालतालस्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि ! भूयादभीष्ट्यै च हृष्ट्यै च नः (च) । इत्यभिनयतः ।

---

कर्परं पृष्ठास्थि यस्य कूर्मस्य तस्य कम्पेनाङ्गचालनेन विगलन्ती भ्रश्यन्ती ब्रह्माण्डखण्डस्य स्थितिर्यत्र तत्तथा । अनेन भूकम्प उक्तः । तथा च नम्रीभूतभूगोले त्वर्णवानामुत्सेकात्पाताबतुल्यगल्लविवरे प्रक्षिप्ताः सप्तार्णवा यत्र तत् । नन्दितभैरवसभं च प्रकटविभवम् । उत्क्षिप्ता तु भवेत्पार्ष्णिर्निघृष्टोऽयं निगद्यते । अङ्गुल्योग्राञ्चिताः सर्वाः पादाग्रतलसञ्चरे ॥ इति भरतः । कटाहे च कपालेऽपि पृष्ठास्थनि च कर्पर इति शाश्वतः । नाट्येश्वरीवर्णनमिदम् ।

(च) दण्डकमाह प्रचलितेत्यादि । देवि ! युष्माकं ताण्डवमुद्धतं नृत्यमस्माकमभीष्ट्या अशुभनाशाय तुष्ट्या आनन्दाय च भूयात् । अरिष्ट्या इति पाठे रिष्टिरशुभं तदभावोऽरिष्टिस्तस्यै । अनेन भाव्यनिष्टार्थसूचकदण्डोऽप्युक्तः । यदाह । आकस्मिकमसम्बद्धं समर्थमिव यद्भवेत् । वाचामन्ते स दण्डः स्यादाव्यनिष्टार्थसूचकः ॥ रिष्टिः खड्गे नाशुभे स्त्रीति मेदिनीकारः । अरिष्टे तु शुभाशुभ इत्यमरः । यद्वा । ककारो देवमाता स्यादिति कोशादृशब्दात्सम्बुद्धौ गुणे च हे ऋः देवमातः इष्ट्या अभीष्ट्यै भूयादित्यर्थः । कीदृशम् ।

माध । हा धिक् । प्रमादः । (क)

---

प्रचलितगजासुरचर्मपर्य्यन्तेघूर्णमतां नखानामाघातैर्भिन्नात् स्फुटिताद्दे-वीमस्तकस्थचन्द्रात् क्षरदमृतस्य श्च्योतिनाप्लवेन जीवन्तीभिः कपालाव-लिभिर्मुण्डमालाभिर्मुक्तैरखण्डाट्टहासैरत्युच्चहसनैः स्खलतां बहुभूतगणानां प्रवृत्ता स्तुतिर्यत्र । यद्वा । भूतगणैः प्रवृत्ता प्रवर्त्तिता स्तुतिर्यत्र तत् । अन्तर्भावितण्यर्थः । यद्वा । प्रचलितः करिचर्मरूपोऽवधिर्यत्र तत् । पश्चात् कर्मधारयः । तथा ताण्डवाडम्बरायासेन श्वसतां श्यामसर्पाणां कायैर्यैः केयूराकारमन्यस्तेषु निष्पीडनेनोत्फाल उद्गतसुखविकास-स्तरलो वा फुल्लन् विस्तारिताङ्गचयः फणापीठः । विस्तारितया पीठेन रूपकम् । ततो निर्गतविषाग्नेरुज्जृम्भणेनाधिक्येनोड्डमरः केलिसंवस्तु रसातिशयो भयङ्करो वा विषमो वा व्यस्त इतस्ततोगामी विस्तारी दीर्घो यो दोःखण्डः समूहस्तेन पर्य्यासितः क्षिप्तः पर्वतो यत्र तत् । देव्या अनेकबाहुशालितया दोःखण्ड इत्युक्तम् । अजा-दिकदम्बे खण्डमस्त्रियामित्यमरः । तथा ज्वलतानलेन पिङ्गलं यन्नेत्रं ललाटलोचनं तस्य छटा ज्वालानिर्गमप्रसरस्तस्य साटेन विस्तारेण भीमं यदुत्तमाङ्गं शिरस्तस्य भ्रमिमण्डलाकारेण भ्रमणं तया प्रस्तुता प्रारब्धालातचक्रक्रिया वह्निप्रज्वलितार्धकाष्ठविशेषकर्म तया लूता इवैकत्र प्रतिबद्धा इव दिग्भागा यत्र तत् । तथातिमहत् खट्वाङ्गा-ग्रध्वजोत्कम्पाद्विक्षिप्त इतस्ततस्तारागणो यत्र तत् । तथा हृष्ट-कटपूतनोद्भटवेतालानां तालेन कलकलेन स्फुटत्कर्णात एव संभ्रान्ता त्रसन्ती सत्वरा वा गौरी तस्या निविडालिङ्गनेन हृष्यच्चित्तं त्र्यम्बकं शिवमत्यर्थमानन्दयति । आभोग्ये ध्वनिः । साटो निकुञ्जे विस्तारे इति विश्वः । टङ्कमध्येऽपि कीर्त्तितमिति शाश्वतः ।

(क) धिक्प्रमाद इत्यत्र वर्त्तत इति क्रियाध्याहारः । तत उप-पदविभक्तेः कारकविभक्तिर्बलीयसीति धिग्योगे द्वितीयां बाधित्वा प्रथ-मेत्यवधेयम् ।

न्यस्तालक्तकरक्तमाल्यवसना पाखण्डचण्डालयोः
पापारम्भकयोर्मृगीव वृकयोर्भीरुर्गता गोचरम्।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्त्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः॥ (ञ)

कपाल। (त्वं) तं भद्रे! स्मर दयितोऽच यस्तवाभू-
दद्य त्वां त्वरयति दारुणः कृतान्तः। (झ)

---

(ञ) न्यस्तेत्यादि। सेयं भूरिवसोः सुता यस्याः कृते मयैवं दुःखमनुभूयते पाखण्डचाण्डालयोर्गोचरं सम्मुखं गता। पाखण्डेषु चाण्डालोऽसौ। तद्दर्शनविरुद्धक्रियाकारित्वात्। यदाह। न भुञ्जीतार्कपर्वे षु स्त्रीबालं नैव घातयेत्॥ यद्वा। पाखण्डौ च तौ चाण्डालौ च। निषिद्धक्रियत्वात्। यदाह। अबध्यास्तु समाख्याताः सर्वयोनिगताः स्त्रियः॥ चाण्डालत्वादेव पापारम्भवतोर्मारणप्रवृत्तयोः। न्यस्ते अलक्तकरक्ते माल्यवसने यस्यां सा। एतद्बध्यचिह्नम्। यथा मृगी वृकयोः सम्मुखं गता तथेयं भीरुः। मृगीत्यनेन भयचलनेत्रतोक्ता। वसोर्देवताभेदस्य। एतेनास्य सुखित्वमुक्तम्। मृत्योर्यमस्य मुखे वर्त्तते। अत एव हाशब्दः परिदेविते स्त्रीरत्नमपि बध्यत इति। निन्दायां धिगिति। विषादे कष्टम्। कोपेऽनिष्टम्। अस्ता नष्टा करुणा दया यत्र। एतादृशो विधेरारम्भः कोऽयम्। निन्दितोऽयम्। कीदृग्वा। किं वितर्के परिप्रश्ने चेपे निन्दाप्रकारयोरिति विश्वः। करुणोऽयं रसः। इष्टबधदर्शनाद्वा करुणरसो नाम सम्भवति॥ इति भरतः। चण्डालोऽपि च चाण्डाल इति शब्दभेदः। पुष्पपुष्पस्रजौ माल्यमित्यमरः।

(झ) त्वं भद्रेत्यादि। प्रहर्षिणीच्छन्दसा श्लोकार्धम्। चामुण्डे भगवतीत्याद्यग्रिमार्धम्। हे भद्रे यस्तव दयितो वल्लभत्वेन इष्टस्तं स्मर। गुरुत्वात् स्मरणमस्य। यदाह। पतिरेको गुरुः स्त्रीणामिति। यद्वा। मदुपहरणीयत्वेन स इह जन्मनि ते वल्लभो न भूत एव।

माल । हा दइश्र ! माहव ! परलोश्रगदो वि सुमरि-दव्वो तुम्हे हिं अश्रं जणो । ण हु सो उवरदो जस्स वल्लहो जणो सुमरेदि (२४) । (ञ)

कपाल । हन्त माधवानुरक्तेयं तपस्विनी । (ट)

अघोर । शस्त्रमुद्यम्य । यदस्तु तदस्तु व्यापादयामि ।

चामुण्डे भगवति मन्त्रसाधनादा-
वुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥ (ठ)

इति छन्दुमपक्रान्तः ।

माध । सहसोपसृत्य प्रकोष्ठे मालतीं विचिप्य । दुरात्मन् ! अपेहि । प्रतिहतोऽसि कापालिकापसद ! (ड)

---

(२४) हा दयित ! माधव ! परलोकगतोऽपि स्मर्त्तव्यो युष्माभि-रयं जनः । न खलु स उपरतो यस्य वल्लभो जनः स्मरति ।

---

अतो जन्मान्तरेऽपि तल्लाभाय तं स्मर । यदाह । यं यं चापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय ! सदा तद्भावभावितः ॥ इति । कृतान्तो यमः ।

(ञ) स्मरणमाह । यस्येत्यवाधीगर्थेति कर्मणि षष्ठी । यस्य गुणमिति वा । अन्तकाले माधवस्मरणं मुक्तिहेतुरिति कटाक्षितम् ।

(ट) हन्त खेदे । कामन्दकीमित्रपुत्रत्वान्ममापि माधवस्ताड्य एव । तदनुरक्ता चेयं कथं बध्येति खेद इति भावः । अत एव तप-स्विन्यनुकम्प्या ।

(ठ) उद्दिष्टां वाचा प्रतिज्ञाताम् । उपनिहितामुपढौकिताम् ।

(ड) कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः । विचिप्या-पसार्य । खड्गहस्तत्वेन बाहुमध्येऽपसारणं जातिः । प्रतिहतो निराकृतः । अपसद ! निन्दित !

माल। सहसावलोक्य। परित्तायदु मं महाभाग्रो (२५)।

इति माधवमालिङ्गति।

माध। महाभागे! न भेतव्यं न भेतव्यम्।

मरणसमये त्यक्त्वा शङ्कां प्रलापनिरर्गलं
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते।
सुतनु! विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः॥ (ढ)

अघो। आः क एष पापोऽस्माकमन्तरायः (ण) संवृत्तः।

---

(२५) परित्रायतां मां महाभागः।

---

(ढ) मरणेत्यादि। सोऽयं तव मित्रं पुरत एव वर्त्तत इत्याक्षेपात्। यो बकुलवीथ्यादिषु सानुरागदर्शनप्रसन्नया त्वया स्वीकृतः। मरणसमय इत्यनेनानुराग उक्तः। यदाह। साहसानुरक्तं हि स्त्रियो भजन्त इति। तत्र मुक्ताशङ्को निर्भयः। पाखण्डादिति भावः। अत एव प्रलापेन निरर्गलोऽनभिभाव्यः। प्रलापेति पाठे हा नाथ! माधवेत्यादिनालतोप्रलापेन निरर्गल उच्छृङ्खल इत्यर्थः। त्यक्त्वा शङ्कामिति पाठे शङ्कां भयं लज्जादिकं वा त्यक्त्वा प्रलापनिराकुलो वा प्रलापनिरङ्कुशो वेत्यर्थः। यद्वा। शङ्कां त्यक्त्वा यं प्रति त्वया प्रकटितो निजस्नेहः सोऽयमित्यर्थः। यद्वा। अयं कीदृशः। प्रकाशितात्मस्नेहः। मरणसमये रक्षणादिति भावः। हे सुतनु! अत उद्गतं कम्पं त्यज। असौ पापः सम्प्रत्येव पाप्मनो निषिद्धाचरणस्य फलं मरणरूपमुग्रं तीव्रमनुभविष्यति। सम्प्रतीत्यनेन प्रकृतोपयुक्तं निजाप्तत्वं पौरुषं च ध्वनितम्। कीदृशस्य। प्रतीपो विपरीतो विपाको विरुद्धपरिणतिर्यस्य तस्य। अनुभवतीत्यत्र वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यति लट्। शृङ्गारवीरसम्भेदोऽत्र।

(ण) अन्तरायो विघ्नः।

कपा । भगवन् ! स एवास्याः स्नेहभूमिः (त) कामन्दकीसुहृत्पुत्रो महामांसस्य पण्यायिता माधवः ।

माध । सास्रम् । महाभागे ! किमेतत् ।

माल । विरादात्त्वस्य । महाभाग ! अहं ण किं पि जाणामि । एत्तिअं उण जाणामि उवरिअलिन्दअं पसुत्ता इह पबुद्धह्मि । तुह्मे उण कहिं (२६) । (थ)

माध । सलज्जम् ।

त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय परेतभूमा-
वाकर्ण्य भीरु ! रुदितानि तवागतोऽस्मि ॥ (द)

---

(२६) महाभाग ! अहं न किमपि जानामि । एतावत्तु नर्जानाम्युपर्यलिन्दकं प्रसुप्तेह प्रबुद्धास्मि । यूयं पुनः क्व ।

---

(त) भूमिः स्थानम् ।

(थ) त्रासातिशयाच्चिरादित्याशयः । अत्रोपरि सौधोपरि । अलिन्द कोष्ठ इति प्रसिद्धे । यूयमिति । अहमवला सुप्ता चान्येनानीता यूयं धीराधीरा विबुद्धा अपीदानीमिह किमर्थमागता इत्यर्थः ।

(द) त्वदित्यादि । हे भीरु ! महामांसविक्रयाय श्मशाने भ्रमंस्तव क्रन्दितान्याकर्ण्यागतोऽस्मि । महामांसविक्रयफलमाह । त्वदिति । त्वद्विवाहेन धन्यजन्मा पुण्यजन्माहं भवामीत्यभिनिवेशेनातियत्नेनावेशेन वा कदर्थ्यमानः पीड्यमानः । अतस्त्वां विना न मे जीवनमिति वध्यमानफलतया मांसविक्रये प्रवृत्तोऽस्मीति भावः । त्वत्पादपङ्कजेति

मालती । स्वगतम् । कधं मम कारणादो एव्वं अप्पणिर-वेक्खो परिब्भमदि (१) । (ध)

माधव । अहो नु खलु भोस्तदेतत् काकतालीयं नाम (न)। सम्प्रति हि

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम् ॥ (प)

---

(१) कथं मम कारणादेवमात्मनिरपेक्षः परिभ्रमति ।

---

पाठे प्रेयसीचरणग्रहणस्य मान एव कर्तव्यतया मानप्रसादनमेवोत्तरोत्तरं चरितेत्याशंसितवान् । अत एव सलज्जमित्युक्तमिति भावः । धन्यः पुण्यवति स्मृत इति विश्वः । कुत्सितोऽर्थः कदर्थः । भीरु इत्यनेन रोदनोपपत्तिरुक्ता । यदिह त्वन्निमित्तमहं साहसी त्वं पुनः कीदृशीति न जान इति तात्पर्यम् ।

(ध) अत एव हर्षविस्मयवशादाह मालती कथमित्यादि । परिभ्रमणमितस्ततो गमनम् । आत्मनिरपेक्षः श्मशानभ्रमणेन ।

(न) विस्मयेऽहो नु खलु भोः । काकतालीयमचिन्तितोपनतम् । यथा काकागमनतालपतनयोरेकदा संभवो दैवाधीनस्तथेदमपीत्यर्थः ।

(प) राहोरित्यादि । दैवाद्विधिवशादासाद्य प्राप्य । अर्थात् प्रियाम् । अस्य दस्योश्चौरस्य खड्गपातविषयात् प्रेयसीमाकर्षतो मम चेतः कथं वर्तताम् । नवनवरसोदयात्तन्न जान इत्यर्थः । कामिव । राहोराननचरीमिन्दुकलामिव । कृपाणपातविषयामिति पाठे खड्गपतनस्य विषय आश्रयो यत्र तामेतादृशीं प्रेयसीं प्राप्य कथं मम चेतो वर्ततामिति योजना । यद्वा । अस्य कीदृशस्य । आच्छिन्दतो द्विधा-

अघो। रे रे ब्राह्मणडिम्भ ! (फ)

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः
पाप ! प्राणपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।
सोऽहं प्रागभवतैव भूतजननीमृध्नोमि खड्गाहति-
च्छिन्नस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिःस्यन्दिना ॥ (ब)

---

कर्त्तुमुद्यतस्य। प्रियामित्यर्थात्। ततो जीवनाभाव एवास्या इति भावः। चौरिकयापहरणेन दस्युत्वम्। तदिह प्रथमार्धेन हेतुरुक्तः। द्वितीयेन फलमाह। आतङ्काच्चित्तचमत्काराद्विकलं नत्वस्य निसर्गसात्त्विकस्य भयमिति यद्यपि तथापि प्रियप्राप्त्या जीवनस्यापेक्षतया भयमुचितमेव पूर्वं तु जीवननिरपेक्षतया निर्भयत्वमित्यातङ्को भयमेव। राहोरित्युपमानं भयहेतुः। चन्द्रकलोपमया जगन्नेत्रोत्सवकरीयं व्यसनमुपगतेति करुणया द्रवीभूतम्। दैवादासाद्येति विस्मयाद्विचलितम्। दस्योरित्यनेन मालतीमयं हन्तुमुद्यतश्चौर इति कोपेन दीप्तम्। आच्छिन्दतः प्रेयसीमिति प्रियाजीवननिर्वाहेण हर्षेण प्रसन्नम्।

(फ) ब्राह्मणेति भिक्षान्नमुपयुक्तत्वार्थं यज्ञोपवीतधारणात्। डिम्भो बालकः। ब्राह्मणकपालभोजिनो मम ब्राह्मणवधेऽपि न दोष इत्युक्तमनेनेत्यपि भावः।

(ब) व्याघ्रेत्यादि। हे पाप ! मालत्युपहारकत्यपरस्य मे गोचरं समीपं यत् प्राप्तोऽसि। अत एव विघ्नकारितया पापेति। कीदृशस्य मे। व्याघ्रगृहीतहरिणीकृपयाकुलो यो मृगस्तन्यायेन मृगीमनुसरन्व्याघ्रसंनिधौ पतन्मृगस्तस्य बध्यो भवत्येवं हिंसारुचेः। एनां न रक्षसि त्वं तु म्रियस इति भावमाश्रित्य। पाठान्तरं हिंसारुचे इति संबोधनं वा। सोऽहं भवतैव प्रागग्रे भूतजननीं जगन्मातरं चण्डिकामृध्नोमि प्रीणयामि। ऋधु वृद्धाविति स्वादिरपीति धातुप्रदीपः। कीदृशेन। खड्गाहत्या व्यस्तस्कन्धाच्छिन्नग्रीवः। अत एव कबन्धस्तस्य रन्ध्राद्रुधिरप्राग्भारं स्रोतनं समूहं वा निःस्यन्दितुं शीलं

माध। दुरात्मन् पाखण्डचण्डाल !

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥ (भ)

---

यस्य तेन। दृचेरिति पञ्चम्यन्तपाठे दृचेर्हेतोर्मे गोचरं प्राप्तोऽसीत्यर्थः। पापस्थाने प्रायःपाठे समस्तमेव पदम्। केतनं कृत्ये केतावुपनिमन्त्रणे इत्यमरः। गोचरस्तु समीपे स्यादिति धरणिः। यत एव छिन्नग्रीवो-ऽत एव कबन्ध इति हेतुहेतुमद्भावेनोक्तिपोष एव। वीररसोऽयम्।

(भ) मारणेऽपराधमाह। असारमित्यादि। हे पाखण्ड ! जगद-सारं सारशून्यं विधातुं कर्तुं कथं व्यवसितः कृतप्रारम्भोऽसि। अश-क्यानि दुरन्तानि समव्ययफलानि च। असत्यानि च कार्याणि नारभेत विचक्षणः॥ इति न श्रुतं त्वया। तथा च संसारसारभूतेयमेव। अनया विनासार एव स इति। यदाह। सारं तु महिलारत्नं संसार इति निश्चयः॥ इति। जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते॥ इति। तत्सर्वसाकल्येयं निर्मिता। अतो रत्नमियम्। मनोहरत्वदीप्तिमत्त्वतरलत्वादिनेयं वा रत्नम्। अत एव तदभावात् प्रमुषितरत्नं त्रिभुवनं कर्तुं व्यवसितोऽसि। तदेतत्सर्वविषयं चौर्यं दुरन्तमिति भावः। इयमतिकान्त्या जगदुद्योतयतीत्यालोकभूता। एतदभावान्निरालोकं तमःप्रविष्टं लोकं जनं कर्तुं व्यवसितोऽसि। अत एवोत्कृष्टं प्रति लोकोक्तिस्तेन विनान्धकारस्तत्सत्त्व उद्योत इति। बान्धवजनानामेतत्सखीनामियं जीवनहेतुः। अत एतन्नाशान्मरणशरणं सखीजनं विधातुं व्यवसितोऽसि। अन्यस्त्रीनाशे तत्सख्यो दुःखिताः। अतन्नाशे तु म्रियन्त एवेति भावः। अत्रासारं संसारमित्यादिना नायि-कागतरामणीयकातिशयवर्णनमुपक्रम्य मरणशरणमित्यादिस्नेहविषयता-प्रतिपादनान्नैकवाक्यतयैकरसनिर्वाह इत्यदेश्यम्। मातादिबन्धुव्यति-रिक्तोदासीनबान्धवसंग्रहपराज्जनशब्दात् स्वस्यैव माधवस्तया विपत्तिं

अपि च । रे पाप !

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ (म)

अघोर । दुरात्मन् ! प्रहर नन्वयं भवसि !

माल । पसीद णाह साहसिअ ! दारुणो क्खु अअं हदासो । परित्ताअसु मं पडिणिअत्तीअदु इमादो अणत्थ-संसआदो (१) । (य)

(१) प्रसीद नाथ साहसिक ! दारुणः खल्वयं हताशः । परित्रायस्व मां प्रतिनिवर्त्ततामस्मादनर्थसंशयात् ।

सूचयतीत्यदोषात् । तदीयनानागुणाचिन्तनादेव मरणशरणता समे-त्यारब्धनिर्वाहाच्च । कन्दर्पस्त्वैतया मोहनास्त्रेण दर्पं करोति । एत-दभावाददर्पं कन्दर्पम् । जननयनस्यैतद्दर्शनमेव फलम् । अत एत-न्नाशात्तदफलम् । जगदनयालंकृतमेव । एतदभावाज्जीर्णारण्यतुल्यं तदिति । अत्र प्रियाप्रशंसया शृङ्गारो बन्धुमरणात् करुणा पाखण्डा-क्षेपाद्वीरः कथमिलद्भुतमिति नाना रसाः ।

( म ) पुनरपि दोषमुद्भाव्य दण्डं चिकीर्षुराह । प्रणयीत्यादि । हे पाप ! तव शिरस्येष भुज आकस्मिकयमदण्ड इव पततु । आकस्मि-कत्वेनाप्रतिक्रियत्वमुक्तम् । कीदृशस्य । तत्र वपुषि वधाय शस्त्रमुत्तो-लयतः । अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योऽसीति शौर्याति-शय उक्तः । यद्वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति खिद्यति । कीदृशैः । सप्रश्रयसखीसविलासपरिहासरसप्राप्तैः । अत्रापि शृङ्गार-वीरकारुण्यसंभेदः ।

( य ) अत्र त्वज्जीवने मम जीवनमपि सफलम् । अन्यथा तु मरणमेव वरमिति भावः ।

कपा । भगवन् ! अप्रमत्तो भूत्वा दुरात्मानं व्यापादय (र) ।

माधवाघोरघण्टौ मालतीकपालकुण्डले प्रति । अयि भीरु !

धैर्यं निधेहि हृदये हत एव पापः

किं वा कदाचिदपि केनचिदन्वभावि ।

सारङ्गसङ्गरविधाविभकुम्भकूट-

कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ (ल)

नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।

पुनर्नेपथ्ये । भो भो मालत्यन्वेषिणः सैनिकाः ! इयममात्यभूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञागतिर्भगवती कामन्दकी वः समादिशति । पर्यवष्टभ्यतामेतत्करालायतनम् ।(व)

---

( र ) मालतीव कपालकुण्डलापि स्वनाथमाह । भगवन्निति । अरक्षणार्थमप्रमत्त इति ।

( ल ) द्वयोर्भयं ज्ञात्वोभावाहतुः । धैर्यमित्यादि । हे भीरु ! त्वं हृदये धैर्यं कुरु । एष पापो हतः । अस्य वधे कुतः संशय इति वृथा भयं न इति भावः । अत्र युक्तिमाह । सारङ्गेण मृगेण सह युद्धविधाने हरेः सिंहस्य प्रमादोऽनवधानता किं वा केनचित् कदाप्यनुभूतः । कीदृशस्य । इभकुम्भरूपं यत्कूटमुच्चप्रदेशस्तत्कुट्टनशीलं हस्त एव वज्रं यस्य । यद्वा । हरेरिन्द्रस्य हस्तिना सह युद्धे नास्ति प्रमादः । कीदृशस्य । हस्तिकुम्भवल्लीवरघट्टककुट्टाकं पाणिस्थकुलिशं यस्य । कुम्भकूटपाणिकुलिशपदे शाकपार्थिवादिः । सारङ्गः पुंसि हरिणे चातके च मतङ्गज इति मेदिनीकारः । वीरो रस इह ।

( व ) मालतीग्रहकथाकथनायाह । भो भो इति । अप्रतिहतेति सत्यवचनेत्यर्थः । एतेनाघोरघण्टकृतो मालत्यपहार इति

नाघोरघण्टादन्यस्य कर्मैतद्भीषणाद्भुतम् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥ (ग)

कपा । भो भगवन् ! पर्यवष्टब्धाः स्मः । (घ)

अघोर । सम्प्रति विशेषतः पौरुषस्यावसरः । (ङ)

माल । हा ताद ! हा भअवदि ! (१) (छ)

माध । भवतु बान्धवसमाजसुस्थितां मालतीं विधाय तत्समक्षमेनं व्यापादयामि । मालतीमन्यतः (च) कापालिकं चान्यतः प्रेरयन् परिक्रामति ।

माधवाघोरघण्टौ । अन्योन्यमुद्दिश्य । आः पाप !

(१) हा तात ! हा भगवति !

कामन्दकीवचनं सत्यम् । मालतीमाधवयोस्तु विवाहः सत्य इति षष्ठाङ्कावतार इति सूचितम् । पर्यवष्टम्भनं सर्वतो वेष्टनम् ।

(ग) नेत्यादि । एतत् कर्म मालत्यपहरणात्मकं भीषणं सिंहकौशलहरणात् । अद्भुतं बहुरक्षकरक्षितया अपि हरणात् ।

(घ) भीत्याद्भयेन पलायनेच्छुराह । भगवन्निति ।

(ङ) संग्रामादपसरणस्याधर्महेतुतया सात्त्विकतया चाह । संप्रतीति । पौरुषं पुरुषस्य व्यापारस्तेजो वा । पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसीति विश्वः ।

(छ) मालती तत्रावेगातिशयादाह । हा तात ! हा भगवति ! इति ।

(च) मालतीरक्षार्थं कापालिको मया हत इत्यमात्यो जानातित्वाशयेन मालतीं च कातरां वीक्ष्याह भवत्विति । बान्धवेत्यादिना भाविकार्योपयोग उक्तः । अन्यतः कापालिकादन्यदेशं स्वसंमुखमिति यावत् ।

कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः
खरस्नायुच्छेदक्षणविहितवेगव्युपशमः ।
निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-
न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥ (क)

इति निष्क्रान्ताः सर्वे ।

श्मशानवर्णनं नाम पञ्चमोऽङ्कः । (ख)

---

## षष्ठोऽङ्कः ।

ततः प्रविशति कपालकुण्डला ।

कपा । आः दुरात्मन् ! मालतीनिमित्तं व्यापादिता-स्मद्गुरो माधवहतक ! अहं त्वया तस्मिन्नवसरे निर्दयं

---

(क) द्वावप्येकश्लोकेन प्रहारव्यापारमाहतुः । कठोरेत्यादि । हे पाप ! ममासिः खड्गस्तव प्रत्यङ्गं लवशः खण्डं खण्डं सपदीदानीमेव विक्षिपतु । कर्दमेष्विव मांसपिण्डेषु निरातङ्को यथार्थाच विचरन् सन् । कीदृशः । कठिनास्थिग्रन्थिघटनेन यो रणत्कारो व्यक्ताध्वनिस्तेन मुखरः सशब्दः । कठिनस्नायुच्छेदेषु मुहूर्तं कृतवेगोपरमश्च । कतीह पञ्चमाङ्के स्फुरन्ति नोद्भटा रसाः । मदीयबुद्धिरल्पिका क वेद तानशेषतः ॥

(ख) प्राप्तोष्ट यं रत्नधरोऽतिभव्योऽतिभव्यरूपा दमयन्तिकापि । जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमन्मनोहारिणि पञ्चमोऽयम् ॥

निघ्नत्यपि स्त्रीत्यवज्ञाता । सक्रोधम् । तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य विजृम्भितम् (क) ।

शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यस्मिन्नमुक्तानुशया सदैव ।
जागर्त्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी॥ (ख)।

नेपथ्ये । भो राजानश्चरमवयसामाज्ञया सञ्चरध्वं
कर्त्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।
चित्रं नानावचनविनिवहैश्चेष्यतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ (ग)

---

(क) संप्रति पूर्वाङ्कवृत्तगुरुवधवर्त्तमानाङ्कभाविमालतीविवाह-भविष्यदङ्कमालतीहरणान्याह । तत इत्यादि । रुषः पीडायां कोपे च । रुषस्तु स्यात् कोपपीड़योरित्यमरः । स्त्रीनिमित्तं कापालिक-वधेन पापेति । इहानुभविष्यसीत्यनेन क्रमरूपो गर्भसंधिरङ्गः । यदाह । भाविनोऽर्थस्य यज्ज्ञानं क्रमः स परिकीर्तितः॥ दुरात्मन् कामोपहतात्मन् । विजृम्भितं मालत्यपहरणेनेति भावः ।

(ख) तदेवाह । शान्तिरित्यादि । तस्य भुजङ्गशत्रोः सर्प-हिंसकस्य गरुड़स्य वा कुतः शान्तिर्निर्वृतिरुपशमो वा । अपि तु नैव । यस्मिन्नत्यक्तकोपा तिग्मदन्ताग्रा विषोद्गारेण दुःसहा सर्पी सदैव दंशाय जागर्ति । एवकारेण मुहूर्तमात्रमपि न स्वस्येत्याशयः । अनुशयो गाढ़रोषः । गरुड़पक्षे तादृशी दंशार्थं जागर्ति । तस्याति-बलत्वान्न तत् करोतीति युक्तमेव ।

(ग) अधुना विवाहमङ्गलकृत्यं दर्शयति । भो राजान इत्यादि । जन्या वरस्य स्निग्धास्तेषां यात्रायाः प्रवेशो वधूगृहप्राप्तिः प्रत्यासन्नः समीपवर्त्यत एवात्यर्थं त्वरयति । ततो भो राजानः ! क्षत्रियाः ! विवाहकृत्येषु चरमवयसां वृद्धानामाज्ञया सञ्चरध्वं प्रवर्तध्वम् । विवाहारम्भो वृद्धोपदिष्टमेव कर्मकारैः क्रियते । इह तु प्रस्तुताति-

यावत्सम्बन्धिनो न परापतन्ति तावद्वत्सया मालत्या नगरदेवतागृहमविघ्नमङ्गलाय गन्तव्यमित्यादिशन्ति भगवतीनिदेशवर्तिनोऽमात्यदाराः। अन्यच्च यथा गृहीतसविशेषमण्डनः प्रतीक्ष्यतामानुयात्रिको जनः। (घ)

कपा। भवत्विती मालतीविवाह(परि)कर्मसत्वरप्रतीहारगतसंकुलात्प्रदेशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा (ङ) भवामि। इति निष्क्रान्ता। विष्कम्भकः।

---

श्याद्नृपा एव कर्मकारा इति दर्शितम्। भूमिदेवाः ब्राह्मणाः कर्णमनोहरं यथा तथा पठन्तु। वैवाहिकमङ्गलवेदानित्यर्थात्। यद्वा; यद्वेदस्वरूपं श्रवणशुभगं मङ्गलत्वात्तत्पठन्त्वित्यर्थः। पुरन्ध्रीर्लक्ष्मीकृत्याह। नानारचनानां मङ्गलादीनां समूहैः करणैश्चित्रमद्भुतं यथा तथा चेष्टन्ताम्। भावे तङ्। यद्वा चित्रं नानाकर्म। केचिन्मङ्गलगीतं केचिद्वाद्यं केचिन्नृत्यं कुर्वन्त्वित्यर्थः। मङ्गलेभ्यो मङ्गलं कर्तुम्। क्रियार्थोपपदस्येति चतुर्थी। तादर्थ्ये वा। मञ्जुरध्वनिरिति समस्तृतीयायुक्तादिति तङ्। वरस्त्रिष्वपि जन्यः स्यादिति मेदिनीकारः। एतेन चौरिकाविवाहमङ्गलमपि ध्वनितोक्तम्।

(घ) सम्बन्धिनो वरस्य भ्रात्रादयः। भ्रात्रादीनां नन्दने वृद्धेऽसम्भवादिति। परापतन्त्यायान्ति। अविघ्नेति माधवविवाहायेति भावः। नन्दनविवाहस्य विघ्नवत्त्वात्। निदेश आज्ञा। अमात्यो भूरिवसुः। दाराः स्त्रियः। अनुयात्रानुगमनं तत्र नियुक्त आनुयात्रिको मालत्यनुगामी।

(ङ) कामन्दकीनामश्रवणभीता निष्क्रमणार्थमाह। भवत्विति। परिकर्मेतिकर्तव्यता। अपक्रम्येति। मङ्गलवेशतयान्येनापि सम्भावितनिःसारणा यत इति भावः। माधवापकारमित्यनेनाष्टमाङ्कं सूचयन्ती विघ्नमुद्योतयति। अभिनिविष्टा बद्धकक्षा।

ततः प्रविशति कलहंसकः ।

आणत्तोह्मि णअरदेवदागब्भघरट्ठिदेण (च) समअरन्देण णाहमाहवेण जधा जाणाहि दाव जत्ताहिमुहं पउत्ता मालदी ण वेत्ति । ता जाव णं आणन्दइस्सं । (१)

ततः प्रविशतो माधवमकरन्दौ ।

माध । मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिणो
भूयःस्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम् ।
अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्यैतु वा ॥ (छ)

---

(१) आज्ञप्तोऽस्मि नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथमाधवेन यथा जानीहि तावद्यात्राभिमुखं प्रवृत्ता मालती न वेति । तद्यावदेनमानन्दयिष्यामि ।

---

(च) भो राजान इत्यादौ श्लेषेण चोरिकाविवाहस्याप्यभिधानाज्जन्यपदेन माधवपरिजनतया कलहंसस्यापि वचनात्तत्रैवागमाह । प्रविश्येति । गर्भगृहवर्तित्वेन माधवस्य गुप्तत्वम् ।

(छ) राजविरुद्धचोरिकाविवाहस्य दुष्करतया कामन्दकीप्रतिज्ञासत्यत्वेन च सन्देहवानाह । मालत्या इत्यादि । समास्य विप्रलम्भजक्लेशस्य सर्वथोभयप्रकारेण निश्चितमद्यान्तः समाप्तिः । कोदृशस्य । मृगदृशो मालत्याः प्रचुरप्रेम्णा यानि विचेष्टितानि तैः परां कोटिं प्रकर्षकाष्ठां प्रापितस्य । आद्यदर्शनादिनादारभ्य विस्तारं गतैः । तत्र प्रथमे वकुलवीथिचेष्टाभिर्द्वितीये माधवचित्रावलोकनादिना तृतीये स्वप्नोपभोगवर्णनादिना चतुर्थे मोहनाशककरस्पर्शादिना पञ्चमे भयकम्पिताङ्गालिङ्गनादिना विस्तार इति भावः । पर्यवसानमाह । भगवतीनीतिः कामन्दकीनिसृष्टार्थदूतीकल्पः कल्याणं शुभं मालतीविवाहलक्षणं वा करोतु विपर्यैतु विफला वा भवतु । तथा च विवाहे

मक। वयस्य! कथं भगवत्याः सुमेधसो नीतिर्विपर्यं-ष्यति। (ञ)

कल। उपसृत्य। णाह! दिट्ठिआ वड्ढसि पउत्ता क्खु जत्ताहिमुहं (झ) मालदित्ति। (१)

माध। अपि नाम (ञ) सत्यम्।

मक। सखे! किमश्रद्दधानः पृच्छसि। न केवलं प्रवृत्ता प्रत्यासन्ना च वर्तते। तथा हि।

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः।
गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरग्रहणशक्तिमपाकरोति॥ (ट)

तदेहि जालमार्गेण पश्यामः। तथा कुर्वन्ति।

---

(१) नाथ! दिष्ट्या वर्धसे प्रवृत्ता खलु यात्राभिमुखं मालतीति।

---

सति शृङ्गारसम्भोगलाभेन कामायासशान्तिः। विपर्यये मरणादिति भावः।

(ञ) सुमेधसः सुबुद्धेः। विपर्यंष्यति विपर्ययमेष्यति।

(झ) अत्र यात्रा गमनम्। तस्य सुखमारम्भम्।

(ञ) तद्वाक्यस्याश्वासपरत्वं तर्कयन्नाह। अपीति। अपि नामेति सम्भावनायाम्।

(ट) अस्माकमित्यादि। वातविस्तारितमेघसमूहध्वनितसदृशो गम्भीरमङ्गलार्थमुरजसहस्रजन्मा शब्द एकपद एकस्मिन् क्षणेऽस्माकं शब्दान्तरग्रहणसामर्थ्यं निराकरोति। वाद्यरवेणान्यशब्दो न श्रूयत इत्यर्थः। सहस्रग्रहणमनेकोपलक्षणम्। सहस्रपत्त्रवत्।

कल । णाह ! पेक्ख पेक्ख । इमे दाव उप्पडिअराअहंस-विब्भमाहिरामचामरसमीरणोव्वेल्लकदलिआवलीतरङ्गिदुत्ताणगअणङ्गणसरोवरणिरन्तरदृण्डपुण्डरीअविब्भमं वहन्ती धवलादवत्तणिवहा दीसन्ति । इमाओ सविलासकवलिदतम्बूलवीडिआपूरिदकवोलमण्डलाभोअव्वइअरक्खलिदमहुरमङ्गलुग्गीअबद्धकोलाहलेहिं विविहरअणालङ्कारकिरणावलीविडम्बिदमहिन्दचावखण्डविच्छेदविच्छुरिदणहत्थलेहिं वारसुन्दरीकदम्बेहिं अज्झासिआ ओक्कणन्तकणअकिङ्किणीजालझणझणभङ्कारिणीओ (ठ) करिणीओ (१)। माधवमकरन्दौ सकौतुकं पश्यतः ।

---

(१) नाथ ! प्रेक्षस्व प्रेक्षस्व । एते तावदुत्पतितराजहंसविभ्रमाभिरामचामरसमीरणोद्वेल्लकदलिकावलीतरङ्गितोत्तानगगनाङ्गनसरोवरनिरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्तो धवलातपत्रनिवहा दृश्यन्ते । इमाः सविलासकवलिततांबूलवीटिकापूरितकपोलमण्डलाभोगव्यतिकरस्खलितमधुरमङ्गलोद्गीतबद्धकोलाहलैर्विविधरत्नालङ्कारकिरणावलीविडम्बितमहेन्द्रचापखण्डविच्छेदविच्छुरितनभस्थलैर्वारसुन्दरीकदम्बैरध्यासिता उत्क्कणत्कनककिङ्किणीजालझणझणझङ्कारिण्यः करिण्यः ।

---

(ठ) माधवोत्साहार्थमाह नाथेति । अत्र उत्पतितः उड्डीनः । विभ्रमो विलासो विशिष्टभ्रमणं वा । अभिरामस्तुल्यः । उद्वेल्लन् कम्पमानः । कदलिका पताका । तरङ्गितं तरङ्गयुक्तम् । उत्तानमगभीरम् । गगनमेव सरः । उद्दण्ड उन्नतदण्डम् । आतपत्रं छत्रम् । मङ्गलातपत्रमिति पाठे विवाहे शुक्लच्छत्रस्य प्रशस्ततया मङ्गलपदेन श्वेतत्वमुक्तम् । एताः करिण्यश्च दृश्यन्त इत्यन्वयः । चकारोऽध्याह्या॰

मक । स्पृहणीयाः खल्वमात्यभूरिवसोर्विभूतयः ।

तथा हि ।

प्रेङ्खद्भूरिमयूखमेचकचयैरम्भोधिचापच्छद-
च्छायासंवलितैर्विवर्तिभिरिव प्रान्तेषु पर्याहृताः ।
व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चिन्नचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥ (ङ)

कल । कथं ससंभमाणिक्कपडिहारमण्डलावज्जिदुज्जल-कणअकलहोअवत्तविचित्त-वेत्तलदापरिक्खित्तरेहारइदम-ण्डलो दूरदो ज्जेव्व से संट्ठिदो परिअणो । एसा अ बहल-सिन्दूरणिअरसंज्झाराओवरत्तमुहघोलन्तकन्तणक्खत्तमाला-

---

र्तव्यः । चर्वितं भक्षितम् । व्यतिकरः सङ्कटः । स्खलितं भङ्गिमत् । मङ्गलोद्गीतं मङ्गलरूपमुच्चैर्गानम् । विडम्बितं सदृशी-कृतम् । विच्छेदः खण्डः । विच्छुरितं व्याप्तम् । झणझणारूपो झङ्कारशब्दः ।

(ङ) प्रेङ्खदित्यादि । तरणिकिरणसम्पर्कादूर्ध्वं सुवर्णमणिदीप्ति-सङ्घैर्विवर्तिभिरितस्ततो गतैः प्रान्तेषु निकटेषु पर्य्याहृता व्याप्ता इव दिशो व्यक्तेन्द्रचापा इव भवन्ति । कीदृशैः । प्रेङ्खन्तः इतस्तत-श्चलन्तो भूरीणां सुवर्णानां मयूखाः किरणा यत्र तादृशो मेचकः स्निग्धश्चयो येषु तैः । मयूरमेचकनिभैरिति पाठे प्रेङ्खन्नृत्यन् यो बहुमयूरस्तस्य मेचकाश्चन्द्रकास्तैरतिशयिता भा येषां तैः । मेचक-श्चन्द्रके स्निग्धे श्यामलेऽपि च दृश्यत इति विश्वः । भूरि क्लीवं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गक इति मेदिनीकारः । अम्भोमुद्गीनो यश्चापः पक्षिभेदस्तस्य च्छदच्छायया पक्षकान्त्या संवलितैरिव मिलितैः । कीदृश्यः । उद्गतचित्रस्य चीनदेशभववस्त्रस्य प्रस्तारेण शय्यया प्रसारेण वा च्छन्ना इव । प्रस्तारस्तानितं शय्येति हारा-वली । मणय इहाभरणस्थरत्नानि ।

भरणधारिणिं करेणुरअणिं अलंकरन्ती दट्ठो ज्जेव्व कोदूहलुम्मुहसमत्थलोअदीसन्तमणहरा पण्डुरपरिक्खामदेहसोहा पढमुग्गअचन्दलेहाविब्भमं वहन्ती किंपि अन्तरं पसरिदा मालदी (१)। (ढ)

मक । वयस्य ! पश्य पश्य

---

(१) कथं ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वकनककलधौतपत्त्रविचित्रवेत्रलतापरिच्छिन्नरेखारचितमण्डलो दूरत एवास्याः संस्थितः परिजनः । एषा च बहलसिन्दूरनिकरसन्ध्यारागोपरक्तमुखघूर्णत्कान्तनक्षत्रमालाभरणधारिणीं करेणुरजनीमलङ्कुर्वतीत एव कौतूहलोन्मुखसमस्तलोकदृश्यमानमनोहरा पाण्डुरपरिक्षामदेहशोभा प्रथमोद्गतचन्द्रलेखाविभ्रमं वहन्ती किमप्यन्तरं प्रसृता मालती ।

---

(ढ) आवर्जिता तिर्यक्कृता । कनकं हिरण्यम् । कलधौतं रजतम् । कलधौतं हेमरौप्ययोरिति विश्वः । पङ्केन लेपेन । वेत्रलता वेत्रदण्डिका । परिच्छिन्ना रचिता । मण्डल इति । अस्मान्मण्डलात् केनापि न बहिर्गन्तव्यमिति भावः । दूरत एव मालत्या इत्यर्थात् । पृथुसिन्दूरपूर एव सन्ध्यारागस्तेनोपरक्ता किञ्चिदारक्ता चटुला चपला घूर्णती लम्बमाना या नक्षत्रमाला सप्तविंशतिमौक्तिकमाला हस्तिप्रसाधनभेदो वा सैवाभरणं तद्धारिणीम् । रात्रिपक्षे नक्षत्रमाला तारकामाला । करेणुर्हस्तिनी सैव रात्रिस्ताम् । दृश्यमाना चासौ मनोहरा चेति समासः । पाण्डुरा धूसरा परिक्षामातिकृशाङ्गदीप्तिर्यस्याः सा । एतेन चन्द्रकलासाम्यमुक्तम् । दृश्यमानेत्यनेनान्येषां दर्शनमात्रं तत्र परसुपभोगो मालत्या इति सूचितम् । पाण्डुरेत्यादिना मालत्यामान्तर उद्वेग उक्तः । किञ्चिदन्तरं कियद्दूरम् । प्रसृतागता । कलधौतटङ्कपत्त्रेति पाठे टङ्कपत्त्रं पट्टिकेत्यर्थः ।

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुन्नाढ़ां च व्यनक्ति मनोरुजम् ॥

कथं निषादिता गजबधूः । (ण)

माध । सानन्दम् । कथमतीर्थे भगवतीलवङ्गिकाभ्यां समभितः प्रवृत्तैव ।

तत: प्रविशति कामन्दकी मालती लवङ्गिका च ।

काम । सहर्षमपवार्य । (त)

विधाता भद्रं नो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिम् ।
कृतार्था भूयासं प्रियसुहृदपत्योपयमने
प्रयत्नः कृत्स्नोऽयं फलतु शिवदायी च भवतु ॥ (थ)

---

(ण) इयमित्यादि । इयं वरारोहा प्रशस्तश्रोणिका विवाहमहोत्सवसम्पत्तिं प्रकृष्टां रम्यां च वहति । सहजरमणीयत्वात् । उन्नाढ़ां प्रबलां चित्तपीड़ां च प्रकाशयति । कीदृशी । पाण्डुक्षामैरङ्गैरलङ्कृतभूषणा । अतिरम्यतयाङ्गैरेव भूषणान्यलङ्कृयन्त इति भावः । अन्तरभ्यन्तरे परिशोषिणी । अत एवाङ्गानां पाण्डुक्षामत्वम् । कलितं परिहितं कुसुमं यया सा । बाला षोड़शवर्षवयस्का । अवयवैरित्यनेन सर्वाङ्गीणं पाण्डुत्वाद्युक्तम् । लतेव । यथा लता नवा वसन्तादिप्रभावात्सपुष्पापि कुतश्चिद्दैवकृतादन्तःपरिशोषं वहति तथेयमपीत्यर्थः । निषादिता उपवेशिता । अवतारणार्थमिदम् ।

(त) सहर्षमित्यभीष्टसम्पादनादिति भावः ।

(थ) विधातेत्यादि । नोऽस्माकं मनोज्ञाय हृदिस्थाय विधये व्यापाराय प्रकृतविवाहाय भद्रं कुशलमविघ्नं विधाता

माध। स्वगतम्। केण उण उवाएण संपदं मरणणिव्वाणस्स अन्तरं संभावइस्सं। मरणंपि मन्दभाअधेआणं अहिमदं त्ति दुल्लहं होदि (१)। (द)

लव। स्वगतम्। अदिकिलम्मिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण (२)। (ध)

---

(१) केन पुनरुपायेन साम्प्रतं मरणनिर्वाणस्यान्तरं सम्भावयिष्ये। मरणमपि मन्दभागधेयानामभिमतमिति दुर्लभं भवति।

(२) अतिक्लामिता खलु प्रियसख्येतेनानुकूलविप्रलम्भेन।

---

ददातु। विषय इत्यत्र तादर्थ्ये चतुर्थी। क्रियार्थोपपदस्येति वा। इत्तेऽपि कार्ये राजविरोधादनिष्टमाशङ्क्याह। परमरमणीयामविरोधिनीं परिणतिमुत्तरविशुद्धिं देवाः कुर्वन्तु। स्वस्यापि फलमाह। अहं कृतकृत्या भूयासम्। यतो मालतीमाधवयोर्विवाहे समस्तोऽयं प्रयत्नः फलतु। उत्तरकालशुद्ध्या फलदायी भवत्वित्यर्थः। परिणतिशुद्ध्या शिवदायी भवतु। कल्याणकरोऽस्त्वित्यर्थः। शिवतातिश्च भवत्विति पाठे शिवतातिः शिवकरः। सर्वदेवात्तातिलित्यनुवर्तमाने शिवशमरिष्टस्य कर इति तातिल्। अत्र मरणमेव सर्वदुःखनाशकतया निर्वाणं मोक्षस्तस्यान्तरमवसरः। यद्वा। मरणमेव निर्वाणं निर्वृतिः सुखम्। निर्वाणं निर्वृतौ मोक्ष इति विश्वः। अन्तरमवसराध्यात्मसद्दशेष्विति मेदिनीकारः।

(द) सम्भावयिष्ये सम्यक् प्राप्स्यामि। भू प्राप्तावित्यस्यात्मनेपदिनो रूपम्। साम्प्रतमित्यनेन माधवालाभान्नन्दनलाभविलम्बना चेति दर्शितम्। मन्दभाग्यतया माधवप्राप्तिवन्मरणमपि न स्यादिति भावः।

(ध) अत्र क्लामिता क्लमं श्रमं प्रापिता। अनुकूलेन माधवेन सह विप्रलम्भो विरहस्तेन। यद्वा। अनुकूलो नन्दनस्तस्य विप्रलम्भेन वञ्चनया।

प्रविश्य पेटकहस्ता प्रतीहारी। भअवदि ! अमच्चो भणादि एदिणा णलिन्दाणुप्पेसिदेण विवाहणेवत्थेण (न) देवदापुरदो अलंकरिदव्वा मालदित्ति (२)।

काम। युक्तमाहामात्यः। माङ्गलिकं (प) तत् स्थानमतो दर्शय।

प्रती। एदं दाव धवलपट्टंसुअचोलअं एदं च उत्तरीअं रत्तवण्णंसुअं इमे अ सव्वङ्गिआ आहरणसंजोआ अअं च मोत्तिआहारो चन्दणं कुसुमापीड़ो अ (१)। (फ)

काम। अपवार्य। रमणीयं हि वत्समकरन्दमवलोकयिष्यति मदयन्तिका। प्रकाशम्। गृहीत्वा। अवलोमित्युचतामात्यः।

---

(२) भगवति ! अमात्यो भणत्येतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलङ्कर्त्तव्या मालतीति।

(१) इदं तावद्धवलपट्टांशुकचोलकमेतच्चोत्तरीयं रक्तवर्णांशुकमिमे च सर्वाङ्गिका आभरणसंयोगा अयं च मौक्तिकाहारश्चन्दनं कुसुमापीडश्च।

---

(न) पेटकं मञ्जूषा। पेटकं पुस्तकादीनां मञ्जूषायां कदम्बक इति मेदिनीकारः। पेटकग्रहणं तु नन्दनप्रसाधनार्थम्। अत्र नेपथ्यं प्रसाधनम्।

(प) युक्तमिति। एतत्प्रसाधनेन मकरन्दमलङ्कृत्य मदयन्तिकां विवाहयिष्यामीति भावः। माङ्गलिकं मङ्गलहेतुः।

(फ) अत्र धवलं वस्त्रं पट्टं सूत्रमयमंशुकं तेन निर्मितश्चोलकः कूर्पासकः। चोलः कूर्पासकोऽस्त्रियामित्यमरः। उत्तरीयरूपं रक्तांशुकं सिन्दूरीवस्त्रम्। आपीडः शेखरोऽस्त्रियामिति मेदिनीकारः। भवतीति सम्बोधनम्।

प्रती । तथा । इति निष्क्रान्ता ।

काम । लवङ्गिके ! प्रविश त्वमभ्यन्तरं वत्सया मालत्या सह । (ब)

लव । अथ भअवदी उण कहिं (१) ।

काम । अहमपि तावद्विविक्तेऽलङ्करणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षिष्ये (भ) । इति निष्क्रान्ता ।

माल । स्वगतम् । लवङ्गिआमेत्तपरिवाराह्मि संवुत्ता (२) । (म)

लव । एदं देवदामन्दिरदुवारं पविसह्म (३) । इति प्रविशतः ।

मक । वयस्य ! इतस्तावत् स्तम्भापवारितौ (य) तिष्ठावः । तथा कुरुतः ।

लव । सहि ! अअं अङ्गराओ (र) इमाओ कुसुममालाओ(४) ।

---

(१) अथ भगवती पुनः क्व ।

(२) लवङ्गिकामात्रपरिवाराऽस्मि संवृत्ता ।

(३) एतद्देवतामन्दिरद्वारं प्रविशावः ।

(४) सखि ! अयमङ्गराग इमाः कुसुममालाः ।

---

(ब) गुरुसमक्षं मालत्यनुरागानुभवो माधवस्य न स्यादत उक्तं प्रविश त्वमिति ।

(भ) विविक्ते विजने ।

(म) हृष्टतमरणावकाशप्राप्तया सानन्दोक्तिरियम् । बाह्यसंवेदनाभावान्मालती न पश्यतीति भावः ।

(य) अपवारितम् अवच्छितम् ।

(र) अत्राङ्गरागः कुङ्कुमादिः ।

माल। तदो किं (५)। (ल)

लव। सहि! इमस्सिं पाणिग्गहणारम्भे कल्लाणसंपत्तिणिमित्तं देवदाओ पूजेहि त्ति अम्बाए अणुप्पेसिदासि (१)। (व)

माल। कीस दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुःखणिद्दज्झमाणसं पुणो पुणो णिव्वेददूसहं मं मन्दभाइणिं दूमावेसि (२)। (श)

लव। अह किं सि वत्तुकामा (३)।

---

(५) ततः किम्।

(१) सखि! अस्मिन् पाणिग्रहणारम्भे कल्याणसम्पत्तिनिमित्तं देवताः पूजयेत्यम्बयानुप्रेषितासि।

(२) किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्धमानसां पुनः पुनर्निर्वेददुःसहं मां मन्दभागिनीं दुनोषि।

(३) अथ किमसि वक्तुकामा।

---

(ल) तत्प्रयोजनमपश्यन्तीवाह। ततः किं मयानेन कर्तव्यमित्यर्थः।

(व) अत्र पाणिग्रहणेति सामान्योक्त्या माधवनन्दनयोर्विवाहश्लेषेण नर्मस्फोटोऽयं भावः। यदाह। लेशेनोक्तिस्तु भावानां नर्मस्फोट इतीरितः।

(श) अत्र दुर्विलासपरिणामः प्रियत्यागाप्रियप्राप्तिलक्षणः। दुःसहमिति क्रियाविशेषणम्। अनया श्लिष्टं मद्वचो न ज्ञातमत इयमेव वदत्वित्यत आह।

माल। जं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्त-भाअधेओ जणो मन्तेदि (१)। (घ)

माक। सखे! श्रुतम्? (ङ)

माध। श्रुतमसन्तोषस्य हृदयस्य।

माल। लवङ्गिकां परिष्वज्य। परमत्थवहिणि पिअसहि लवङ्गिए! एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भणिग्गमणिम्मिदणिरन्तरोवआरोवरूढवीसम्भसरिसं परिस्सइअ तुमं पत्थेदि जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती समग्गसोहग्गलच्छीपरिग्गहेक्कमङ्गलं माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअइस्ससि (१)। (च) इति रोदिति।

---

(१) यदिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते।

(१) परमार्थभगिनि प्रियसखि लवङ्गिके! एषेदानीं ते प्रियसख्यनाथा मरणे वर्तमानागर्भनिर्गमनिर्मितनिरन्तरोपकारोपरूढ़विस्रम्भसदृशं परिष्वज्य त्वां प्रार्थयते यदि तेऽहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रियो मुखारविन्दमानन्दमसृणमवलोकयिष्यसि।

---

(घ) अत्राभिनिवेशिना मनोरथेन विसंवादं प्रतिकूलं भाग्यं यस्य सः।

(ङ) माधवे दुर्लभां वाञ्छां मत्वाह सखे श्रुतमिति।

(ह) श्लिष्टं वचस्त्वनिष्टाशङ्कितमाहासन्तोष इति।

(च) अत्र परमार्थेत्यादिना विश्वासपात्रत्वमुक्तम्। विरूढ़ उपचितः। सदृशं यथा तथा परिष्वज्येत्यन्वयः। अनुवर्तनीयोपक-

माध । वयस्य मकरन्द !

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोऽमृतानि ॥ ( क )

माल । जह तस्स जीविदप्पदाइणो जनस्स अवसिदं

---

तव्या । समयसौभाग्यपदेनारविन्दस्पर्धिनी शोभोक्ता । यदाह । उत्तमैर्गुणिभिः या सा शोभा प्रकीर्त्तिता ॥ मां हृदये धारयन्तीत्यनेन परम्परया ममापि दर्शनं स्यादित्युक्तम् । माधवम्प्रिय इत्यत्र प्राकृते पूर्वनिपातानियमात्प्रियं माधवस्येत्यर्थः । आनन्दमसृणत्वेन स्निग्धा दृष्टिरुक्ता ।

( क ) म्लानस्येत्यादि । वचांस्येवामृतानि मयापि दिष्ट्या निर्णीतानि । त्वया श्रुतमित्यादिना निर्णीतानि मया त्वधुनेत्यपिपदार्थः । अमृततुल्यत्वमाह । म्लानस्य प्रत्याशाभङ्गग्लानेन सङ्कोचितस्य जीवपुष्पस्य प्रकाशनानि । अमृतेऽपि सर्वप्रकाशकतया म्लानपुष्पप्रकाशकत्वम् । सन्तर्पणानि तृप्तिकरणानि । अमृतेऽप्येवम् । सन्तर्पणे सति बाह्येन्द्रियतर्पकानि । अमृतेऽप्येवम् । आनन्दनान्यन्तर्मोदकानि । आयत आनीयतेऽनेनेत्यायनम् । रसस्यायनं रसायनम् । वचसां चित्तोल्लासकत्वेन नवत्वजननादिवामृतस्य जरादिनाशकत्वेन नवत्वजननादिदमिति भावः । यद्वा । अमृतपदेन जलमोक्षपीयूषाण्युच्यन्ते । तत्राद्यपदेन जलसाम्यम् । मोक्षसाम्यार्थमितरपदत्रयम् । मोक्षे हि सम्यक्तृप्तिविषये निराकाङ्क्षतैव । इन्द्रियमोहोऽपि विषयस्पृहाभावात् । आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ॥ इति श्रुतेरानन्दमयता मोक्षे । यद्वा । आद्यपदाभ्यां जलसाम्यमितरपदाभ्यां मोक्षसाम्यम् । पीयूषसाम्यार्थं शेषपदम् । अमृतं मोक्षपीयूषसलिलेषु घृतेऽपि चेति धरणिः ।

मं सुणिअ संतप्पमाणस्स तं तहाविहं सरीररअणं ण परि-हीअदि जधा अ लोअन्तरगदं पि मं उद्दिसिअ सो जणो सुमरणसंकधामेत्तपरिसेसं कालन्तरे वि लोअजत्तं ण सिढ़िलेदि तहा करेसु। एवं ज्जेव्व पिअसहीए पसादादो मालदी किदत्था भोदि (१)। (ख)

मक। हन्त अतिकरुणं वर्तते। (ग)

माध। नैराश्यकातरधियो हरिणेक्षणाया:
श्रुत्वा निकामकरुणं च मनोहरं च।
वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च॥ (घ)

---

(१) यथा तस्य जीवितप्रदायिनो जनस्यावसितां मां श्रुत्वा सन्तप्यमानस्य तत्तथाविधं शरीररत्नं न परिहीयते यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणसङ्कथामात्रपरिशेषां कालान्तरेऽपि लोकयात्रां न शिथिलयति तथा कुरुष्व। एवमेव प्रियसख्याः प्रसादान्मालती कृतार्था भवति।

---

(ख) अवसिता मृता। तथाविधमनिर्वचनीयम्। न परिहीयते न नश्यति तथा करिष्यसीत्यन्वयः। लोकयात्रा गार्हस्थ्यम् अपत्नीकत्वं वा। माधवाभिप्रत्याख्यानाभावादेवमेवेत्यवधारणम्।

(ग) हन्तानुकम्पायाम्। करुणमिति। वात्सल्यादिसमुत्थो निरपेक्षभावः करुणः औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भ इत्यनयोर्भेदः।

(घ) अत एव निरपेक्षपदोपलक्षितनैराश्यमाह माधवः। नैराश्येत्यादि। नैराश्येन प्रत्याख्यानाशेन कातरा विसंष्ठुला धीर्यस्या हरिणनेत्रायाः। वात्सल्यं प्रियविश्लेषे प्राणत्यागेच्छा। मोहो भ्रमः सप्रत्याख्यानेऽपि नैराश्याभिमानः। ताभ्यां यत्परिदेवितं विलपनं वृत्तवर्तमानभाव्यर्थ-

लव । पडिहदं दे अमङ्गलं । ण अदो वि अधिअदरं सुणिस्सं (१) । (ङ)

माल । सहि ! पिअं क्खु तुह्माणं मालदीजीविदं ण उण मालदी (२) । (च)

लव । किं एव्वं भणिदं भोदि (३) ।

माल । आत्मानं निर्दिश्य । जेण पच्चासाणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं महाबीभच्छारम्भं अणुभाविदह्मि । संपदं उण मणोरहो एसो ज्जेव्व जं तस्स

(१) प्रतिहतं तेऽमङ्गलम् । नातोऽप्यधिकतरं श्रोष्यामि ।

(२) सखि ! प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती ।

(३) किमेवं भणितं भवति ।

(४) येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वेमं महाबीभत्सारम्भमनुभावितास्मि । साम्प्रतं पुनर्मनोरथ एष एव यत्तस्य

चिन्तनमतिकरुणं मनोज्ञं च श्रुत्वा चिन्तया यो विषादस्तेन विपत्तिमुद्वहामि । चिन्ताविषादरूपां वा विपत्तिं महोत्सवं चोद्वहामि । चकारो मिथो विरुद्धरसयोजने । इह हेतुफलभावेनान्वयः । तथा हि । नैराश्यकातरबुद्धित्वाद्वात्सल्यम् । ततः परिदेवनम् । तच्छ्रुत्वा मनोविषादः । तथा हरिणेचपलत्वेनापहृतचित्तस्य ममालाभान्मनोज्ञपरिदेवितं श्रुत्वा महोत्सवः । स पुनः क्रन्दनैर्मोहैः प्रलापैः परिदेवनैः । देहायासाभिघातैश्च करुणाभिनयो भवेत् ॥ इति भरतः ।

(ङ) अत्रामङ्गलप्रतिघातो विवाहादिति बाह्यम् । माधवसन्निधानादित्यान्तरम् ।

(च) बाह्यार्थमाकलय्याह । अत्र तच्छरीरावच्छिन्नात्मा मालती । जीवनं तददृष्टविशेषकारितदेहात्मसंयोग इति जीवनमालत्योर्भेदः । जीवनस्य सुखहेतुतया प्रियत्वं तदिह दुःखसन्ततिजनकमतस्त्याज्यमेव भवतीति भावः ।

देवस्स परकेरअत्तणेण अवरद्धं अत्ताणअं परिच्चइस्सं त्ति । ता इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु (१) । (छ) इति पादयोः पतति ।

माध । सैषा सीमा स्नेहस्य । लवङ्गिका माधवं संज्ञया (ज) समाह्वयति ।

मक । वयस्य ! उपसृत्य लवङ्गिकास्थाने तिष्ठ ।

माध । परवानस्मि साध्वसेन । (झ)

मक । इयमेव नेदीयसां (ञ) प्रकृतिरभ्युदयानाम् ।

माधवः स्वैरं (ट) लवङ्गिकास्थाने तिष्ठति ।

माल । सहि ! करेहि अणुऊलदाए पसादं (१) । (ठ)

---

देवस्य परकीयत्वेनापराद्धमात्मानं परित्यक्ष्यामीति । तदस्मिन् प्रयोजने प्रियसखी मेऽपरिपन्थिनी भवतु ।

(१) सखि ! कुर्वनुकूलतया प्रसादम् ।

---

(छ) अत्रान्यजनेत्यत्रान्यपदेन माधवाभिधानम् । नन्दनापेक्षयान्यत्वात् । दुर्लभत्वेन परकीयत्वारोपाद्वा । बीभत्समिह नन्दनविवाहार्थमङ्गलस्यानिष्टस्य दर्शनात् । अनपराद्धमितीषदर्थे नञ् । आनन्दनविवाहपर्यन्तस्थायित्वे महापराधो यतः । अन्यस्य सम्भोगादेरभावादीषदेवेत्युक्तम् । अपरिपन्थिन्यविरोधिनी । एतदात्मत्यागरूपम् ।

(ज) संज्ञया संकेतेन ।

(झ) परवाननायत्तः । साध्वसेन जड़तया ।

(ञ) अत्यभीष्टलाभादियम् । नेदीयसां निकटानाम् ।

(ट) स्वैरं शनैः ।

(ठ) अत्र मर्तुं स्वीकुर्वित्यर्थः ।

माध।

सरले! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम्।
विरसं विरहायासं सोढुं तव चित्तमसहं मे॥ (ड)

माल। अलङ्घणीओ ज्जेव्व दे मालदीप्पणामो (१)।

माध। सहर्षम्।

किं वा भणामि विच्छेददारुणायासकारिणि!।
कामं कुरु वरारोहे! देहि मे परिरम्भणम्॥ (ढ)

---

(१) अलङ्घनीय एव ते मालतीप्रणामः।

---

(ड) माधवस्य संस्कृतभाषया लवङ्गिकाभ्रमो न स्यादिति भाषा-समावेशेनाह। सरले इत्यादि। साहस व्यासनिरपेक्षकार्ये राग-मनुरागं परिहर। रम्भोरु! कदलीसमोरुदेशे हे संरम्भं मरणे त्वरां त्यज जीवन्त्यां प्रत्याशापि स्यादिति भावः। विरसं रसशून्यं तव विश्लेषदुःखं सोढुं मे चित्तमक्षमं यतः। अतोऽयं वल्लभस्त्वति दत्तोऽत-स्त्यज मरणाभिनिवेशमिति लवङ्गिकाभिप्रायः। अत एव सरले व्यक्ते ऋजुप्रकृतिके वा। माधवपक्षे सरले अजानति हे तव विर-हायासं सोढुं मे चित्तमसहमतस्तव समीपमागतोऽस्मि तन्मरणं त्यज। इतरत् समानमेव। तदिह संस्कृतप्राकृतयोः साम्यात् प्राकृतसमकम्।

(ढ) किं वेत्यादि। किं वा भणामि। त्वदारम्भनिषेधं न करोमीत्यर्थः। हे विरहदुःसहकष्टकारिणि सुश्रोणि! काममभीष्टं कुरु। यद्येवं तदा समालिङ्गनं देहीति लवङ्गिकापक्षे। माधवपक्षे तु किं वा भणामि किं वक्तव्येन कामं कामव्यापारं कुरु। अतः परि-रम्भणं देहि। आरोहः श्रोणिकाययोरिति धरणिः। श्लोकद्वयमिदं शौरसेन्या। यदाह, षष्टार्थं लक्षणं प्रोक्तं शौरसेन्याः प्रपञ्चतः। लक्षणं त्वेकमेवास्याः संस्कृताद्यदनूनता॥

माल । सहर्षम् । कधं अणुगहीदह्मि । उत्थाय । इमं आलिङ्गामि । दंसणं उण पिअसहीए बाहुप्पीडेण णिरुद्धं ण लब्भीअदि । आलिङ्ग्य सानन्दम् । सहि ! कठोरकमलपह्मलो अण्णारिसो ज्जेव्व दे अज्ज णिव्वावेदि सरीरप्फंसो । सास्रम् । किं च । मउलिविणिवेसिदञ्जली मह वअणेण विण्णावेहि तं जणं ण मए मन्दभाआए विअसन्तपुण्डरीअलच्छीविलासहारिणो मुहचन्दमण्डलस्स दे सच्छन्ददंसणेण संभाविदो चिरं महूसवो लोअणाणं । मुधामणोरहेहिं अ अविरदविप्पलम्भमाणदुव्वारुव्वे अव्वदप्पवव्वत्तमाणवन्धणं धारिअं हिअअं । गमिआ अ वारं वारं सविसेसदूसहारम्भदूमाविअसहीअणा सरीरसंदावा । कधं वि अदिवाहिदा अ चन्दादवमलअमारुदप्पमुहा अणत्थपंपरा संपदं

---

(१) कथमनुगृहीतास्मि । इयमालिङ्गामि । पुनर्दर्शनं प्रियसख्या बाष्पोत्पीडेन निरुद्धं न लभ्यते । सखि ! कठोरकमलपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति शरीरस्पर्शः । किं च । मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञापय तं जनं न मया मन्दभाग्यया विकसत्पुण्डरीकलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य

---

( ग ) अत उत्पीडः प्रबलीभूय निर्गमः । उत्पीडः समूहो वा । अपश्चिमं चरमम् । प्रियस्पर्शाद्दाह्लादात् सहर्षम् । कठोरमरालगर्भो वीजकोशः । पक्ष्मलो रोमाञ्चयोगात् । समाधिना सुकुमारः । अन्यादृश इवाननुभूतसखीस्पर्शविधर्मा प्रसंगानानुभूतस्पर्शतुल्यः । निर्वापयति तापं शमयति । तथा तादृशः स्पर्शः शङ्काविषयोऽप्यत्र नेति निर्वेदात् सास्रता । अत्र विकसन्ति शतं पत्राणि यस्य तत् । अन्यथेदं व्यर्थं स्यात् । मण्डलपदं संपूर्णत्वार्थम् । चिरमित्यनेन स्वाधीनभर्तृका-

उण णिरासा संवुत्ते त्ति । तुए वि पिअसहि ! सव्वदा सुमरिदव्वह्मि । एसा अ माहवसिरीसहत्थणिम्माणमणुहरा बउलमाला मालदीणिव्विसेसं पिअसहीए दट्ठव्वा सव्वधा हिअए धारणीएत्ति ( १ ) । स्वकण्ठादपनीय माधवस्य हृदि विन्यस्यन्ती सहसापसृत्य साध्वसोत्कम्पं नाटयति । (ख)

---

ते स्वच्छन्ददर्शनेन सम्भावितश्चिरं महोत्सवो लोचनानाम् । सुधामनोरथैस्त्वाविरतविजृम्भमाणदुर्वारोद्वेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । गमितास्च वारंवारं सविशेषदुःसञ्चारम्भद्राविततसखीजनाः शरीरसन्तापाः । कथमप्यतिवाहिता च चन्द्रातपमलयमारुतप्रमुखानर्थपरम्परा साम्प्रतं पुनर्निराशा संवृत्तेति । त्वयापि प्रियसखि ! सर्वदा स्मर्तव्यास्मि । एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा वकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या सर्वथा हृदये धारणीयेति ।

---

स्वमुक्तम् । सुरतादिरसैर्यस्या बद्धः पार्श्वगतः प्रियः । सामोदगुणसंप्राप्ता भवेत् स्वाधीनभर्तृका ॥ निवेद्य दुःखं सुखी भवेदिति पूर्वानुभूतदुःखं निवेदयति । अविरतेत्यादि । उद्वर्तमानमुन्मूलितं बन्धनं स्थैर्यं यस्य तत् । बन्धनं स्वस्थानावस्थानं तस्योद्वर्तनमुन्मूलनारम्भ इति पाठान्तरव्याख्या । गमितास्चेत्यादिना व्याध्यवस्थोक्ता । अतिवाहितातिक्रान्ता । चन्द्रातप इति तापकारित्वादातपः । एतेषामनर्थत्वमाह भरतः । सम्भोगे ये सुखं कुर्युस्ते दुःखं विरहे भृशम् । इति । स्मर्तव्येत्यनेन करुणव्यभिचारिभावं स्मरणमाह । यदाह । व्यभिचारिणोऽस्य, निर्वेदो ग्लानिमरणव्याधिदैन्यभ्रमादयः ॥ नैराश्याच्च मरणोदयः । यदाह । सर्वैरेतैः प्रतीकारैर्यदि नास्ति समागमः । कामाग्निना प्रदीप्तायाः जायते मरणं ततः ॥ विप्रलम्भकरुणानन्तरं स्थायिनः शृङ्गारस्योपक्रममाह । एषा चेति । साध्वसं भयम् ।

माध। अपवार्य। हन्त। (त)

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे।
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निःस्यन्दशैवलमृणालहिमादिवर्गः॥ (थ)

माल। स्वगतम्। अहो लवङ्गिआए मालदी विप्प-लद्धा (१)।

माध। अयि स्वचित्तवेदनामात्रनिवेदिनि! परव्यथा-नभिज्ञे! इयमुपालभ्यसे।

उद्दामदेहपरिदाहज्वराणि
संकल्पसंगमविनोदितवेदनानि।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किं वा मयापि न दिनान्यतिवाहितानि॥ (द)

---

(१) अहो लवङ्गिकया मालती विप्रलब्धा।

---

(त) हन्त हर्षे।

(थ) एकीत्यादि। अनया मालत्या कर्पूरादिवर्ग एकीकृतः सन्नालिङ्ग्य मे त्वचि निषिक्त इव। स्पर्शस्य त्वगिन्द्रियग्राह्यतया त्वचीत्युक्तम्। निर्भिन्नौ निरन्तरावलग्नौ पीनौ स्तनकुड्मलौ यस्यास्तया। हरिचन्दनं चन्दनविशेषः। निःस्यन्देन द्रव्याभिधानम्। कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायात्। निःस्यन्दोति पाठे निःस्यन्दिनः सरसाः शैवालादय इत्यर्थः। अनेन प्रशान्तो मे कामजस्ताप इत्युक्तम्। वक्ष्यमेयम्।

(द) आत्मानुरागप्रकाशनायानुभूतवेदनामाह। अयीति उद्दामेत्यादि। एतादृशानि दिनानि मयापि किं वा नातिक्रान्तानि।

लव। सहि ! उवालम्भणिज्जे व उवालद्धासि (१)। (ध)

कल। अहो सरसरमणीअदा संविहाणस्स ( २ )। (न)

मक। महाभागि ! एवमेतत्।

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत्।
आबद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य नन्दतु चिराय फलन्तु कामाः॥ (प)

---

(१) सखि ! उपालम्भनीयैवोपालब्धासि।

(२) अहो सरसरमणीयता संविधानस्य।

---

अपि त्वतिक्रान्तान्येव। किं वेति सम्भावनायाम्। यद्वा। किं निषेधे वैवार्थे। कीदृशानि। उद्दाम उद्भटो देहदाह एव महाज्वरो येषु। एतेनोद्वेग उक्तः। सङ्कल्पसङ्गमेनापनीता व्यथा येषु। अनेनोन्माद उक्तः। यदाह। बाहू प्रसार्य्य गमनं सङ्कल्पाकल्पिते प्रिये। निवृत्तिः सहसान्यच्चिन्नुन्मादे हि प्रजायते॥ यद्वा। सङ्कल्पसङ्गमेनान्यस्योद्वेषः सूचितस्तेन च निःसपत्नीकत्वं कन्याहरणबीजमाह। यदाह। आसक्तिं वा दर्शयेत्सुखमनुपहतमेकपत्नीकत्वं वा वर्णयेदिति। त्वदीयस्नेहज्ञानेनावलम्बितं जीवितं येषु। त्वत्स्नेहाज्ञाने मम मरणमेव स्यादित्याशयः। उपलब्धिश्चित्संविदित्यमरः।

(ध) अर्हेऽनीयर्।

(न) अत्र सरसत्वेन शृङ्गारादित्वेन रम्यता। यदाह। शृङ्गारकरुणावेव रसेष्वाद्यौ प्रकीर्तितौ॥ संविधानं नायिकासङ्घट्टनप्रकारः।

(प) त्वमित्यादि। त्वं वत्सला सस्नेहेतिहेतोरयं जनो माधवो विधृतजीवितः सन् सत्यमियद्दिनानि कथमप्यनैषीन्नीतवान्। अत आबद्धकङ्कणो धृतविवाहसूत्रो धृतविभूषणो वा यः करस्तस्य

लव । महाणुभाअ ! हिअए वि अप्पडिहदसअंगाह-साहसो अअंजणो किं दाणिं कङ्कणाभरणं करं विआ-रेदि (१) । (फ)

माल । हा हदह्मि । कसआअणविरुद्धं किं पि एसा उवसस्सदि (२) । (ब)

प्रविश्य कामन्दकी । पुत्रि कातरे ! किमेतत् । (भ)

मालती कम्पमाना (म) कामन्दकीमालिङ्गति ।

काम । तस्याश्चिबुकस्तनमध्य (य) ।

(१) महानुभाव ! हृदयेऽप्यप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं कङ्कणाभरणं करं विचारयति ।

(२) हा हतास्मि । कन्यकाजनविरुद्धं किमप्येषोपन्यस्यति ।

प्रणयो विवाहकाले यद्ग्रहणं तद्रूपं प्रसादं प्राप्य नन्दतु । बहु-कालमभीष्टाः सम्भोगादयः फलन्तु । कङ्कणं भूषणे सूत्र इति विश्वः ।

(फ) अत्राप्रतिहतः परिगृहीतः । अयं जनो मालती । स्वयमेवास्याः करं गृहाणेत्याशयः ।

(ब) अत्र अस्मका कुलकन्यका । विरुद्धमिति कुलकन्यका-विवाहा दैवार्षब्राह्मा एव शुभा इष्यन्त इति भावः ।

(भ) स्वयंग्राहविवाहं कर्तुमनर्हमिति मन्यमानां मालती-माह । पुत्रीति । अत्र गौरादित्वान्ङीषित्यवधेयम् । कातरे विह्वले ।

(म) करग्रहभयेन तदङ्गस्पर्शेन माधवस्य दर्शनहर्षेण च मालत्याः कम्पः । यदाह । शीतभयहर्षरोषस्पर्शजरासम्भवः कम्पः ॥ नर्मस्फोटोऽयम् । यदाह । नर्मस्फोटस्तु भावानां देहस्थानां प्रका-शनम् ।

(य) चिबुकस्तनमध्योष्ठाधःप्रदेशस्तत्तोल्य । अधः स्थाच्चिबुक-मित्यमरः ।

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनुग्लानिर्यस्य त्वयि समभवद् यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने ! मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ (२)

लव । भअवदि कसणचउद्दसीरअणीमसाणसंचरणणिव्वत्तिदविसमव्ववसाअणिव्वाविअचण्डपासण्डपअण्डदोद्दण्डसाहसो साहसिणो क्खु एसो । अदो पिअसही उक्कम्पिदा (१) । (ल)

---

(१) भगवति ! कृष्णाचतुर्दशीरजनीश्मशानसंचरणनिर्वर्तितविषमव्यवसायनिर्वापितचण्डपाखण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खल्वेषः । अतः प्रियसख्युत्कम्पिता ।

---

(२) पुरावृत्तं सङ्कलय्याह । पुर इत्यादि । प्रथमं नेत्रप्रीतिरथ मनसस्तद्गतत्वं शरीरग्लानिश्च त्वद्विषये यस्याभूद्यद्विषये तवाप्येतादृशा अभूवन्हे सुमुखि ! सोऽयं युवा प्रेयान् प्रियतमः । अतो जडतां कार्याप्रतिपत्तिं त्यज गान्धर्वविवाहपरा भवेत्याशयः । तेन धातुः प्रयत्नो विलसतु । कामः पूर्णेच्छो भवतु । आत्मव्यापारस्तन्नौद्धत्याय नोक्तः । इह चक्षूरागादिकं कामावस्था । यदाह । चक्षुःप्रीतिर्मनः-सङ्गः सङ्कल्पोत्पत्तिरेव च । निद्राच्छेदस्तनुत्वं च व्यावृत्तिर्विषयान्तरात् ॥ लज्जाप्रणाश उन्मादो मूर्च्छामरणमेव च ॥ इति । मनसोऽनन्यपरतया मनःसङ्गसङ्कल्पोत्पत्ती उक्ते । ग्लानिरित्यनेन निद्राच्छेदादयो मूर्च्छान्ता उक्ताः । तेषां ग्लानिहेतुत्वात् । अत्र च पुरस्तदन्वित्यादिना हेतुफलभावः सूचितः । युवत्वप्रियत्वे प्रवृत्तिहेतू उक्ते । प्रियश्च, यो विप्रियं न कुरुते न चायुक्तं प्रभाषते । तथार्जवसमाचारः स प्रियः परिकीर्तितः ॥ इति भरतोक्तः । तत्रापि प्रकर्षं इयसुन् । जडताप्रदर्शनात् ।

(ल) अत्र कृष्णरजनी कृष्णपक्षचतुर्दशीरात्रिः । विषमव्यवसायो

मक । स्वगतम् । साधु लवङ्गिके ! साधु । अवसरे खलु रागोपकारयोर्गरीयसोरुपन्यासः ।

माल । हा ताद ! हा अम्ब (१) । (ब)

काम । वत्स !

माध । आज्ञापय ।

काम । इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकमपत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा मन्मथेन मया च तुभ्यं दीयते (श) ।

इति रोदिति ।

मक । फलितं नस्तर्हि भगवतीपादप्रसादेन ।

माध । तत् किमिति बाष्पायितं भगवत्या । (ष)

काम । चीवराञ्चलेन नेत्रे प्रमृज्य । विज्ञापयामि कल्याणिनम् ।

माध । नन्वाज्ञापय ।

---

(१) हा तात ! हा अम्ब ।

---

महामांसविक्रयः । निर्वापितो निहतः । पाखण्डोऽघोरघण्टः । साहसं स्त्रीवधरूपम् । साहसिकाद्धि भयं भवत्येव । तथा च प्राणदानेन माधवक्रीतमात्मानं कथं न समर्पयसीति भावः ।

(ब) साहसविवाहारम्भाद्दुर्जनभयात्पित्रादिवियोगशङ्कनाच्च खेदे हाशब्दः ।

(श) उत्तंसः कर्णपूरे च शेखरे च प्रकीर्तित इति विश्वः । अङ्गुलिपदेन चरणाग्रे प्रणामादश्लिष्यतोक्ता । अन्योन्यदर्शनेन धाता । प्रीतिजननात् कामेन । चौरिकाविवाहान्मयेत्याशयः ।

(ष) बाष्पायितमुद्गतबाष्पं वृत्तम् । मातृवत्स्नेहेनेदमुपपन्नम् ।

काम । परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च ।
तदिह सुवदनायां तात ! मत्तः परस्तात्
परिचयकरुणायां सर्वथा मा विरंसीः ॥ ( स )

इति गन्तुमिच्छति ।

माध । वारयन् । अहो वात्सल्यादतिक्रामति प्रसङ्गः ।

मक । भगवति ! ।

श्लाघ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ॥ ( ह )

---

( स ) परिणतीत्यादि । त्वद्विधानां कुलादिमतां प्रीतयः परिपाकरम्या भवन्ति । अधुनावश्यत्वेन परिणतिपदम् । तैस्तैर्हेतुभिः पितृबन्धुत्वोपदेशकत्वादिभिरहं तव मान्या । हेतूनां बहुत्वेन वीप्सा । तत इह मालत्यां मत्तः परस्तान्मत्परोक्षे परिचयरूपकरुणायां मा विरंसीर्मा विरतो भविष्यसि । करुणाया इति पाठे जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति पञ्चमी । तातेति सर्वं ततं व्याप्तमनेनेति तात व्यापक हे । यद्वा । तातो विधेयः । तातो विधेये जनक इति विश्वः । विरंसीरित्यत्र माङि लुङिति भविष्यति लुङ् । वात्सल्यात्स्नेहानुकम्पातः । अतिक्रमोऽन्यथात्वम् । अत्र माला नाम नाट्यालङ्कारकथनम् । यदाह । माला बहूनां हेतूनां निर्देशः साध्यसिद्धये ॥ इति ।

( ह ) श्लाघ्यान्वयेत्यादि । उज्ज्वलकुला । चक्षुःप्रीतिजननी रूपवती । उपचितसौहार्दातिशयानुरक्ता । गुणोज्ज्वला शीलादिमती । एतत्सर्वं वशीकरणमस्त्येव गुरुतरम् । एवं सति युष्माकमियमिति

काम । वत्स !

माध । आज्ञापय ।

काम । वत्से !

माल । आणवेदु भअवदी ( १ ) ।

काम । प्रियो मित्रं बन्धुता वा समग्रा
सर्वे कामाः शेवधिर्जीवितं वा ।
स्त्रीणां भर्ता धर्मदाराश्च पुंसा-
मित्यन्योऽन्यं वत्सयोर्ज्ञातमस्तु ॥ ( च )

मक । अथ किम् ।

लव । भअवदी जधा आणवेदि ( २ ) ।

काम । वत्स मकरन्द ! त्वमनेनैव वैवाहिकेन मालती-

( १ ) आज्ञापयतु भगवती ।

( २ ) भगवती यथाज्ञापयति ।

हेतोरनन्तरं किं ब्रवीमि । अतः परं न वाच्यमस्तीत्यर्थः । इतिकार-चतुष्टयं स्वरूपोपदर्शनाय । तया च त्वदभ्यर्थना सहजसिद्धैवेति भावः । इह प्रसिद्धिनामा नाट्यालङ्कारः । यदाह । वर्णने वस्तुनो यत्तु गुण-स्योत्कीर्तनं भवेत् । प्रसिद्धिरिह सा ज्ञेया नाटके कथिता बुधैः ॥ इति ।

( च ) प्रेय इत्यादि । वत्सयोर्मालतीमाधवयोरन्योन्यमेतद्विदित-मस्तु यत् स्त्रीणां भर्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृद्बन्धुता बन्धु-समूहः सर्वे ईप्सिताः समग्रा मिलिताः शेवधिर्निधिर्जीवनं च । पुरु-षाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि । बन्धुतेत्यत्र ग्राम-जनबन्धुसहायेभ्यस्तलिति समूहे तल् । निधिर्ना शेवधिरित्यमरः । अनेन गान्धर्वविवाहो दर्शितः । स चानुरागमूलत्वाच्छ्रेष्ठः । यदाह । अनुरागात्मकत्वेन गान्धर्वः श्रेष्ठतां गतः । इति ।

नेपथ्येन प्रसाधितः परिणाययात्मानम् । इति पेट्टालकमर्पयति ।

मक । यथाज्ञापयति भगवती । यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि (क) । तथा करोति ।

माध । भगवति सुलभवञ्चनर्थमतिसंकटमिदं वयस्यस्य ।

काम । आः कस्त्वमस्यां चिन्तायाम् ।

माध । एवं भगवत्येव जानाति ।

प्रविश्य मकरन्दः । विहसन् । वयस्य ! मालत्यस्मि (ख) । सर्वे सकौतुकं पश्यन्ति ।

माध । मकरन्दं परिष्वज्य सोपहासम् । भगवति ! कृतपुण्य एव नन्दनो यः प्रियामीदृशीं कामयिष्यते । (ग)

काम । वत्सौ मालतीमाधवौ इतो निर्गत्य वृक्षगहनेन गम्यतामुद्वाहमङ्गलार्थमस्मद्विहारिकायाः (घ) पश्चादुद्यानवाटः । सुविहितं च तत्र वैवाहिकं द्रव्यजातमवलोकितया । भूयश्च

---

(क) जवनिका पिधानपटः । तयान्तर्धानम् । स्त्रीणामप्ये स्त्रीवेषादिकरणेनौचित्यात् ।

(ख) मालत्यस्मि संवृत्त इत्यनेन वैमूढकनामा भाव उक्तः । यदाह । वैमूढकं तु लास्यं स्यात् पुंसः स्त्रीवेषधारणम् ॥ इति ।

(ग) कामयिष्यत इत्यनेन पराङ्कावतारः कृतः ।

(घ) अनुपलभ्यार्थमाह । वृक्षगहनेनेति । गहनेन वनेन विषमेण वा । गहनं विषमे क्लिष्टेति विश्वः । उद्वाहमङ्गलं विवाहार्थं कर्म ।

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै-
स्ताम्बूलीपटलैः पिनद्धफलिनव्यानम्रपूगद्रुमाः ।
कक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥(ङ)

गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं यावत् स्थातव्यम् ।

---

(ङ) गाढेत्यादि । तद्भुवो भागा उद्यानवाटिकायाः प्रदेशा वां युवयोः श्रेयः शृङ्गारादिकं विधास्यन्ति शृङ्गारस्योपवनविहरण-जन्यत्वात् । यदाह । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ कीदृशाः । ताम्बूली पर्णलता तासां समूहैः पिनद्धा वेष्टिताः फलिनाः फलयुक्ता अत एवानताः क्रमुकवृक्षा येषु ते । सापेक्षत्वेऽपि गमकत्वात्समासः । कीदृशैः । गाढोत्कण्ठा यस्याः सा च कठोरा तृतीय-यौवनवयाः केरलदेशवधूस्तस्याः कपोलवदवपाण्डुरीषद्धूसरश्छदः पत्रं येषां तैः । रतिसम्भोगे दक्षा प्रतिपक्षासूयिका गुणाढ्या च । अनि-भृतगर्वितचेष्टा सा विज्ञेया तृतीया तु ॥ इति भरतः । अत एवोत्-कण्ठाधिक्यम् । केरलदेशजत्वेन गौरत्वमुक्तम् । अतः पीतिसम्बन्धा-च्छेत ईषत्पाण्डुरत्वम् । यदाह । सितपीतसमायोगादीषत्पाण्डुरिति स्मृतः ॥ पिनद्धेति वष्टि भागुरिरल्लोपमित्यल्लोपे रूपम् । फलिन इति फलबर्हाभ्यामिनज्मत्वर्थीयः । तथा कक्कोलीफलस्य जग्धया भक्षणेन मुग्धाः प्रीता ये विकिराः पक्षिविशेषास्तेषां व्याहार उक्तिर्येषु ते । कक्कोली बदरी कोलीत्यनेकार्थः । भूमिं नखैर्विलिख्य ये चरन्ति ते विकिराः । नगौकोवाजिविकिरविविष्किरपतत्रय इत्यमरः । अदो जग्धिः । व्याहार उक्तिर्लपितमित्यमरः । तथा प्रेङ्खिता वातेन चलिता मातुलुङ्गवृतिर्वेष्टनं येषु ते । तथा चैवंविधनानागुणवनगमनेन सर्व-मनोरथसिद्धिस्ते भविष्यतीति भावः । मातुलुङ्गस्कोलङ्गवृक्षः । रुचको मातुलुङ्गक इत्यमरः ।

माध। सहर्षम्। कल्याणावतंसा हि कल्याणसंपदुपरिष्टाद्भवति। (च)

कल। दिट्ठिआ एव्वं पि भविस्सदि (१)। (छ)

मक। कथं संदेह एवात्र भवतः।

लव। सुदं पिअसहीए (२)।

काम। वत्स मकरन्द! वत्से लवङ्गिके! इत इतः प्रतिष्ठामहे। (ज)

माल। सहि! तुए वि गन्तव्वं (३)। (झ)

लव। विहस्य। संपदं क्खु अम्हे एत्थ तुवराम (४)। (ञ)

इति निष्क्रान्ता कामन्दकी लवङ्गिका मकरन्दश्च।

---

(१) दिष्ट्या एवमपि भविष्यति।

(२) श्रुतं प्रियसख्या।

(३) सखि! त्वयापि गन्तव्यम्।

(४) साम्प्रतं खलु वयमत्र त्वरामहे।

---

(च) कल्याणान्तरावतंसा मकरन्दविवाहकल्याणभूषणा माधवविवाहसम्पत्तिः।

(छ) कलहंसकवाक्यं। मकरन्दविवाहेनाप्यस्माकं प्रमोदः स्यादित्यर्थः।

(ज) संभोगार्थं विजनकरणाय कर्तव्यमकरन्दविप्रलम्भार्थं च सर्वेषां निष्क्रमणमाह वत्स इत्यादि।

(झ) सखि! त्वयापि गन्तव्यम्। एकाकिन्या मयात्र कथं स्थातव्यमिति भावः।

(ञ) साम्प्रतं खलु वयमत्रावस्थास्यामहे। यूयं सर्व एव स्वार्थं चलिता इत्यर्थः।

माध । अयमहमिदानीम्

आमूलकण्टकितकोमलबाहुनाल-

मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः ।

अस्याः करेण करमाकलयामि कान्त-

मारक्तपङ्कजमिव द्विरदः सरस्याः ॥ (ट)

इति निष्क्रान्ताः सर्वे ।

मालत्युपहारो नाम षष्ठोऽङ्कः । (ठ)

---

(ट) आमूलेत्यादि । अस्या अस्यं हस्तं हस्तेन गृह्णामि । यथा सरस्या ईषद्रक्तपद्मं मनोज्ञं हस्ती करेण स्थूलहस्तेन गृह्णाति तथेत्यर्थः । कोमलाङ्गयाः कर ईषद्रक्त एवेति बाध्यम् । कीदृशम् । आमूलं कक्षादेशपर्यन्तं कण्टकितो रोमाञ्चितः कोमलो बाहुरेव नालं यस्य तम् । कण्टकः क्षुद्रशत्रौ च रोमाञ्चेऽपि च दृश्यत इति विश्वः । आर्द्राङ्गुल्य एव दलानि पत्राणि यस्य तम् । रोमाञ्चितत्वार्द्रत्वे सात्त्विकभावात् । अहं कीदृशः । अनङ्ग एव ग्रीष्मस्तेन तप्तः । तथा च कामतापप्रशान्त्यर्थं करग्रहणमित्यर्थः । पद्मस्याप्युद्धृततया तस्य कण्टकितकोमलनालत्वमार्द्रपत्रत्वं च भवति । गजोऽपि ग्रीष्मतप्तः । पद्मपक्षे आमूलं कन्दपर्यन्तम् । तदनेनानन्तरकर्तव्यताध्यवसायस्य धैर्य-मुक्तम् ।

(ठ) स्तते स यं रत्नधरः पवित्रः पवित्ररूपा दमयन्तिकापि । जगद्वरं तत्कृतटिप्पणेऽङ्कः षष्ठोऽगमञ्जव्यरसाधिवासः ॥

इति षष्ठोऽङ्कः ।

---

# सप्तमोऽङ्कः ।

ततः प्रविशति बुद्धरक्षिता । (क)

बुद्ध । अम्महे सुसिलिट्ठमालदीणेवत्थलच्छीविप्पलद्धणन्दणकिदकरग्गहो अमच्चभूरिवसुमन्दिरे भअवदीवअणसंविहाणेहिं खेमेण गोवाइदो मअरन्दो । अज्ज अह्मे वि णन्दणावासं उवगदा । तदो भअवदीं णन्दणमापुच्छिअ गदा आवसहं । अअं च णववहूघरप्पवेसविरइदाकालकोमुदीमहूसवप्पउत्तिपज्जाउलासेसपरिअणो पदोसो अणुकूलइस्सदि अज्ज णो ववसिदं । संपदं तुवरन्तकामो कामिणिं कामेदुं बहुसो सपादवन्दणं अब्भत्थिअ पुणो

(१) अम्महे सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकृतकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवतीवचनसंविधानैः क्षेमेण गोपायितो मकरन्दः । अद्य वयमपि नन्दनावासमुपगताः । ततो भगवतीं नन्दनमापृच्छ्य गतावसथम् । अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रवृत्तिपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम् । साम्प्रतं त्वरमाणकामः कामिनीं कामयितुं बहुशः

(क) अधुना मालतीरूपधारिणा मकरन्देन कथं नन्दनविप्रलम्भो मदयन्तिकाहरणं च कृतं भवेदिति प्रबन्धाभिधानाय नियुक्तैव तत्र नवेत्यादिना प्रथमाङ्कसूचितबुद्धरक्षिताप्रवेशः ।

(ख) अत्र माधवविवाहनिर्वाहाश्चर्यास्वयैंऽम्महेशब्दः । सुश्लिष्टत्वं मकरन्दस्य गौरत्वादम्सुलत्वादिना मालतीसाम्यात् । भगवतीति भगवत्यैवालंकृत्य प्रहित इत्यर्थः । क्षेमेण कुशलेन । एतत्तु केनाप्यनुपलम्भात् । गोपायितो गुप्तीकृतः । आपृच्छ्य संवादं कृत्वा । तत्र नन्दनगृहं गच्छामीति तद्भवाननुमन्यतामिति संवादः । आपृच्छिः

वि बलामोडिअ अहिद्दवन्तो मअरन्देण णिट्ठुरं पडिहदो जामादा। तदो सो क्खु अधिअवेलक्खखलन्तअक्खरो सरोसणिब्भरदुःक्खिदो मदअप्फुरन्तणअणो ण मे संपदं तुए कोमारबन्धईए पओअणं त्ति ससवहं पइण्णं काउण वासभवणादो णिग्गदो त्ति। एदिणा पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सह संजोअइस्सं (१)। (ख)

इति निष्क्रान्ता। प्रवेशकः।

---

सपादवन्दनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता। ततः स खल्वधिकवैलक्ष्यस्खलदक्षरो सरोषनिर्भरदुःखितो मदप्रस्फुरन्नयनो न मे साम्प्रतं त्वया कौमारबन्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गत इति। एतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन सह संयोजयिष्ये।

---

संवादार्थ इति याज्ञिकाः। अत एवापृच्छस्व प्रियसखमसुमिति मेघदूतादौ टीकाकृता तथैव विवृतमित्यवधेयम्। व्यवसायं गृहम्। कौमुद्याश्विनपूर्णिमाव्रतम्। यद्वा। कार्तिक्यां चन्द्रमण्डलपूजा कौमुदीव्रतम्। तदुभयं च ग्रीष्मे प्रवृत्तमित्यकालकौमुदीत्युक्तम्। यद्वा। जननयनानन्दकत्वेन कौमुदीव कौमुदीति रूपकम्। कौमुदी चन्द्रज्योत्स्ना यथाकालसम्भवा सन्ध्याकालीना वर्षर्तुभवा जनानन्दाय तथेयमपीत्यर्थः। अः केशवस्तस्य कालो वर्षाकालः सन्ध्याकालश्च। प्रदोषो रजनीमुखमित्यमरः। व्यवसितं मदयन्तिकाविवाहरूपम्। अन्यकार्यव्यापृत्ते जने तदप्रत्यूहं निर्वहेदिति भावः। त्वरमाणेति विलम्बासहकामावेश इत्यर्थः। तिरस्काराद्वैलक्ष्येण स्खलन्त्यक्षराणि यस्य सः। रोषेण निर्भरं व्याप्तम्। कुलुञ्चितमिति पाठे कुलुञ्चितं मौनम्। कुलुञ्चितमाकुञ्चसङ्कोचं च काव्यविद इत्यभिधानात्। कौमारबन्धकी वेश्या। माधवानुरक्तत्वात्। तदन्य नन्दनस्य विवाहादिन एव बलादभिद्रवणेनाधार्मिकत्वम्। कामशास्त्रावित्त्व-

ततः प्रविशति शय्यागतो मालतीवेशो मकरन्दो लवङ्गिका च। (ग)

मक। लवङ्गिके! अपि नाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिर्विजेष्यते। (घ)

लव। को संदेहो एत्थ महाणुभाअस्स। किं बहुणा जहा एसो मञ्जीरसद्दो सुणीअदि तहा जाणामि तेण ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति। ता उत्तरीआववारिदो पसुत्तलक्खणो चिट्ठ (१)। (ङ)

मकरन्दस्तथा करोति।

---

(१) कः सन्देहोऽत्र महानुभावस्य। किं बहुना यथैष मञ्जीरशब्दः श्रूयते तथा जानामि तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति। तदुत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ।

---

च दर्शितम्। यदाह। सुकुमाराः पुरुषाणामाराध्या योषितः सदा। अनिच्छया प्रवृत्तस्य च्छृङ्गारं नाशयेद्रसम्॥ मस्यकीति परुषवाक्येन दुराचारत्वमप्यस्य। यदाह। ताडनं बन्धनं वा यो न विरुद्धस्य समाचरेत्। ब्रूते परुषवाक्यं च दुराचारः स उच्यते॥ प्रसङ्गेन संविधानकेन। एतेन सूचनाप्रवेशः।

(ग) सुप्तस्य प्रवेशो भरतनिषिद्ध इति शय्यागत इत्युक्तम्।

(घ) भगवतीनीतेरव्यभिचारित्वेऽप्याश्रयभेदात्तदाशङ्काह। अपीति सम्भावनायाम्।

(ङ) अव्यभिचारित्वमेवाह। लवङ्गिकावाक्ये। कः सन्देहोऽत्र महानुभावस्य। मदयन्तिकापरिणयोऽवश्यं भावीति भावः। अत्र किं बहुना भणितेनेत्यर्थः। मञ्जीरो नूपुरम्। व्यपदेशेन मालतीप्रबोधच्छलेन। उत्तरीयेति उपरिवासःपिहिताङ्ग इत्यर्थः। इह नर्मगर्भो

ततः प्रविशति मदयन्तिका बुद्धरक्षिता च ।

मद । सहि ! सच्चं ज्जेव्व परिकोविदो मे भादा माल-दीए ( १ ) ।

बुद्ध । अध इं ( २ ) ।

मद । अहो अच्चाहिदं ता एहि वामसीलं मालदिं णिभच्छेम्ह ( ३ ) । ( च ) परिक्रामतः ।

बुद्ध । इदं वासभवणदुवारं ( ४ ) । (छ) इति प्रविशतः ।

मद । सहि लवङ्गिए ! जाणीअदि पसुत्ता दे पिअसही त्ति ( ५ ) ।

---

( १ ) सखि ! सत्यमेव परिकोपितो मे भ्राता मालत्या ।

( २ ) अथ किम् ।

( ३ ) अहो ! अत्याहितं तदेहि वामशीलां मालतीं निर्भर्त्स-यावः ।

(४) इदं वासभवनद्वारम् ।

( ५ ) सखि लवङ्गिके ! ज्ञायते प्रसुप्ता ते प्रियसखीति ।

---

कैशिकीवृत्तिः । यदाह । कार्यकारणतो यत्र नायको गोपयेत्तनुम् । नर्मगर्भः स कथितो नाट्यवेदिभिरुत्तमः ॥

( च ) अत्रात्याहितमतिक्रमः । निर्भर्त्सयाम इति । विरक्तं नायकं ज्ञात्वा वाचा हीनं तु कन्यका । पश्यन्ती स्तम्भवक्त्रं निर्विद्येत ततः परम् ॥ इति भरतानुरोधेन कन्याविस्रम्भपरे मे भ्रातरि व्यर्थमियं दृष्टेति निर्भर्त्स्या सख्या इति भावः ।

( छ ) बुद्धरक्षितावाक्ये । एतद्वासभवनद्वारम् । तत्प्रविशेति शेषः ।

लव। एहि मा णं पडिबोधेहि जदो एसा चिरं दुम्म-णाअन्ती दाणिं ज्जेव्व ईस मसुं उज्झिअ पसुत्तेति। तदो सणिअं इध ज्जेव्व सअणुप्पन्ते उवविस (१)। (ञ)

मद। तथा कृत्वा। सहि! दुम्मणाअदि इअं वाम-सीला (२)।

लवं। कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं विअड्ढमहुरभासिणं ससिणेहं अरोसणं अ दे भाद्दरं भत्तारं समासादिअ सही ण दुम्मणाइस्सदि (३)। (झ)

---

(१) एहि मैनां प्रतिबोधय यत एषा चिरं दुर्मनायमानेदा-नीमेवेषन्मन्युमुज्झित्वा प्रसुप्तेति। ततः शनैरिहैव शयनीयो-पान्त उपविश।

(२) सखि! दुर्मनायत इयं वामशीला।

(३) कथं नाम नववधूविस्रम्भणोपायज्ञातारं मनोहरं विदग्ध-मधुरभाषिणं सस्नेहमरोषणं च ते भ्रातरं भर्त्तारं समासाद्य सखी न दुर्मनायिष्यते।

---

(ञ) अत कथमस्माद्दुराचारात् स्यामस्मीति चिन्तया दौर्मन-स्यान्निद्रा। यदाह। व्यालस्यदौर्मनस्यक्लेशश्रमचिन्तनस्वभावेभ्यः। रात्रौ जागरणादपि निद्रा मनुजे दिवापि सम्भवति॥ तथा च दुःख-हानाय निद्रयापि चणं नयत्विवर्यमित्याशयः।

(झ) अत विस्रम्भणं विश्वासमुत्पाद्य वशीकरणम्। लडहं मनोहरम्। विदग्धं कलाभिज्ञम् नववधूविस्रम्भणोपायस्ताम्बूलादि-दानम्। यदाह। बाला ताम्बूलमालाफलरसमुरसाहारसंमानहार्यै-त्यादिकः सुप्रसिद्ध एव। प्रकृते तूपालम्भपरत्वाद्विपरीतार्थकत्वमिति भावः।

मद। बुद्धरक्खिदे! पेक्ख विप्पदीअं अह्मे वि उवालम्भीआमो (१)। (ञ)

बुद्ध। विप्पदीअं ण विप्पदीअं वा। (२)

मद। कधं विअ। (३)

बुद्ध। जं दाव चलणपडिदो वि भत्ता ण बहुमाणिदो एत्थ लज्जादोसेण एसो जणो उआलम्भणिज्जो। जं वि पिअसहि! णववहूविरुद्धसाहसोवक्कमक्खलणवेलक्खविच्छडिदमहाणुभावत्तणस्स भादुणो दे वाआगदं किं वि अपविट्ठाणं तेण तुह्मे त्ति। किं च। कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगविद्वेषिण्यो भवन्ति। एवं किल कामसुत्तआरा आमणन्ति (४)। (ट)

---

(१) बुद्धरक्षिते! प्रेक्षस्व विप्रतीपं वयमपि उपालभ्यामहे।

(२) विप्रतीपं न विप्रतीपं वा।

(३) कथमिव।

(४) यत्तावच्चरणपतितोऽपि भर्त्ता न बहुमानितोऽत्र लज्जादोषेणैष जन उपालम्भनीयः। यदपि प्रियसखि! नववधूविरुद्धसाहसो-

---

(ञ) विप्रतीपं विपरीतम्। पादपतितनन्दनाननुवर्त्तनान्माल-त्येवोपालभ्या तदकरणाद्विपरीतत्वमिति भावः। पादपतनेऽनुष्टुत्तौ भरतः। व्रीडायुक्तापि या योषिद्रतिरुष्टापि या भवेत्। पादे पतन्तं पुरुषमनुवर्तेत सर्वदा। बुद्धरक्षितावाक्ये। विप्रतीपं न वा विप्रतीपम्। तच्चित्तानुवर्तनेन व्रीडितयुक्तया निराकरणेन न वैपरीत्यमिति भावः।

(ट) स्वाभिप्रायं गोपायितुं साधारणोक्त्या स्ववचो वदति। एतं यमिति वक्तव्ये जन इत्यभिधानं मालतीमकरन्दसाधारण्यार्थम्।

लव ! साम्प्रतम्। घरे घरे पुरिसा अम्मकाणो समुव्वहन्ति ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धलडहसहावं कुलकुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे क्खु दे हिअअसल्लणिक्खेवा आमरणं संभरिज्जन्तदूसहा पदिघरणिवासवेरग्गकारिणो महापरिभवा जाणं कदे इत्थिआणं जम्मलाहं जुगुच्छन्ति बान्धवा (१)। (ठ)

---

पक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्यपरिस्थानं तेन यूयमिति। एवं किल कामसूत्रकारा आमनन्ति।

(१) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति न खलु कोऽपि

---

नववध्वा लज्जयातिक्रमे न दोषः। यदाह। नवपरिणीता योषिद् यत्नादपनीय साध्वसं सद्यः। विविधविनोदकथाभिर्विश्वासं नीयते सरसैः॥ रभसोपक्रमः सहसा प्रवृत्तिः स च विरुद्धः। यदाह। सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता। साध्वसं त्रासमुद्वेगं सद्यो द्वेषं च विन्दति॥ सा प्रीतियोगमप्राप्य तेनोद्वेगेन दुःखिता। पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा॥ स्खलनमुपक्रान्तानिर्वाहः। विच्छर्दितं विशीर्णम्। अपरिस्थानमनपरिस्थितिः। अधैर्य्यमिति यावत्। यूयमुपालभ्या इति मदयन्तिकां प्रति वचनम्। भ्रातृपक्षप्रवेशात्। कह्नोति पाठे बुद्धरक्षिता मदयन्तिकया सहाभेदं मन्यमाना वयसित्याह। शिल्पकारित्वात् संस्कृताश्रयणम्। यदाह। दिव्याया गणिकायाश्च शिल्पकार्य्यास्तथैव च। विदग्धायाः स्त्रिया भाषां संस्कृतेनापि योजयेत्॥ यद्वा। कामसूत्रानुकरणात् संस्कृतभाषा। सधर्माणस्तुल्याः उपक्रम आरम्भः। प्रसभं हठात्। संप्रयोगः सुरतम्। किल प्रसिद्धौ। कामसूत्रकारा मन्वयन्ते।

(ठ) अत्र निक्षेप आरोपणम्। जुगुप्सन्ते निन्दन्ति। दुःशीला कन्या मा जायतामिति भावः।

मद। बुद्धरक्खिदे! अदिदुम्मिदा पिअसही लवङ्गिआ। महन्तो को वि मे भादुणा वाआवराधो से कदो (१)। (ड)

बुद्ध। अध इं। सुदं अह्मेहिं जधा मम ण तुए संपदं कोमारबन्धईए पओअणं त्ति (२)।

मद। कर्णौ पिधाय। अहो! अदिक्कमो। अहो! पमादो। सहि लवङ्गिए! असमत्थह्मि दे मुहं पि संपदं दंसिदुं तधावि पहवामि त्ति किं पि मन्तइस्सं (३)। (ढ)

लव। साधीणो दे अअं जणो (४)। (ण)

---

लज्जापराधीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं प्रभवामीति वाचानलेन प्रज्वालयति। एते खलु ते हृदयशल्यनिक्षेपा आमरणं संस्मर्यमाणदुःसहाः पतिगृहनिवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीणां जन्मलाभं जुगुप्सन्ते बान्धवाः।

(१) बुद्धरक्षिते! अतिदूना प्रियसखी लवङ्गिका। महान् कोऽपि मे भ्रात्रा वाचापराधोऽस्याः कृतः।

(२) अथ किम्। श्रुतमस्माभिर्यथा मम न त्वया सांप्रतं कौमारबन्धक्या प्रयोजनमिति।

(३) अहो! अतिक्रमो। अहो! प्रमादः। सखि लवङ्गिके! असमर्थास्मि ते मुखमपि सांप्रतं दर्शयितुं तथापि प्रभवामीति किमपि मन्त्रयिष्ये।

(४) स्वाधीनस्तेऽयं जनः।

---

(ड) कथमन्यथात्युद्विग्नेयमिति भावः।

(ढ) अत्र प्रभवामीति वरभगिन्यपि त्वयि प्रणयवशादाश्वासवत्यमिति भावः।

(ण) अत्र यथेच्छसि तथा ब्रूहीत्यर्थः।

मद। चिट्ठदु ज्जेव्व मह भादुणो दुस्सीलदा अवरिट्ठाणं अ। तुम्हे हिं ईदिसो वि संपदं जधाचित्तमणुवत्तणीओ जेण भत्ता एसो त्ति। अस्सं च। तुम्हे इमस्स अणहिजादक्खराहिक्खेवोवालम्भदूसणस्स जं मूलं तं ण आणाध (१)। (त)

लव। कधं वाआमन्तिदं वि णाम ण जाणीमो (२)।

मद। जं दाणिं तस्सिं महाणुभावे माहवे किं पि किल मालदीए तारामेत्तअं आसी तहिं सव्वलोअस्स अदिभूमिं गदो पवादो। तं क्खु एदं विअम्भादि। ता पिअसहि! जधा एस भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरीअदि तधा करेध। अणधा महादोसो त्ति जाणिदं भोदु। णिक्कम्पदारुणा अम्मकाओ दूमावेन्ति हिअअं मणुस्साणं ईदिसादो दुरभिसङ्गादो त्ति मा णं भणिस्सध मदअन्तिआए कधिदं त्ति (३)। (थ)

---

(१) तिष्ठत्वेव मम भ्रातुर्दुःशीलतापरिस्थानं च। युष्माभिरीदृशोऽपि सांप्रतं यथाचित्तमनुवर्त्तनीयो येन भर्तैष इति। अन्यच्च। यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भदूषणस्य यन्मूलं तन्न जानीथ।

(२) कथं वाचामन्त्रितमपि नाम न जानीमः।

(३) यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्यास्तारामैत्रकमासीत्तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः। तत् खल्विदं

---

(त) अत्रेदृशोऽपि दुःशीलोऽपि। यथाचित्तं चित्तानतिक्रमेण। भर्तैति। कोऽपि देवः कुलस्त्रीणां पतिरेव पतन्नपि॥ इतिवचनात् स्त्रीषु भर्ता प्रभवतीति भावः। न चेति न च न जानीथ। किं तु जानीथ एवेत्यर्थः।

(थ) अत्र किल प्रसिद्धौ। तारामैत्रकं प्रेम। तत्र माधवे।

लव। अइ असावधाणि ! असंबद्धलोअप्पवादमोहिदे अवेहि ण तुए सह जंपिस्सं (१)। (द)

मद। सहि ! पसीद पसीद। अहवा ण तुम्हे अफुडं भणिदाओ चिट्ठध। किं च। अम्हे सच्चं ज्जेव माहवेक्कम-अजीअलोअं मालदिं जाणीमो। केण वा कठोरकेदअगब्-भविब्भमावअवदोव्वल्लणिव्वहिदसुंदरत्तणविसेसं माहव-सहत्थणिम्माविअबउलावलीविरइदकण्ठावलम्बमेत्तसंधारि-

---

विजृम्भते। तत् प्रियसखि ! यथैव भर्तुरपथ्याभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत। अन्यथा महादोष इति ज्ञातं भवतु। निष्कम्पदारुणः कन्यका दुर्वन्ति हृदयं मनुष्याणामीदृशाद् दुरभिसङ्गादिति। सैनां भणिष्यथ मदयन्तिकया कथितमिति।

(१) अयि असावधाने ! असंबद्धलोकप्रवादमोहिते ! अपेहि न त्वया सह जल्पिष्यामि।

(२) सखि ! प्रसीद प्रसीद। अथवा न यूयमस्फुटं भणितास्तिष्ठथ। किं च। वयं सत्यमेव माधवैकमयजीवलोकां मालतीं जानीमः।

---

अतिभूमिमतिदूरम्। तत् खल्विति। माधवानुरक्ता मालतीत्यस्यानुशय इत्याशयः। विजृम्भते प्रकाशते। अपथ्ये मालती माधवपरेत्यसत्यके। अभिनिवेशो रोषः। निरवशेषमिति क्रियाविशेषणम्। दोष इत्यस्या दौर्भाग्यं त्यागो वा नित्यशङ्काकुलतया स्यादिति भावः। निष्कम्पेति। सततपरपुरुषालोकनेन लज्जाहीनतया दारुणत्वमत एवेयं कुलटा न वेति परेषां संदेह इति भावः।

(द) अतापेहि दूरं गच्छ।

(ध) अत न यूयमिति त्वदस्फुटवादे मेऽवसाद इत्यर्थः। न खलु न जानीमः। अपि तु जानीम एव। तथा च त्वमपक्वं किं

दजीवणं मालदीए माहवस्स अ पभातचन्दमण्डलावण्डु-रपरिक्खामरमणीअदंसणं ण विभाविदं सरीरं। किं च तहिंमसे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे सविब्भ-मुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलवहलविलासमसि-णसंचारचारुतारआविराअन्तविब्भमा अणङ्गणट्टाआरि-असव्वाआरोवदेसणिम्मविअविअड्ढमुद्धमहुरा तुए वि ण णिरूविदा इमाणं दिट्ठिसंभेदा। किं अ। मम भादुणो दाणवुत्तन्तं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वइअरमि-लाअन्तदेहसोहाणं उव्वत्तमाणमूलं विअ ण लक्खिदं हिअअं। किं अ। एदं पि अवरं सुमरिदं मए (१)। (ध)

---

केन वा कठोरकेतकगर्भविभ्रमावयवदौर्बल्यनिर्वाहितसुन्दरत्वविशेषं बाधयस्वहस्तनिर्मितवकुलावलीविरचितकण्ठावलम्बमात्रसंधारितजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम्। किं च। तस्मिन्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्या-मुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लप्रसरन्नयनोत्पलबहलविला-समसृणसंचारचारुतारकाविराजमानविभ्रमा अनङ्गनाट्याचार्यसर्वाका-रोपदेशनिर्मितवैदग्ध्यमुग्धमधुरास्त्वयापि न निरूपिता अनयोर्दृष्टि-संभेदाः। किं च। मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणोच्छलित-गम्भीरावेगव्यतिकरम्लायमानदेहशोभयोरुद्वर्तमानमूलमिव न लक्षितं हृदयम्। किं च। एतदप्यपरं स्मृतं मया।

---

करोषीत्यर्थः। कठोरः परिणतो जातपाण्डिमेत्यर्थः। यद्वा। अकठोरा बाला केतकीत्यर्थः। तादृशी सातिपाण्डुरेव भवति। न विभावितं न ज्ञातम्। अपि तु सर्वैरेव ज्ञातमित्यर्थः। तत् किमपह्नवं करोषीति भावः। विभ्रमो विलासः। स च स्त्रियां यथा। यानस्थाना-सनादीनां नेत्रवक्त्रादिकर्मणाम्। उत्पद्यते विशेषो यः स विलास

लव। किं दाणिं अवरं (१)। (न)

मद। जं मम तस्स जीविदप्पदाइणो महाणुभावस्स चेत्रणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअड्ढवअणोवस्सासबोधिदेण हिअअं जीविदं अ माहवेण पारितोसिअत्तणेण सअंगाहसाहसे णिउत्तं। अह अ लवङ्गिए तहिं तुए ज्जेव्व भणिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति (२)। (प)

---

(१) किमिदानीमपरम्।

(२) यत् खलु मम तस्य जीवितप्रदायिनो महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासबोधितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहसाहसे नियुक्तम्। अथ च लवङ्गिके तत्र त्वयैव भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति।

---

इति स्तुतः॥ पुरुषे यथा। मन्दसंचारिणी दृष्टिर्गतिश्च वृषभायिता। स्मितिपूर्वस्तथालापो विलासः कथ्यते यथा॥ किं न त्वया निरूपिता येनापकृष्ट इत्यर्थः। आवेगोऽप्राप्तिदुःखम्। अङ्गारितं लुतप्तम्। उद्वर्तमानमुत्पतत्। आवेगोऽयमिष्टानाप्तिजः। यदाह। आवेगश्च भवेत् पुंसामिष्टानावाप्तिसंभवात्॥

(न) किमिदानीमपरम्। त्वया स्मृतमिति शेषः।

(प) अत्र चेतनाप्राप्तिरूपमेव प्रियम्। पारितोषिकं यद्याजवणितेत्यादिश्लोके दर्शितम्। नियुक्तं दत्तम्। तच्चित्तानुरागं विना नोपपन्नमिति भावः। अर्थान्तरोक्तिप्रसङ्गेन प्रकृतापह्नवार्थमाह। त्वां सखि इति आमिति पूर्वस्मरणार्थः। विस्मृतमिति। ज्ञात्वापि तत्कथाकथनायायं प्रश्न इति भावः।

लव। कदमो उण महाभाओ त्ति विसुमरिदं मए (१)।

मद। सहि सुमर सुमर जेण तस्सिं दिअसे विअड-दुट्ठसावदावदेसकालगोचरं गदा असरणा तक्कालसंणिहि-देण जीविदप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहारसाहसं कदुअ परिरक्खि-दह्मि। जेण अ दिढदाढाविदारिअविअडमंसलुत्ताण-परिणाहिवक्खत्थलेण जरढजज्जरिदजवापीडहारिणा कत्थ-णेक्कमणेण मम किदे विसहिदा अतिदुट्ठसद्दूलणहसिहा-वज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति (२)। (फ)

---

(१) कतमः पुनर्महाभाग इति विस्मृतं मया।

(२) सखि स्मर स्मर येन तस्मिन्दिवसे विकटदुष्टश्वापदापदेशका-लगोचरं गताशरणा तत्कालसन्निहितेन जीवितप्रदायिना पीवर-भुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि। येन च दृढदंष्ट्राविदारितविकटमांसलोत्तान-परिणाहिवक्षःस्थलेन जरठजर्जरितजवापीडहारिणा कत्थणैकमनसा मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति।

---

(फ) अत्र स्मर इति मकरन्दमिति भावः। विकृष्टो रुष्टः। श्वापद इति व्याघ्रव्याजेन यम इत्यर्थः। अवलग्नसंनिहितेति पाठ-ऽवलग्नं कण्ठः। संभावितः ख्यातः। कर्मधारयोऽत्र। विकटं विशा-लम्। मांसलं स्थूलम्। उत्तानमुच्छ्रितम्। जरठं कठिनं जर्जरितं विध्वंसितं यदोड्रपुष्पमुकुटं तदिव हरति। कर्तर्युपमान इति णिनिः। हरणमिह समीकरणम्। रक्ताक्तदेहतया साम्यम्। शिखाग्रम्।

लव । हुं मअरन्दो (१) । (ब)

मद । सानन्दम् । पिअसहि किं किं भणासि (२) । (भ)

लव । णं भणामि मअरन्दो त्ति (३) । (म) वस्तुं हुं शरीरसखाः स्पृशन्ती संस्कृतमाश्रित्य ।

वयं तथा नाम यदात्थ किं वदा-
म्ययं त्वकस्माद्विकलः कथान्तरे ।
कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ॥ (य)

मद । सलज्जम् । सहि कीस मं उवहससि । णं भणामि णिव्वावअन्ति मं तारिसस्स अप्पणिरवेक्खव्ववसा-

---

(१) हुं मकरन्दः ।

(२) प्रियसखि ! किं किं भणसि ।

(३) ननु भणामि मकरन्द इति ।

---

(ब) अत हुं वितर्के हुं वितर्के । हुं वितर्के विस्मय इत्यमरः ।

(भ) अत्राह्लादातिशयात्पुनः पुनः प्रश्नः । प्रियनाममधुपानेऽपि न तृप्तातो श्रुत्वैवाह्वेति भावः ।

(म) ननुशब्द आशयाविष्कारे ।

(य) अहमित्यादि । यथात्वमात्थ तत्तथा । मालती माधवानुरक्तेति स्वीकृतमित्यर्थः । अहं किं नाम वदामीत्यभिनिवेशमात्रम् । अयं पुनः कुलकन्यकाजनः कथामध्ये कथमकस्मात् कदम्बगोलकाकारमाश्रितः । बहलपुलकशालित्वात् । विकलो विह्वलः सन् । कीदृशः । विशुद्धः निष्कलङ्कः । कामाभिषङ्गदोषशून्य इति यावत् । मुग्धो रसानभिज्ञः । सर्वमिदं सोल्लासम् । अत एव वैदग्ध्यरतया शिल्पकारिणीत्वेन संस्कृताश्रयणम् ।

द्दणो किदन्तकवलिज्जन्तजीविदबलामोडिअपच्चाणअणगुरुओवआरिणो जणस्स संकधासु णामग्गहणसुमरणाइं । तधा अ सो तुए वि गाढप्पहारवेअणारम्भविअ्झारिदसरीरसंगलिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविलग्गिदासिलदाविट्ठम्भधीरधारिदसरीरभारो पच्चक्खीकिदो ज्जेव्व मदअन्तिआणिमित्तमेत्तविच्छड्डिअमहामहग्घजीवलोओ महाभाओ त्ति (१) । (२) मदयन्तिका स्वेदादीन्विकारान्नाटयति ।

(१) सखि ! किं मामुपहससि । ननु ममापि निर्वापयन्ति मां तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवल्यमानजीवितबलात्कारप्रत्यानयनगुरुकोपकारिणो जनस्य सङ्कथासु नामग्रहणस्मरणानि । तथा च स त्वयापि गाढप्रहारवेदनारम्भविस्मारितशरीरसंगलितस्वेदसलिलोत्पीडो मोहमुकुलायमाननेत्रकन्दोट्टयुगलो भूमिविलग्नासिलताविष्टम्भधैर्यधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति ।

(२) मत उपहससीति नाहं मकरन्दानुरक्ततया हृष्टा किंतु तद्वीरत्वमभिनन्दामीति न हासस्थानमिति भावः । अत एव चित्तचोरिकयाह । नन्विति । एवं स्वहर्षस्यान्यथासिद्धिमुक्त्वा निजाङ्गसङ्गजं स्वेदादिकं मकरन्देऽन्यथयति तथा चेति । विस्मारितशरीरेति मूर्च्छाकथनम् । संगलितो मिलितः । उत्पीडः पूरः । कन्दोट्टो नीलोत्पलम् । मोहेति मोहेन नेत्रमीलनं न तु मदङ्गसङ्गादिति भावः । यदाह । व्यसनाभिघातभयपूर्ववैरस्मरणजो भवति मोह इति । प्रहारमूर्च्छने कथमयं भूमौ न पतितोऽत आह भूमीति । विष्टम्भः संबन्धः । विच्छर्दितः परित्यक्तः । महामहार्घमतिदुर्लभम् । जीवलोको मर्त्यभुवनम् । प्रियालिङ्गनस्मरणादिना स्वेदादिकम् । स्वेदा-

बुद्ध । ववसिदं पिअसहीए सरीरेण (१) । (ल)

मद । सलज्जम् । पिअसहि अवेहि । उब्भिसाह्मि सह-वासिणीए वीसम्भेण (२) ।

लव । सहि मदअन्तिए ! अह्मे वि जाणिदव्वं जाणीमो । ता पसीद विरम ववदेसादो । एहि वीस-म्भगब्भकधाबन्धसरिसं सुहं चिट्ठह्म (३) । (व)

बुद्ध । सोहणं लवङ्गिआ भणादि (४) । (श)

---

(१) व्यवसितं प्रियसख्याः शरीरेण ।

(२) प्रियसखि अपेहि । उद्भिन्नास्मि सहवासिन्या विस्रम्भेण ।

(३) सखि मदयन्तिके ! वयमपि ज्ञातव्यं जानीमः । तत्प्रसीद विरम व्यपदेशात् । एहि विस्रम्भगर्भकथाबन्धसदृशं सुखं तिष्ठामः ।

(४) शोभनं लवङ्गिका भणति ।

---

दीनित्यनेन किलकिंचितभावाविष्करणम् । यदाह । यदन्तर्निहित-स्याङ्गैः सव्यापारैर्मनोभुवः । सव्रीडाविष्कृतिः स्त्रीणां तदाहुः किलकिंचितम् ॥

( ल ) अत्र स्वेदादिमता तव शरीरेण मकरन्दसंभोगोऽभिलषित इत्यर्थः ।

(व) अत्र सहवासिन्याः सख्याः । नाहं कामजस्वेदादिनोद्भिन्ना किं तु त्वद्विस्रम्भकथयेति भावः । उभिसाह्मीति पाठेऽभिज्ञातास्मी-त्यर्थः । अत्र जानीम एवेति कामन्दक्यादिद्वारा तव मकरन्दस्य च चेष्टितं ज्ञातमेव । तत् कथमपह्नव इति भावः । व्यपदेशाच्छलात् । सह-र्षमिति मकरन्दे स्नेहानुबन्धमपि कथयेत्याशयः । उभयमपि क्रिया-विशेषणम् ।

( श ) अत्र शोभनं कथयितुमर्हसीत्यर्थः ।

मद। विधेअह्मि संपदं पिअसहीओ (१)।

लव। जइ एव्वं ता कधेहि कधं णु दे कालो गच्छदि त्ति (२)। (ष)

मद। णिसामेहि पिअसहि। मम बुद्धरक्खिदापक्खवादपच्चएण पढमं ज्जेव्व तस्सिं जणे अदिभूमिं गदो अणुराओ। अवि अ। तस्सिं जणे भरिदुच्चरन्तकोदूहलुक्कण्ठामणोरहं हिअअं आसी। तदो विहिणिओअणिव्वत्तदंसणा भविअ दुव्वारदारुणाणङ्गदुक्खसंदाविदकड्ढन्तचित्तविहडन्तजीविदा संभाविअह्मि। विअम्भिआपुव्वसव्वङ्गप्पज्जालिअमअणहुअवहुद्दामदूसहाआसदुम्मणाअन्तपरिअणा पच्चासाविमोक्खमेत्तसुलहमिच्चुणिव्वाणपडिजलबुद्धक्खिदावअणवड्ढिदावेअव्वदुअरविसंठुला इमं जीअलोअपरिवत्तं अणुभवामि (३)। (स)

---

(१) विधेयास्मि सांप्रतं प्रियसख्यौ।

(२) यद्येवं तत् कथय कथं नु ते कालो गच्छतीति।

(३) निशामय प्रियसखि! मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जनेऽतिभूमिं गतोऽनुरागः। अपि च तस्मिञ्जने भृतोच्चरत्कौतूहलोत्कण्ठामनोरथं हृदयमासीत्। ततो विधिनियोगनिर्वृत्तदर्शना भूत्वा दुर्वारदारुणानङ्गदुःखसन्तापितकर्षच्चित्तविघटमानजीविता सम्भावितास्मि। विजृम्भितापूर्वसर्वाङ्गप्रज्वालितमदनहुतवहो-

---

(ष) अत्र मकरन्दवियोगेन कथं वर्तस इति भावः।

(स) अत्र निशामय शृणु। एकवचनमिह लवाङ्गिकापेक्षया। बुद्धरक्षिताया विदितवृत्तान्तत्वात्। कथाकथनं तु रागवृद्धये यदाह। याता पुरस्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं रतिसंकथा च। भवन्त्यु-

संकप्पसिविणअन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं। सो वि पिअसहि मुहुत्तणिव्वूढविम्भअविसंठुलुव्वेल्लवित्थरन्तललिदणेत्तपुण्डरीअतण्डवुप्पीलडम्बरपडिरूढमैरेअदप्पं विअ चिरं णिज्झाअदि मं (१)। (ह)

---

हा मदुःखच्छायासदुर्मनायमानपरिजना प्रत्याशाविमोक्षसात्त्वलभस्यत्वनिर्वाणप्रतिकूलबुद्धरक्षितावचनवर्धितावेगव्यतिकरविसंष्ठुलं जीवलोकपरिवर्तमनुभवामि।

(१) सङ्कल्पस्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेक्षे तं जनम्। सोऽपि प्रियसखि! मुहूर्तनिर्व्यूढविस्मयविसंष्ठुलोद्वेल्लविस्तार्यमाणललितनेत्रपुण्डरीकताण्डवोत्पीडडम्बरप्रतिरूढमैरेयदर्पमिव चिरं निध्यायति माम्।

---

भावाः प्रथमावलोके यूनोर्येतो द्विगुणैति रागः॥ पक्षपात इति बुद्धरक्षितापक्षपातो गुणबाहुल्यं विना न भवतीति विश्वास इति भावः। प्रतोद्वृत्तमातिरिक्तीभवत्। कौतूहलमुत्कण्ठा च मनोरथश्चेति विग्रहः। ततो बहुव्रीहिः। यद्वा। अतिरिक्तीभवत् कौतूहलमुत्कण्ठा च यत्र मनोरथे तादृशो मनोरथो यत्र तत्तया। सर्वाङ्गदाहो व्याध्यवस्थायाम्। यदाह। मनःसंमोहसर्वाङ्गदाहइत्याद्याभिस्तथा। शिरसो वेदनाभिश्च व्याधेरभिनयो यथा॥ मरणमेव निर्वाणं मोक्षः। सर्वदुःखापहारकत्वात्। मदनादिष्टबङ्गत्वं स्यादिति बुद्धरक्षितावचनम्। विसंष्ठुला संशयितचित्ता। जीवलोकस्य परिवर्तोऽन्यथात्वं मूर्छेत्यर्थः। यद्वा। मूर्छानन्तरं पुनर्जीवलोकप्रवेशोऽत्र परिवर्तनम्।

(ह) संकल्पान्तरे भावनाबलजज्ञानमध्ये स्वप्नज्ञानमध्ये चेत्यर्थः। निर्व्यूढ उपचितः। उद्वेल्लत्वम्भ्रूक्षेपम्। प्ररूढमैरेयं प्रसन्नमद्यम्। तस्य मदो मत्तता। मैरेयमासवः सीधुरित्यमरः। घूर्णितमितिक्रियाविशेषणम्। निध्यायति चिन्तयति।

किं अ । कवलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरक्खलिदगम्भीरतारधीरणाद्भरिदकण्णविवरं पिए मदअन्तिए ! त्ति वाहरदि । अध अ । पप्फुरन्तपओहरुच्छलदुत्तरीअअञ्चलावलम्बणपरिभवेण ससंभमुत्तरंगिधमधमाअन्तहिअअं मं समुत्तासेदि (१) । (च)

सहसा विसज्जिअं सुअमोसरिअतक्खणकठोरकमलदण्डाअमाणबाहुबन्धणावारिअपओहरग्गमं विहडन्तविअडसेहलावलअसंदाणिज्जन्तपीवरूरुप्पडिसिद्धविप्पदीवगमणं

---

(१) किं च । कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरतारधीरनादभरितकर्णविवरं प्रिये मदयन्तिके ! इति व्याहरति । अथ च । प्रस्फुरत्पयोधरोच्छलदुत्तरीयाञ्चलावलम्बनपरिभवेन ससंभ्रमोत्तरंगिधमधमायमानहृदयां मां समुत्त्रासयति ।

---

(च) कषायः सुरभितः । कलहंसो राजहंसः । घोषः शब्दः । घर्घरमस्फुटम् । स्खलितं च्युतम् । एतदुभयं साध्वसवशात् । हर्षसंजातस्वरभेदाद्वा । यदाह । स्वरभेदो भयक्रोधमदहर्षादिभिर्भवेत् । भरितकर्णविवरमिति क्रियाविशेषणम् । वस्त्राञ्चलग्रहणेन स्त्रीप्रसादनम् । यदाह । रहसि ग्रहणेनापि हस्ते वस्त्रे च मूर्धनि । कार्यं प्रसादनं नार्या अपराधं समीक्षता ॥ परिभवेन प्रतिकारबुद्ध्या । सभयं पूर्वाननुभवात् । अत्र किं स्यादित्युत्तरंगि कम्पवत् । आतङ्काइनधमायमानमुष्णमिव चित्तं यस्यास्ताम् । यद्वा । उत्तरंग्युन्नतकल्लोलम् । धमधमायमानं सकम्पम् । कल्लोलश्च कम्पस्योत्तरोत्तरप्रकर्षः । उत्त्रासयति चकितां करोति ।

(क) शीघ्रं त्यक्तवस्त्रा च सा प्रवृत्ता गमनोद्यता च । कर्मधारयः । पलकितत्वेन च दण्डायमानता । व्यपवारितोऽपिहितः । उद्गमो

पडिजलवादिणिं पि अच्चाअरपअत्तणिव्वत्तिअमुहुत्तकोवो-वराअदुक्खपरुसीकिदहिअअं सिणिद्धपुणरुत्तपल्लत्थलोअ-णविभाविदासेसचित्तसारं उवहसदि (१)। (क)

दिउणबाहुदण्डावेढणणिअन्तिदं पिअसहि परूढसद्दू-लकठोरकररुहोरम्फविअडपत्तावलीपसाहणुत्ताणवच्छत्थ-लणिट्ठुरणिवेसणसिहं कदुअ सावेअविहुअमत्थआविद्धकब-

(१) सहसा विसर्जितांशुकामवष्टभ्य तत्क्षणकठोरकमलदण्डा-यमानबाहुबन्धनापवारितपयोधरोद्गमां विघटमानविकटमेखलावलय-संदानितपीवरोरुप्रतिषिद्धविप्रतीपगमनां प्रतिकूलवादिनीमत्यादर-प्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःखपरुषीकृतहृदयां स्निग्धपुनरुक्तपर्य-स्तलोचनविभाविताशेषचित्तसारामुपहसति ।

विस्तारः । आलिङ्गनविघटनं कृत्वापसरणे कुचालोकनादिकं नायकस्य जायते । नायिका च तदा संवरणाय न प्रभवतीति भावः । तर्हि पलायते किमिति नेत्यत आह । विघटमानेति । विघटमानालिङ्ग-नजरोमाञ्चसंचयात् । विकटा स्वस्थानचलनात् । संदानं बन्धनम् । तत्रापिताभ्यामित्यर्थः । प्रतीपं प्रतिकूलम् । गमनाभावे पुनःकान्ता-वरुद्धतया हं हमित्यादिनिषेधमाह प्रतिकूलेति । उपरागः संबन्धः । निषिद्धपुनरुक्ते पुनःपुनर्निषेधवाक्ये पर्यस्तं निषेधविपरीतं स्निग्धत्वा-दिधर्मत्वात् । यद्वा । पर्यस्तं विभ्रान्तम् । चित्तसारः संभोगेच्छा-परता । उपहासः परिहासः । स च हृदि संभोगेच्छा वाचि परं ते निषेध इत्येवंरूप इत्यर्थः । स्निग्धपुनरुक्तेति पाठे स्निग्धपुनरुक्तं पुनःपुनः स्निग्धं पर्यस्तं क्षिप्तं लोचनमित्यर्थः ।

(ख) आवेष्टनमावेष्टः । तेन गाढालिङ्गनमुक्तम् । कररुहो नखः । ओरम्फ आक्रमणम् । प्रौढव्याघ्रनखवत् कठोरं यत् कररुहमिति भावः । निष्ठुरं निबिडम् । निवेशोऽपर्णम् । निःसहां वचनाद्यच-

दीघिहिदकरपरिग्गहोवग्गिदुसमिदचिव्वलमुहावअवसच्छ-न्दविप्पासविअड्ढवअणकमलो वामगण्डमूलोवरिणिहिदप-प्फुरन्तपुच्चिदाहरसमुग्गअमणहरप्फंसणिब्भवब्भमाविद-सरीरसोहं उल्लसिदसज्झसाणन्दविसमसंभमवलणमोहम-न्थरअमन्तलोअणं किं पि दुव्विणीदसाहसाणुरूववअसाओ मं अणब्भत्थणीअं अब्भत्थेदि (१)। (ख)

---

(१) द्विगुणबाहुदण्डावेष्टननियन्त्रितां प्रियसखि प्रौढशार्दूलकठोरकररुहाक्रमणविकटपत्रावलीप्रसाधनोत्तानवक्षःस्थलनिरनिवेशनिःसहां कृत्वा सावेगविधुतमस्तकाविद्धकबरीनिहितकरपरिग्रहपुञ्जीकृतोन्नामितनिश्चलसुखावयवस्वच्छन्दविकासविदग्धवदनकमलो वामगण्डमूलोपरिनिहितप्रस्फुरत्पुञ्जिताधरसमुद्गतमनोहरस्पर्शनिर्भरोल्लासितशरीरशोभामुल्लसितसाध्वसानन्दविषमसंभ्रमवलनमोहमन्थरभ्रमल्लोचनां किमपि दुर्विनीतसाहसानुरूपव्यवसायो मामनभ्यर्थनीयमभ्यर्थयति।

---

माम्। अत्र कररुहाक्रमणमेव पत्रावलीति रूपकम्। चुम्बनमाह। सावेगेति। ओवग्गिदं पुञ्जीकृतं लम्बितमित्यर्थः। सुखावयवा ललाटादयः। विकासितं चुम्बनादिनियुक्तम्। वदनस्य वैदग्ध्यं च चुम्बनचातुर्यात्। इह कन्यायास्त्रिविधं चुम्बनम्। ललितकस्फुरितकघटितकभेदात्। तत्र ललितकमाह। प्रस्फुरितेति। घटितकमाह। पुञ्जितं योजितम्। ईषत्परिगृह्य मीलितनेत्रा जिह्वाग्रेण घटयति करेण नेत्रे तस्याच्छादयतीति घटितकम्। स्फुरितकं तु प्रागेवोक्तम्। समुद्गम उद्रेकः। एवं च सर्वाङ्गीणनायकस्पर्शात्प्रमोदमाह मनोहरेति उद्धर्षितसमुद्गतरोमाञ्चम्। नायिकाया वामाङ्गे सकलोपचारव्यवस्थापनाद्वामकपोलेत्युक्तम्। वर्धमानां सुरतावस्थामाह। समुल्लसितेति। समुल्लसिताभ्यां साध्वसानन्दाभ्यां विषमो यः संभ्रमः संवेगस्तत्र मोहेन

पिअसहि ! समक्खं अ सव्वं अणुभविअ झत्ति (ग) पडिबुद्धा सुसारससंणिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं त्ति (१)।

लव। विहस्य। सहि मदअन्तिए! फुडं आचक्खेहि। अध तस्सिं अवसरे सिणिद्धविब्भमुम्मीसहासविअसन्तबुद्धरक्खिदालोअणणिरूविदं परिअणादो गोवणिज्जं दे णिअम्बस्समूलं सअणिज्जप्पच्छदवडावारिदं भोदि किं ण वेत्ति (२)। (घ)

मद। अइ असंबद्धपरिहाससीले! अवेहि (३)।

---

(१) प्रियसखि! समक्षं च सर्वमनुभूय झटिति प्रतिबुद्धा शून्यारण्यसंनिभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति।

(२) सखि मदयन्तिके! स्फुटमाख्याहि। अथ तस्मिन्नवसरे स्निग्धविभ्रमोन्मिश्रहासविकसद्बुद्धरक्षितालोचननिरूपितं परिजनाद्गोपनीयं ते नितम्बस्य मूलं शयनीयप्रच्छदपटापवारितं भवति किं न वेति।

(३) अयि असंबद्धपरिहासशीले! अपेहि।

---

किंकर्तव्यतामूढतया मन्थरत्वमेकतरपक्षाव्यवस्थितिः। साध्वसेन प्रवृत्तिरानन्देन च निवृत्तिरित्याशयः। अनभ्यर्थनीयं सुरतादिकम्।

(ग) ततो झटितीति जागरावस्थाकथनम्।

(घ) अत्र मचूडकं वियावीति ख्यातम्। निःसहतनुत्वेनानममचूडकोऽपि धातुत्यागप्रश्नवैदग्धीयमिति भावः। पुष्पवतीशङ्कया परिजनकार्यनिवारणाय गोपनम्।

बुद्ध। सहि मदअन्तिए! मालदीपिअसही क्खु ईदि-साइं ज्जेव्व मन्तिदुं जाणादि (१)।

मद। सहि मा क्खु एव्वं मालदिं उवहस (२)।

बुद्ध। सहि मदअन्तिए! भणिस्सं दाणिं दे किं वि जइ ण वीसासभङ्गं करेसि (३)। (ङ)

मद। सहि किं पुणो वि पणअभङ्गेण कदावराहो (च) अअं जणो जेण एव्वं मन्तेसि। पिअसहि तुमं लवङ्गिआए सह संपदं मे हिअअं (४)।

बुद्ध। जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि तदो किं तुए कादव्वं (५)। (छ)

---

(१) सखि मदयन्तिके! मालतीप्रियसखी खल्वीदृशान्येव मन्त्रयितुं जानाति।

(२) सखि मा खल्वेवं मालतीमुपहस।

(३) सखि मदयन्तिके! भणिष्यामीदानीं ते किमपि यदि न विश्वासभङ्गं करोषि।

(४) सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसि। प्रियसखि! त्वं लवङ्गिकया सह सांप्रतं मे हृदयम्।

(५) यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति ततः किं त्वया कर्तव्यम्।

---

(ङ) अत्र पृच्छामि यदि गूढतं रहस्यं कथयसीति भावः।

(च) अत्र कृतापराध इत्यत्र गिरस्खलनगतिः।

(छ) तत्रात्मसमर्पणमेव त्वया कार्यमिति भावः।

मद । एक्केक्कावअवणीसङ्गलम्मणिच्चले चिरं लोअणे णिव्वावइस्सं (१) । (ज)

बुद्ध । अध सा वि मम्महवलक्कारिदो कन्दप्पजणणिं तुमं रुक्मिणिं विअ पुरिसोत्तमो सअंगाहसहधम्मचारिणिं करेदि तदो का पडिवत्ती (२) । (झ)

मद । निःश्वस्य । कीस मं एत्तिअं आसासेसि (३) । (ञ)

बुद्ध । सहि ! कहेहि (४) ।

मद । कधिदं ज्जेव्व हिअआवेअसूअएहिं दीहणीसासेहिं (५) ।

---

(१) एकैकावयवनिःसङ्गलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि ।

(२) अथ सोऽपि मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसहधर्मचारिणीं करोति ततः का प्रतिपत्तिः ।

(३) किं मामेतावदाश्वासयसि ।

(४) सखि ! कथय ।

(५) कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः ।

---

(ज) अत्र तद्दर्शनामृतसेकशीतला भविष्यामीति भावः । निःसङ्गः सर्वाङ्गव्यापी ।

( झ ) अत्राथशब्दो यद्यर्थे । बलात्कारितो बलात्कारेण प्रवर्तितः । रुक्मिणी काममाता प्रद्युम्नमातृत्वात् । पक्षे कामावस्थाकारिणीम् । पुरुषोत्तमः कृष्णः । अथ च पुरुषेषूत्तमो मकरन्दः । स्वयंग्राहेण गान्धर्वेण । सधर्मचारिणी भार्या । प्रवृत्तिर्वार्ता ।

( ञ ) इह ममाभाग्येन किं स्यादिति निःश्वास इति भावः ।

मद । सहि ! का अहं इमस्स तेण ज्जेव्व अत्ताणअं पणीकदुअ दुट्ठसद्दूलकवलादो कड्ढिअस्स तस्स ज्जेव्व केरअस्स अत्तणो सरीरस्स (१)। (ट)

लव । सरिसं महाणुभावदाए (२)। (ठ)

बुद्ध । सुमरेहि एदं वअणं (३)। (ड)

मद । कधं दुदीअपहरणाडिआविच्छेदपडहो ताडीअदि (ढ)। ता जाव णन्दणं णिब्भच्छिअ से पादपडणं अब्भत्थिअ मालदीए उवरि अणुजलइस्सं (४)। इत्युत्थाय गन्तुमिच्छति ।

---

(१) सखि ! काहमस्य तेनैवात्मानं पणीकृत्य दुष्टशार्दूलकवलादाकृष्टस्य तस्यैव कृत्यकरस्यात्मनः शरीरस्य ।

(२) सदृशं महानुभावतायाः ।

(३) स्मरैतद्वचनम् ।

(४) कथं द्वितीयप्रहरनाडिकाविच्छेदपटहस्ताड्यते । तद्यावन्नन्दनं निर्भर्त्स्य तस्य पादपतनमभ्यर्थ्य मालत्या उपर्यनुज्वलयिष्यामि ।

---

(ट) अत्र काहमात्मशरीरस्य किं तु न कापि । मकरन्दस्यैव मच्छरीरमिति भावः । केरकशब्दः कृत्यकरवाची । पणीकृत्य मूल्यतया यो व्यवस्थाप्यते स कृत्यकरः ।

(ठ) अत्र महानुभावता कृतज्ञता ।

(ड) सांप्रतमेवैतद्वचनस्योपयोगं स्थिरीकृत्याह । स्मरिष्यसीदं वचनम् ।

(ढ) अत्र नाडी कालेऽपि षट्क्षण इत्यमरः । षट्क्षणावच्छिन्नः कालो नाडी । द्वितीया नाडी द्वादशक्षणात्मकः कालः । मदयन्तिकामकरन्दसंघट्टनविषयस्य समाप्तिपटहोऽयमित्यर्थः । यद्वा । द्वितीयनाडी

मकरन्दो मुखमुद्घाट्य हस्तेन रुणद्धि । (ग)

मद । सहि मालदि ! विप्पबुद्धासि । विलोक्य सहर्षं माधवम् । अम्मो (त) अस्सं ज्जेव्व किं पि एदं वट्टदि (१) ।

मक । रम्भोरु ! संहर भयं चमते विसोढु-

मुत्कम्पितं स्तनभरस्य न मध्यभागः ।

इत्थं त्वयैव कथितप्रणयप्रसादः

संकल्पनिर्वृतिषु संस्तुत एष दासः ॥ (थ)

बुद्धरक्षिता मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य ।

प्रेयान्मनोरथसहस्रवृतः स एष

सुप्तप्रमत्तजनमेतदमात्यवेश्म ।

---

(१) सखि मालति ! विप्रबुद्धासि । अम्मो अन्यदेव किमप्ये-तद्वर्तते ।

---

द्वितीयभगिनी मालती तया सह विच्छेदो वियोगो यथोपक्रान्तसंबन्ध-विघटनमित्यर्थः ।

( ग ) रुणद्धि मदयन्तिकामित्यर्थः ।

( त ) अम्मो इति स्वच्छन्दप्रलपितस्याभिप्रायानुतापे ।

( थ ) रम्भोर्वादि । हे रम्भोरु ! भयं त्यज । यतस्तव स्तनभार-सोत्कम्पं सोढुं मध्यभागो न क्षमते समर्थो न भवति । अतिकृशो मध्यदेशः कुचयोर्भयकम्पस्य भारं न सहत इति भावः । भयमिहा-परिचितदर्शनात् । विकारमिति पाठे तव सकम्पस्य स्तनभारस्य विकारं मध्यभागो न क्षमते । संकल्पसुखेष्वनेनोक्तप्रकारेण त्वयैव कथित-प्रार्थनासंपत्तिरेषोऽहं संस्तुतः परिचितो दासो विधेयः । प्रणयः प्रेम तद्रूपो वा प्रसादः ।

( द ) प्रेयानित्यादि । प्रेयान् प्रियतमो मनोरथसहस्रैर्वृतः प्रार्थितो यस्त्वया संकल्पादिष्वनुभूतः स एष सोऽयमित्यर्थ इति प्राग-

प्रौढं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥ (८)

मद। सहि बुद्धरक्खिदे! कहिं उण अम्हेहिं गन्तव्वं (१)। (ध)

बुद्ध। जहिं ज्जेव मालदी (२)।

मद। किं णिव्वुत्तसाहसा मालदी (३)। (न)

बुद्ध। अध इं। अण्णं च। तुमं भणासि का अहं इमस्स (४)।

---

(१) सखि बुद्धरक्षिते! क पुनरस्माभिर्गन्तव्यम्।

(२) यत्रैव मालती।

(३) किं निर्वृत्तसाहसा मालती।

(४) अथ किम्। अन्यच्च। त्वं भणसि काहमस्य।

---

नुरागोद्भेदः। यतः कृतज्ञतया पूर्वोपकारस्य स्मरणेनैव भद्रमभीष्टं विवाहरूपं कुरु। तत्र सामग्रीमाह। एतदसात्युत्कटं केचित् सुप्ताः केचित्प्रमत्ता जना यत्र तादृशम्। गाढं तमः। अन्धमिति पाठेऽन्धं करोतीत्यन्धम्। तम इत्यर्थः। उत्क्षिप्तमुत्तोलितमत एव मूकमशब्दं मणिप्रधानं नूपुरं यथा तथैहि यामः। विवाहसंपादनायेति भावः। तत्र सुप्तादिना गृहलोकानामदर्शनं प्रौढान्धकारतया बहिर्लोकानामदर्शनम्। नूपुरस्याप्यशब्दतया परवितर्काभाव इति गमनमप्रत्यूहं स्यादिति दर्शितम्। प्रमत्त इति रदाभ्यां निष्ठातो न इति नत्वं न भवति। न ध्याख्यापॄमूर्छिमदामिति निषेधात्।

(ध) अत्रानेन मकरन्दसंमतिमाह। यत्रैव मालती। वर्तत इति शेषः। एतेनागामिनोऽङ्कस्यावतारः सूचितः।

(न) अत्र पितृनैरपेक्ष्येण मालत्यात्मनिवेदनं यदि तदा ममापि तत्स्यादित्याशयः।

इत्यादि पठति। मदयन्तिकाम्भूषि पातयति।

बुद्ध। महाभाय! दिण्णं क्खु अत्ताणं पिअसहीए पडिवज्जस्स (१)। (प)

मक। अद्योर्जितं विजितमेव मया किमन्य-
द्द्योत्सव: फलवती मम यौवनस्य।
यस्य प्रसादसुसुखेन समुद्धृतेयं
देवेन बान्धवधुरा मकरध्वजेन॥ (फ)

तदनेन पक्षद्वारेण निर्गत्य साधयाम:। निष्क्रान्तं परिक्रामन्ति।

मक। अहो! निशीथनि:सञ्चाररमणीयता राजमार्गस्य (ब)। तथा हि संप्रति

---

(१) महाभाग! दत्तं खल्वात्मानं प्रियसख्या प्रतिपद्यस्व।

---

(प) अत्र च तथा प्रागेव सम्यगर्थं त्वया मकरन्दायात्मा दत्त:। इदानीं कुतस्तेऽपाय इत्याशय:। स्पष्टहृत्यागदु:खादश्रुपातेन सूचितात्मदानां मदयन्तिकामाह। अत्र तुभ्यमिति शेष:।

(फ) अद्येत्यादि। अद्योर्जितं सातिशयं कृत्वा मया विजितम्। सर्वकार्यसंपादनात्। सफलस्य मम यौवनस्याद्योत्सव:। अत एवान्यत् किम्। अपि तु न किमपि। साध्यमस्तीति शेष:। यस्य मम बान्धवधुरा मित्रकृत्यं कामदेवेन सम्यग्धृता। प्रसन्नतया सुसुखेन। एवकारोऽप्यत एव। यदि माधवसंगतेयं स्यात्तदा मया सर्वाकारं जितं न स्यादिति भाव:। कन्यावरणे बान्धवा एव भवन्ति। यदाह। कन्याया वरणे माता पितरौ बान्धवा अपि॥ पक्षद्वारं खड्किका।

(ब) अर्धरात्रनिशीथौ द्वावित्यमर:।

प्रासादानामुपरि वलभीतुङ्गवातायनेषु
भ्रान्त्वावृत्तः परिणतसुरागन्धसंस्कारगर्भः ।
माल्यामोदी मुहुरुपचितस्फारकर्पूरवासो
वायुर्यूनामभिनववधूसन्निधानं व्यनक्ति ॥ (भ)

इति निष्क्रान्ताः सर्वे ।

नन्दनविप्रलम्भो नाम सप्तमोऽङ्कः । (म)

---

(भ) प्रासादानामिति । अयं वायुस्तरुणानां नूतनस्त्रीसमागमं प्रकाशयति । अनेन मदयन्तिकाप्रोत्साहनमुक्तम् । कीदृशः ? उक्तस्थानेषु भ्रान्त्वावृत्तः । आदौ भ्रान्तः पुनरावृत्त आयातः । अनेन मन्दत्वम् । भ्रान्त्या भ्रमणेनायात इति वा । परिणतपुष्परसगन्धसम्बन्धः । पुष्पस्रजा हृष्टः सुरभिर्वा । मुहुरुपचितोऽत्यर्थं प्रवृद्धः । स्फारो दीर्घतया दृढतरः । कर्पूरसंपर्की च । पश्चात् कर्मधारयः । यद्वा कर्पूरविशेषणमेव द्वयम् । एभिरतिसौगन्ध्ये ध्वनिते यतोऽतिमनोहरोऽत एव स्त्रीसांनिध्यकर इति भावः । उपहितस्फारेति पाठेऽपि कर्मधारयः ।

(म) प्रागोष्ट यं रत्नधरो द्विजेशो द्विजेशवन्द्या दमयन्तिकापि । जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमन्मनोहारिणि सप्तमोऽयम् ॥

इति सप्तमोऽङ्कः ।

# अष्टमोऽङ्कः।

ततः प्रविशत्यवलोकिता। (क)

अव। वन्दिदा मए णन्दणावासपडिणिउत्ता भअवदी।
ता जाव मालदीमाहवसआसं गच्छामि। परिक्रम्य। एदे
दे णिव्वत्तिदगिम्हदिअहावसाणमज्जणा (ख) दीहिआत-
डसिलादलं अलंकरन्ति मालदीमाहवा। ता जाव उव-
सप्पिस्सं (१)। निष्क्रान्ता। प्रवेशकः।

ततः प्रविशत उपविष्टौ मालतीमाधवाववलोकिता च।

माध। सानन्दम्। वर्तते हि मन्मथप्रौढसुहृदो निशी-
थस्य यौवनश्रीः। तथाहि।

---

(१) वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती। तद्याव-
न्मालतीमाधवसकाशं गच्छामि। एतौ तौ निर्वर्तितग्रीष्मदिवसावसा-
नमज्जनौ दीर्घिकातटशिलातलमलंकुरुतो मालतीमाधवौ। तद्याव-
दुपसर्प्स्यामि।

---

(क) तदेनं मदयन्तिकामादाय मकरन्दे माधवान्तिकं चलिते माल-
तीमादाय निर्गतस्य माधवस्य कामन्दकीगृहस्थितस्य वार्ताप्रस्तावनाया-
वलोकिताप्रवेशः। सूचनं च पूर्वाङ्के। जहिं क्खु मालतीति
वचनेन मालतीमाधवयोरेकत्र वासः सूचितः। तत्र च यद्यपि तयो-
रेव प्रवेशोऽर्हति तथापि कन्याप्रलोभने सख्यानुकूल्ये तत्प्रवेश इति
पूर्वाङ्के कृतमेव।

( ख ) अत्र सरो वापी तु दीर्घिकेत्यमरः।

दलयति परिशुष्यत्प्रौढतालीविपाण्डु-
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः।
वियति पवनवेगादुन्मुखः कैतकीनां
प्रचलित इव सान्द्रो माकरन्दः परागः॥ (ग)

स्वगतम्। तत् कथं वामशीलां मालतीमुपावर्तये। भवत्वेवं तावत्। प्रकाशम्। प्रिये मालति! प्रत्ययसायन्तनस्नानसविशेषशीतलाम्त्वभवतीं निदाघशान्तये विश्रापयामि। तत्किमित्यद्यानिमित्तमन्यथैव संभावयसि।

निश्च्योतन्ते सुतनु कबरीबिन्दवो यावदेते
यावन्मध्यः स्तनमुकुलयोर्नार्द्रभावं जहाति।
यावत्सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावद् गाढं वितर सकृदप्यङ्कपालीं प्रसीद॥ (घ)

---

(ग) दलयतीत्यादि। अयं चान्द्र उद्योत उद्गच्छन्नेव शुष्यत्प्रगल्भतालीपत्त्रवत्पाण्डुरस्तिमिरसंघं खण्डयति। प्रथनतो व्योम्नि वायुवेगेनोर्ध्वसखीभूय प्रचलितो घनः कैतकीपराग इव। इन्दोरयमैन्दवः। मन्दमन्दमिति प्रचलनक्रियाविशेषणम्। उपवर्तये संमुखीकरोमि।

(घ) निश्च्योतन्त इत्यादि। हे सुशरीरे! यावदेते कबरीजलबिन्दवः स्रवन्ति यावत्कुचकलिकयोर्मध्य आर्द्रतां न त्यजति यावच्च निबिडव्यापि रोमाञ्चं प्रकाशयन्ती काययष्टिस्तावद्गाढं यथा तथा सकृदपि मेऽङ्कपालिं क्रोडप्रदेशं देहि। अतः प्रसीद। तदिह निदाघतापशान्तये जलबिन्दवः। कुचार्द्रता पुलकोद्गमश्च सर्वाङ्गशैत्यापत्तये। यावत्सायच्छब्दावधारणार्थौ। सान्द्रेत्यादिपदे कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टो लघुत्वादिति न्यायेन बहुव्रीहिसंभवे कथं मत्वर्थीय इति

अयि निरनुरोधे !

जीवयन्निव ससूढसाध्वसस्वेदबिन्दुरधिककण्ठमर्प्यताम् ।

बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ (ङ)

अथवा दूरे तावदेतत् । कथमालापसंविभागस्याप्यभाजनमयं जनो भवत्याः ।

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितं तु परिरभ्य वपुर्न नाम ।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किन्नरकण्ठि ! वाचम् ॥ (च)

---

न देश्यम् । एतद्वचनस्य प्रायिकत्वात् । तथैव नानाप्रयोगदर्शनादिति दिक् । पालिः पङ्क्तिप्रदेशयोरिति शाश्वतः ।

( ङ ) जीवयन्नित्यादि । बाहुः कण्ठेऽर्प्यताम् । कीदृशः । समूढं सद्योजातं पुञ्जितं वा यत्साध्वसं भयं तेन स्वेदबिन्दुर्यत्र सः । अननुभूततया भयम् । चान्द्रकरस्पृष्टोऽत एव स्यन्दी चरन्वालचन्द्रकान्तहारस्तत्तुल्यः । घर्मविघातकत्वात् । अत एव सौहित्याज्जीवयन्निव । समूढः पुञ्जिते भुग्ने सद्योजाते सुनिश्चित इति विश्वः । ससाध्वसस्वेदेति पाठे ससाध्वसो भयवान् यः श्रम इत्यर्थः । संविभागो भेदः । अभाजनमस्थानम् । अजहल्लिङ्गोऽयम् । अयं जन इत्यनेन दीनतोद्भावनेनानुकूल्यं स्वीयमाह । भवत्या इत्यनेन नायिकोत्तेजनम् ।

( च ) दग्धमित्यादि । चिरं दक्षिणवायुचन्द्रकरैस्तापितं मे वपुरालिङ्ग्य न चेन्निर्वापितमतप्तीकृतं तदा समदकोकिलरवपीडिता मे श्रुतिः कर्णोऽद्येदानीं हृद्यां वाचं पिबतु । सादरं शृणोत्वित्यर्थः । अत एव वाङ्माधुर्यद्योतनाय किंनरकण्ठि इति संबोधनम् । किंनरस्येव कण्ठः स्वरो यस्यास्तादृशि हे । स्वरे कण्ठः प्रकीर्तित इति रत्नकोशः । अङ्गकण्ठगात्रेभ्य उपसंख्यानान्ङीष् । पूर्वार्धे तुशब्दो यद्यर्थः ।

अथ। उपसृत्य। अइ अणिव्वहणसीले! जं दाणिं मुहुत्तंतरिदमाहवा दुम्मणाअन्त मम पुरदो भणासि चिराअदि अज्जउत्तो अवि णाम केच्चिरेण पेक्खिस्सं जेण विच्छड्डिआसेससज्झसा विसुमरिदणिमेसविग्घं आलोअन्ती एव्वं भणिस्सं विउणवेढपरिरम्भेण संभावअसि त्ति तस्स दे अअं परिणामो (१)। मालती साभ्यसूयमिव तां पश्यति। (छ)

माध। स्वगतम्। अहो! भगवतीप्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यम् अक्षयश्च सुभाषितरत्नकोषः। प्रकाशम्। प्रिये! सत्यमवलोकिता वदति। (ज)

(१) अयि अनिर्वाहणशीले! यदिदानीं मुहूर्तान्तरितमाधवा दुर्मनायमाना मम पुरतो भणसि चिरयत्यार्यपुत्रोऽपि नाम कियच्चिरेण प्रेक्षिष्ये येन विच्छर्दिताशेषसाध्वसा विस्मृतनिमेषविघ्नमालोकयन्त्येवं

द्वितीये पुनरर्थः। यदि नालिङ्गनं देयं तदा मधुरलापेति भावः। नाम संभावनायाम्। आलिङ्गनादानं संभाव्यते यतः। त्वयि वदन्त्यां कलकोकिलरवोऽपि कर्णकटुरित्यनुरागाधिक्यमात्मन उक्तम्। इच्छाद्यपदमिदानीमर्थे। अन्यथा निशीथवर्णनेऽप्याक्षिन्नहनीत्यस्यानर्थक्यापत्तेः। एवं चाद्याक्षिन्नहनीति व्युत्पत्तिः प्रायिका।

(छ) अत्र यदिदानीमिति वाक्यभूषायाम्। भणनस्वरूपमेवाह चिरयतीति संभावयेरितीत्यन्तम्। सांप्रतमिति शिरश्चालनकाको। चिरयति विलम्बते। विच्छर्दितं त्यक्तम्। विघ्नमिति क्रियाविशेषणम्। परिणाम इति। या त्वं चिरविरहमसहमाना माधवार्थिनी सा कथमधुना तव वाग्यमनमालम्ब्य इति भावः। असूया गुणेषु दोषारोपः। सा चेह रहस्यनिवेदनादिति भावः।

(ज) सर्वतोमुखं सर्वतोगामि। सुभाषितान्येव रत्नानि तेषां

मालती मूर्धानं चालयति। (झ)

माध। शापितासि (ञ) मम लवङ्गिकावलोकितयोश्च जीवितेन यदि वाचा न कथयसि।

माल। णाहं किं वि जाणामि (१)। इत्यर्धोक्ते लज्जां नाटयति।

माध। अहो! अनवसितार्थमन्थरस्य वचसश्चारुता। सहसा निरूप्य। अवलोकिते! किमेतत्। (ट)

बाष्पाम्भसा मृगदृशो विमलः कपोलः
प्रक्षाल्यते सपदि राजत एष यस्मिन्।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्डः॥ (ठ)

---

भविष्यामि द्विगुणावेष्टपरिरम्भेण संभावयेरिति तस्य तेऽयं परिणामः।

(१) नाहं किमपि जानामि।

---

कोषः पात्रम्। कोषोऽस्त्री कुड्मले पात्र इति मेदिनीकारः। प्रियेत्यादि प्रश्नवाक्यम्।

(झ) मूर्धकम्प उक्तनिषेधाय।

(ञ) शापितासि शपथोक्तासि।

(ट) अनवसितोऽनिश्चितः। किमेतदिति वक्ष्यमाणवाक्यार्थस्य प्रश्नः।

(ठ) वाष्पेत्यादि। हरिणाक्ष्या एष कपोलो बाष्पजलेन सपदि प्रक्षाल्यते अत एव विमलः। किमेतत्। यत्र चन्द्रो राजते। कीदृक्। गण्डूषेण मुखपूरणेन पातव्यं दीप्त्यमृतं पातुमिच्छुरिव निहितः किरण एव मृणालदण्डो येन सः। किरणरूपमृणालनति-

अव । सहि ! किं दाणिं उच्छलिदबाह्णुप्पीलमन्थरं रोदिसि (१) । (ड)

माल । सहि ! केच्चिरं पिअसहीए लवङ्गिआए असंणिधाणदुःखं अणुभविस्सं । पउत्तिलम्भो वि मे दुल्लहो (२) । (ढ)

माध । अवलोकिते ! किं नाम ।

अव । तुह ज्जेव्व सवधोवण्णासेण एसा लवङ्गिअं संभरिअ ताए पउत्तिणिमित्तं उत्तम्मदि (३) ।

माध । नन्विदानीमेव तत्र मया कलहंसकः प्रेषितः प्रच्छन्नमुपगत्य नन्दनावासप्रवृत्तिमुपलभस्वेति । साशंसम् । अवलोकिते ! अपि नाम बुद्धरक्षिताप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात् ।

---

(१) सखि ! किमिदानीमुच्छलितबाष्पोत्पीडमन्थरं रोदिषि ।

(२) सखि ! कियच्चिरं प्रियसख्या लवङ्गिकाया असंनिधानदुः-खमनुभविष्यामि । प्रवृत्तिलाभोऽपि मे दुर्लभः ।

(३) तवैव शपथोपन्यासेनैषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्ति-निमित्तमुत्ताम्यति ।

---

कया पातुमिच्छतीत्यर्थः । अनेन कपोलस्य चन्द्राधिककान्तिमत्त्वमुक्तम् । गण्डूषो मुखपूर्तौ स्यादिति शाश्वतः ।

( ड ) अत्रोच्छलितो बहुलीभवन् । मन्थरमिति क्रियाविशेष-णम् ।

( ढ ) अत्रासंनिधानदुःखमसंगमेन जनितक्लेशम् । प्रवृत्तिलम्भो वार्ताप्राप्तिः । वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः ।

मक । कुदो संदेहो महाणुभाअस्स । महाभाअ ! पढमं ज्जेव्व सद्दूलणहरालंकिदस्स मअरन्दस्स मोहविराममङ्गलं णिवेदअन्तीए भअवदीए णिउत्तेण भवदा मालदीए जीविदेण समं पसादीकिदं हिअअं । जइ को वि तुमं संपदं मदअन्तिआलम्भेण वड्ढावेदि तदा किं दाणिं तस्स पारितोसिअं करेसि त्ति (१) । (ण)

माध । अनुयोक्तव्यमनुयुक्तोऽस्मि । हृदयमवलोक्य । इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः कामकाननालंकारस्य लक्ष्मीवतः केसरतरोः प्रसवमाला । (त)

प्रेम्णा मदुग्रथितेति या प्रियसखीहस्तोपनीतानया
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन संभाविता ।
संप्राप्ते त्वथ पाणिपीडनविधौ मां प्रत्यपेताश्रया
या मय्येव लवङ्गिकेत्यवगते सर्वस्वदायीकृता ॥ (थ)

---

(१) कुतः संदेहो महानुभावस्य । महाभाग ! प्रथममेव शार्दूलनखरालंकृतस्य मकरन्दस्य मोहविराममङ्गलं निवेदयन्त्यै भगवत्या नियुक्तेन भवता मालत्यै जीवितेन समं प्रसादीकृतं हृदयम् । यदि कोऽपि त्वां सांप्रतं मदयन्तिकालाभेन वर्धापयति तदा किमिदानीं तस्य पारितोषिकं करोषीति ।

---

(ण) अत्र निवेदयन्त्या मालत्या इत्यन्वयः । मालत्या इति षष्ठ्यन्तम् । मालत्याः कृत इत्यर्थः ।

(त) अनुयुक्तः पृष्टः । स्वकीयहृदयालोकनमागामिश्लोकस्वरसद्योतनाय । प्रसवः पुष्पम् ।

(थ) प्रेम्णेत्यादि । या माला प्रियसख्या लवङ्गिकया हस्तेनोपनीता मदुग्रथितेति हेतोः प्रेम्णानया मालत्या पीनकुचघटकुड्-

लव । सहि मालदि ! वल्लहा क्खु दे इअं वउलमाला तदो अवहिदा भव मा दाणिं एसा सहसज्जेव्व परहत्थ-गदा भविस्सदि त्ति (१) । (द)

माल । पिअं पिअसही मे उवदिसदि (२) । (ध)

लव । कधं पदसद्दो विअ (३) । (न)

माध । नेपथ्याभिमुखमवलोक्य । अये ! कलहंसकः प्राप्तः ।

माल । दिट्ठिआ वड्ढसि मदअन्तिआलम्भेण (४) । (प)

(१) सखि मालति ! वल्लभा खलु त इयं वकुलमाला ततोऽवहिता भव मेदानीमेषा सहसैव परहस्तगता भविष्यतीति ।

(२) प्रियं प्रियसखी मे उपदिशति ।

(३) कथं पदशब्द इव ।

(४) दिष्ट्या वर्धसे मदयन्तिकालाभेन ।

लक्ष्य भरो यत्र तेन क्रोड़ेन सह संभाविता संभावनां नीता ततो नन्दनेन सह विवाहे संप्राप्ते मां प्रति निरस्तप्रत्याशया लवङ्गिकेय-मित्यधिगते मय्येव यया सर्वस्वदानं कृतम् । अनेन पूर्वानुरागकथनेन नायिकाविस्रम्भ उक्तः । विस्तारः परिणाहः । कुम्भपदेनोन्नतता । कुड्मलपदेन मृदुता । भरशब्देन मौढिरुक्ता । पाणिपीड़नं विवाहः । दीयत इति दायः ।

(द) अत्र तेनैव मकरन्दस्य मदयन्तिकालाभः कथनीयस्तेनैवेयं प्राप्या । अतस्त्वमेव तं कथयेति गुप्त्या माधवेन सहात्मानं संभावयेत्या-शयः ।

(ध) तथा चाहमेव कथयामीति भावः ।

(न) अत्र श्रूयत इति भावः ।

(प) अत्र मकरन्दस्य मदयन्तिकाविवाहेनेत्यर्थः । इदं वचनं मालत्या माधवं प्रति ।

माध । सहर्षं परिष्वज्य । प्रियं प्रियं नः (फ) । आत्मनः कण्ठादवतार्य वकुलमालां ददाति ।

अव । णिव्वूढो क्खु भअवदीए संभावणाभारो बुद्ध-रक्खिदाए (१) । (ब)

माल । सहर्षम् । अम्महे पिअसही लवङ्गिआ वि दीसइ (२) । (भ) उत्तिष्ठति ।

प्रविश्य संभ्रान्ताः कलहंसकमदयन्तिकाबुद्धरक्षितालवङ्गिकाः ।

लव । परित्ताअदु परित्ताअदु महाभाओ । अद्धमग्गे क्खु णअररक्खिपुरुसाभिओओ मअरन्दस्स जादो तदो तक्कालमिलिदेण कलहंसएण सहिदा अह्मे अणुप्पेसिदाओ त्ति (३) । (म)

---

(१) निर्व्यूढः खलु भगवत्याः संभावनाभारो बुद्धरक्षितया ।

(२) अम्महे प्रियसखी लवङ्गिकापि दृश्यते ।

(३) परित्रायतां परित्रायतां महाभागः । अर्द्धमार्गे खलु नगर-रक्षिपुरुषाभियोगो मकरन्दस्य जातस्ततस्तत्कालमिलितेन कलहंसकेन सहिता वयमनुप्रेषिता इति ।

---

(फ) प्रियं न इति । आलापलाभेनातिप्रियमित्यर्थः ।

(ब) अत्र निर्व्यूढो निर्वाहं नीतः । खलु निश्चये । संभावना प्रतिष्ठा ।

(भ) अम्महे विस्मये ।

(म) अत्राभियोगो अवस्कन्दः ।

कल । जधा इदोमुहागदेहिं पि महन्तो कलकलो सुदो अह्मेहिं तधा तक्केमि अस्स पि पारक्कं बलं उवगदं त्ति (१) । (य)

मालत्यवलोकिते । हद्धी हद्धी समं ज्जेव्व हरिसुव्वेअसंभेदो उवणदो (२) ।

माध । सखि मदयन्तिके ! स्वागतमेह्येहि । अनुगृहीतमस्मदुगृहं भवत्या । ननु स एवासौ किमित्यस्वस्था भवती । एकाकिनो बहुभिरभियोग इति यत्किञ्चिदेतद्वयस्यस्य । (र)

हरेरतुलविक्रमप्रणयलालसस्याहवे
स एव भवति कण्ठरवक्रप्रचण्डः सखा ।
स्फुरत्करटकोटरस्खलितदानसिक्ताननद्विपेश्वरशिरःस्थितास्थिदलनैकवीरः करः ॥ (ल)

---

(१) यथेतोमुखागतैरपि महान् कलकलः श्रुतोऽस्माभिस्तथा तर्कयाम्यन्यदपि पारक्यं बलमुपगतमिति ।

(२) हा धिक् हा धिक् सममेव हर्षोद्वेगसंभेद उपनतः ।

---

(य) अत्र पारक्यं परकीयम् ।

(र) स्वागतं कुशलम् । स एव प्रसिद्धपौरुषः । असौ मकरन्दः । यत्किंचिदिति न गणनीयमित्यर्थः ।

(ल) हरेरित्यादि ! हरेः सिंहस्य स उक्तगुणः कर एव सखा द्वितीयो भवति । विक्रमे कर्तव्ये । नान्यसत्रापेक्षत इत्यर्थः । करः कीदृशः । अतिपराक्रमप्रश्रये सतृष्णः । शब्दायमाननखैः प्रचण्डः । स्फुटतः करटस्य गण्डस्थलस्य मध्याच्चुतेन मदजलेन सिक्तमुखहस्तिराजमस्तकस्थितास्थिविदारणे श्रेष्ठवीरः । तथा च सखा मकरन्दः

तदहमपि विक्रान्तप्लुतं विलसतः प्रियसुहृदः प्रत्यनन्तरो भवामि। (व) इति विकटं परिक्रम्य कलहंसकेन सह निष्क्रान्तः ।

अवलोकितालवङ्गिकाबुद्धरक्षिताः । अवि णाम अणाहदा पडिणिअत्तिस्सन्ति एदे महाणुभावा (१) ।

माल । सहिओ अवलोइदाबुद्धरक्खिदाओ तुरिदं गदुअ भअवदीए एदं वुत्तन्तं कहेध । तुमं पि लवङ्गिए विण्णवेहि अज्जउत्तं जइ दाव तुह्माणं अह्मे अणुकम्पणीआ तदो अप्पमत्ता परिक्कमेध त्ति (२) ।

निष्क्रान्ता लवङ्गिकाबुद्धरक्षितावलोकिताः ।

माल । हद्धी हद्धी ण आणीअदि कधं वेला गमिअदु त्ति । भोदु पिअसहीए लवङ्गिआए पडिणिवुत्तिमग्गं अवलोअअन्ती चिट्ठिस्सं । परिक्रामति । सातङ्कम् । फुरिदं क्खु मे वामेदरेण लोअणेण (३) । (श) उपविशति ।

(१) अपि नामानाहतौ प्रतिनिवर्तिष्येते एतौ महानुभावौ ।

(२) सख्यौ अवलोकिताबुद्धरक्षिते त्वरितं गत्वा भगवत्या एतं वृत्तान्तं कथयतम् । त्वमपि लवङ्गिके विज्ञापयार्यपुत्रं यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः परिक्रामतेति ।

(३) हा धिक् हा धिक् न ज्ञायते कथं वेला गम्यतामिति । भवतु प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमवलोकयन्ती स्थास्यामि । स्फुरितं खलु मे वामेतरेण लोचनेन ।

सिंह इव साहसे द्वितीयानपेक्ष इत्यर्थः । काकोभगवडौ करटाविति- मरः । निष्कुहः कोटरं वा नेत्यपि ।

(व) विक्रान्तस्य वीरस्य प्लुतं गतिविशेषम् । विलसतः कुर्वतः । प्रत्यनन्तरो द्वितीयः ।

(श) अत वामममनिष्टम् । अवामो दक्षिणः । दक्षिणाक्षि-

प्रविश्य कपालकुण्डला। आः पापे! तिष्ठ।

माल। सत्रासम्। हा अज्जउत्त (१)। इत्यर्धोक्ते वाक्स्तम्भं नाटयति।

कपा। सक्रोधहासम्। नन्वाक्रन्द।

त्वद्वल्लभः क्व स तपस्विजनस्य हन्ता
कन्याविटः पतिरसौ परिरक्षतु त्वाम्।
श्येनावपातचकिता वनवर्तिकेव
किं चेष्टसे ननु चिरात्कवलीकृतासि॥ (घ)

यावच्छ्रीपर्वतमुत्तीर्य लवशो लवश एनां निकृत्य दुःखमरणां करोमि। इति मालतीमाक्षिप्य निष्क्रान्ता। (ङ)

---

(१) हा आर्यपुत्र।

---

सन्दनं स्त्रीणामनिष्टसूचकमिति भावः। अनेन कपालकुण्डलाप्रवेशोऽपि सूचितः।

(घ) त्वदित्यादि। ननु हे व त्वत्प्रियः क्व वर्तते। तापसजनस्याघोरघण्टस्य घातकः कन्याया विटोऽतिकामुकोऽसौ त्वां रक्षतु। अत एव पातीति पतिः। यच्चिराय कवलितासि किं चेष्टसे वनवर्तिकेव। श्येनः सैचान इति ख्यातः पक्षी तस्यावपातोऽतिवेगस्तेन त्रस्तारण्यवर्तिका यथेत्यर्थः। वर्तको वर्तिकाद्य इत्यमरः। अत्र वनग्रहणेन वर्तिकायाः स्वकुलवेष्टितत्वमुक्तम्। एतस्यास्तद्वैपरीत्यमिति भावः। यद्वा। वनेनारक्षितत्वेन वर्तिकाया अतिभीरुत्वमुक्तम्। यद्वा। वनावस्थानेन वर्तिकाया एकाकिनीत्वमुक्तम्। अत एव मालत्यपि तथेति साम्यम्। नववर्तिकेत्यपि पाठः। लवशो लवशोऽनेकखण्डान् कृत्वा।

(ङ) आक्षिप्य गृहीत्वा।

मद । अहं पि मालदिं ज्जेव्व अणुगमिस्सं । परिक्रम्य । सहि मालदि ! (१) ।

प्रविश्य लवङ्गिका । सहि मदयन्तिए ! लवङ्गिआ क्खु अहं (२)

मद । अवि संभाविदो क्खु तुए महाभाओ (३) । (ह)

लव । णहि णहि सो क्खु उज्जाणवाडोवणिग्गमादो ज्जेव्व कलअलं सुणिअ साधिक्खेवं दूरणिक्खेवाविद्धविअडोरुदण्डणिट्ठुरं पधाविअ पराणीअं पविट्ठो । तदो पडिणिवुत्तह्मि मन्दभाइणी । सुणामि अ घरे घरे गुणाणुराअणिब्भरस्स पोरलोअस्स हा महाणुभाव माहव ! हा मअरन्द ! हा साहसिअ ! त्ति परिदेवणाओ । महाराओ वि किल मन्तिधीआणं विप्पलम्भवुत्तन्तं सुणिअ संजादमच्छराधिक्खेवो तक्खणविसज्जिदाणिअप्पोढपाइक्कणिवहो चन्दादवेण सोहसिहरट्ठिदो पेक्खदि त्ति मन्तीअदि (४) । (च)

---

(१) अहमपि मालतीमेवानुगमिष्यामि । सखि मालति ।

(२) सखि मदयन्तिके ! लवङ्गिका खल्वहम् ।

(३) अपि संभावितः खलु त्वया महाभागः ।

(४) न हि न हि स खलूद्यानवाटोपनिर्गमादेव कलकलं श्रुत्वा साधिक्षेपं दूरनिक्षेपाविद्धविकटोरुदण्डनिष्ठुरं प्रधाव्य परानीकं प्रविष्टः । ततः प्रतिनिवृत्तास्मि मन्दभागिनी । शृणोमि च गृहे गृहे गुणानु-

---

(ह) अत्रापि प्रश्ने । संभावितो लब्धः ।

(च) अत्र उपनिर्गमः समीपगमनम् । एतेन मार्गस्य शून्यत्वमुक्तम् । अवक्षेपोऽवहेला । अपविद्धमाक्रान्तम् । विधाबोरुयुगल-

मद । हा हदह्मि मन्दभाइणी (१) ।

लव । सहि ! मालदी उण कहिं (२) ।

मद । सा क्खु पढमं ज्जेव्व दे मग्गं अवलोइदुं पसरिदा । पच्छादो अहं ण तं पेक्खामि । अवि णाम उज्जाणगहणं पविट्ठा भवे ( ३ ) । (क)

लव । सहि ! तुरिदं असेसह्म । अदिकादरा मे पिअसही । उवद्विदाणत्थे इमस्सिं अवसरे सा ण धारेदि अत्ताणअं । त्वरितं परिक्रम्य । सहि मालदि ! णं भणामि सहि मालदि त्ति (४) । (ख) इतस्ततः परिक्रामतः ।

---

रागनिर्भरस्य पौरलोकस्य हा महानुभाव माधव ! हा मकरन्द ! हा साहसिक ! इति परिदेवनाः । महाराजोऽपि किल मन्त्रिदुहितोर्विप्रलम्भवृत्तान्तं श्रुत्वा संजातमत्सराधिक्षेपस्तद्वधाय विसर्जितानेकप्रौढपदातिनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेक्षत इति मन्यते ।

(१) हा हतास्मि मन्दभागिनी ।

(२) सखि ! मालती पुनः क्व ।

(३) सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता । पश्चादहं न तां प्रेक्षे । अपि नामोद्यानगहनं प्रविष्टा भवेत् ।

(४) सखि त्वरितमन्विष्यावः । अतिकातरा मे प्रियसखी । उप॰

---

दण्डाभ्यां निर्भरं गाढं यथा तथा धावितेत्यर्थः । अनीकं सैन्यम् । धिष्वा दुहिता । विप्रलम्भो वञ्चनम् । चन्द्रातपश्चन्द्रप्रकाशः । माखत्या वियोगदशायां तापकत्वेनानुभवादातप इत्युक्तम् । मन्यते पौरलोकेनैव ।

(क) अत्र प्रसृता निर्गता । अहं प्रसृतेत्यन्वयः । अपीत्यादि शङ्कायाम् ।

(ख) अत्र नन्वहम् । अव्ययत्वादनेकार्थत्वम् । तथा च । मद्वचनमपि न इष्टोषोत्यर्थः ।

प्रविश्य प्रहृष्टः कलहंसकः । दिट्ठिआ कुसलेण अह्मे णिग्गदा संघट्टुग्गमादो (१) ।

हीमाणहे पेक्खामि विअणिम्मलणिरन्तरद्धूदधोदतरवारिधारापरिप्फुरिदचन्दकिरणुज्जलविडुरिल्लदंसणं मदलीलाकलिदकामवालविअडभुअदण्डाविद्धहलहेलाविक्खुभिदुव्वेल्लिदतरंगकलिन्दतणआसोतसंणिहं विअडविसङ्कुलुप्पडिदणिद्दआमन्दमअरन्दव्वइअरक्खोहविअलपडिबोहपरिवत्तणुग्गदसमत्थगअणङ्गणावआसक्कीसरन्तकलअलं पाइक्कसमूहं (२) । (ग)

---

स्थितानर्थेऽस्मिन्नवसरे सा न धारयत्यात्मानम् । सखि मालति ! ननु भणामि सखि मालति इति ।

(१) दिष्ट्या कुशलेन वयं निर्गताः संघट्टदुर्गमात् ।

(२) हीमाणहे प्रेक्ष इव निर्मलनिरन्तरोद्धूतधौततरवारिधारापरिस्फुरितचन्द्रकिरणोज्ज्वलरमणीयभीषणदर्शनं मदलीलाकलितकामपालविकटभुजदण्डाविद्धहलहेलाविक्षुभितोद्वेल्लिततरंगकलिन्दतनयास्रोतःसंनिभं विकटविषट्टङ्कुलोत्पतितनिर्दयामन्दमकरन्दव्यतिकरक्षोभविकलप्रतियोधपरिवर्तनोद्गतसमस्तगगनाङ्गनावकाशावसरत्कलकलं पदातिसमूहम् ।

---

(ग) अत्र हीमाणहे इति हे मातरितिवन्नीचस्य हर्षाश्चर्ये । पश्यामीव परबलमित्यन्वयः । धौतो निशितः । तरवारिः खड्गः । विडुरिल्लं भीषणम् । कलितः स्वीकृतः । कलियन्त्री कामधेनू इति शाब्दिकाः । कामपालो हलायुध इत्यमरः । आविद्धा वक्रं प्रेरिता । हेला क्रीडा । कलिन्दतनया यमुना । संनिभमिति यथा बलेन हलाकृष्टा यमुना प्रतीपमागता तथा परबलमपीति भावः । विस्तारेण वा बलस्य तादृग्यमुनासाम्यम् । विकटं विस्तीर्णं यथा

सुमरामि अ भीषणभुअवज्जजज्जरिदपञ्जरोवसप्पसुहड-हत्थावलुत्तविविहाउहोपमद्दसमोसारिअसेणिअणिअरं पाइक्करिक्कमग्गसंचारणिव्वत्तिदविसमसमरसाहसं णाहमाहवं (१)। (घ)

अहो गुणाणुराओ! णरिन्दस्स णं दाणिं सोधसिहरं-तरिदावदिसपडिहाररविणओवसासपडिसामिदविरोह-संकडो उवणीदमाहवमअरन्दमुहचन्दे वारं वारं संचारि-असिणिद्धलोअणो कलहंसपादो अहिअणं णाणिअ णिव्व-त्तिदमहग्घगुरुअबहुमाणो पप्फुरन्तमच्छरवेलक्खमसीमइ-लिदमुहे भूरिवसुणन्दणे महुरोवसासेण किं दाणिं तुह्माणं भुअणाभोअभूसणेहिं महाणुभाएहिं णवदंसणगुणाहिरा-मेहिं जामादुकेहिं अपरितोसो त्ति पडिबोधिअ गदो अव-

(१) स्मरामि च भीषणभुजवज्रजर्जरितपञ्जरोपसर्पत्सुभटहस्ताव-लुप्तविविधायुधोपमर्दसमवसारितसैनिकनिकरं पदातिरिक्तमार्गसञ्चा-रनिर्वर्तितविषमसमरसाहसं नाथमाधवम्।

तथा। विशृङ्खलः स्वच्छन्दः। आपतितः सम्मुखागतः। निर्दयो-निष्करुणः। अमन्दः सत्वरः। व्यतिकरेण मिलनेन क्षोभः। परि-वर्तनेन पलायनेन। उन्नत उत्थितः। विशङ्कितो व्याप्तः। दोर्दोषा भुजा भुज इति शब्दप्रकाशः।

(घ) जर्जरितपञ्जरा क्षत एवापसृताः पलायिताः। ओयल्लो-पसृतः। हस्तेभ्योऽवलुप्त आच्छेदितः। विकटो विषमः। अपसारः पलायनम्। रिक्तः शून्यः।

(ङ) सौधेति। प्रतीहारेण सौधाग्रादवतीर्य तयोः स्वरूपं ज्ञात्वा तदुपन्यासः कृत इत्यर्थः। अभिजनो वंशः। बहुमानः

भन्तरं राआ । इमे वि माहवमअरन्दा आअच्छन्ति । अहं पि भअवदीए इमं वुत्तन्तं णिवेदेमि त्ति (१)। (ङ) निष्क्रान्तः।

ततः प्रविशतो माधवमकरन्दौ ।

मक। अहो ! प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः। (च) तथा हि ।

दोर्निष्पेषविशीर्णसंचयदलत्कङ्कालमुन्मथ्नतः
प्राग्वीराननुपत्य तत्प्रहरणान्याच्छिद्य विक्रामतः।
उद्वेल्लद्घनरुण्डखण्डनिकराकीर्णस्य संख्योदधे-
र्द्वैधास्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥(छ)

---

(१) अहो ! गुणानुरागो नरेन्द्रस्य यदिदानीं सौधशिखरान्तरितावतीर्णप्रतीहारविनयोपन्यासप्रतिशामितावरोधसंकट उपनीतमाधवमकरन्दमुखचन्द्रे वारं वारं सञ्चारितस्निग्धलोचनः कलहंसकादभिजनं ज्ञात्वा निर्वर्तितमहार्घगुरुबहुमानः प्रस्फुरन्मत्सरवैलक्ष्यमसीमलिनितमुखे भूरिवसुनन्दने मधुरोपन्यासेन किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यां नवदर्शनगुणाभिरामाभ्यां जामातृभ्यामपरितोष इति प्रतिबोध्य गतोऽभ्यन्तरं राजा । इमावपि माधवमकरन्दावागच्छतः। अहमपि भगवत्या इमं वृत्तान्तं निवेदयामीति ।

---

संमानः। तावानीय दृष्ट्वा तयोः सापराधयोरपि गुणानुरागादतिगौरवमेव राज्ञा कृतमिति भावः। न परितोष इति नः शिरस्ताडने ।

(च) प्रेयसः प्रीतस्य । मकरन्दस्येत्यर्थः। निर्व्याजं वास्तवम् । ऊर्जितं बलवत् ।

(छ) दोरित्यादि । प्रेयसो युद्धार्णवस्य पन्था अग्र एवमभूत् । द्वेधा पार्श्वद्वये स्तम्भितया पत्तिपङ्क्त्या भयंकरः। प्रेयसः कीदृशस्य । बाहुसंचूर्णनत्रुटितसंधिस्फुटत्कङ्कालं यथा तथा प्रथमं वीरानुन्मथ्नतोऽभिभवतः। इतरत तदीयायुधानि गृहीत्वा पराक्रमं कुर्वतः। इदं

माध। नन्वनुप्रयस्थानमेतत्। पश्य

अद्यैवेन्दुमयूखखण्डखचितं पीतं निशीथोत्सवे
यैर्लीलापरिरम्भदायिदयितागण्डूषशेषं मधु।
संप्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
र्गात्रैस्ते कथयन्त्यसारविधुरान् प्रायेण संसारिणः॥ (ञ)

स्मर्तव्यं तु सौजन्यमस्य नरपतेर्यद्परार्धिनोरप्यनपराद्धयोरिव नौ सांप्रतं चेष्टितवान्। तदेहि मालतीवसन्तमधुना मदयन्तिकाहरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि। तथा च

कथयति त्वयि सस्मितमालतीवलितलोलकटाक्षपराहतम्।
वदनपङ्कजमुल्लसितत्रपास्तिमितदृष्टि सखी नमयिष्यति॥ (झ)

इति परिक्रामतः। अयमसावुद्यानवाटः। प्रविशतः।

माध। कथं शून्य एव दीर्घिकाप्रदेशः।

---

विशेषणद्वयं योग्यतया प्रेयस इत्यस्य। संक्षोदधेः कीदृशस्य। स्फुरन्नरसुण्डखण्डसमूहव्याप्तस्य।

(ञ) अद्येत्यादि। ये रात्र्युत्सवे चन्द्रकिरणखण्डखचितं क्रीडालिङ्गनदातृवनितागण्डूषावशिष्टं मधु पीतमद्यैव ते संप्रत्येव लोकान् बाहुल्येन तुच्छविकलाङ्गशरीरैः कथयन्ति। कीदृशैः। त्वदीयभुजार्गलप्रबलताडनात्त्रुटितास्थिभिः। तथा च। चपटदृष्टनष्टलुब्धचेष्टिताः प्राक्तनकर्मायत्ता जना इति भावः।

(झ) कथयतीत्यादि। त्वयि कथयति सति वदनपद्मं सखी मालत्या एव मदयन्तिका नमयिष्यति। कीदृशम्। सहासमालतीचञ्चलपक्ष्मकटाक्षैः पराहतम्। उद्गतलज्जानिश्चलदृष्टि च। मदयन्तिकानिमित्तयुद्धश्रवणेन मालत्या हासः।

मक । वयस्य ! नूनमस्मद्व्यतिकरोद्वेगपर्याकुलत्वादितस्ततः परिभ्रमन्त्य आत्मनोऽत्रैवोद्यानगहने विनोदयन्त्यो भविष्यन्ति । तदेहि पश्याव: । उभौ परिक्रामतः ।

लवङ्गिकामदयन्तिके । सहि मालदि ! सहसावलोक्य । दिट्ठिआ पुणो वि एदे अणाहदा महाणुभाआ दीसन्ति (१) । (ज)

माधवमकरन्दौ । भवत्यौ क्व मालती ।

उभे । कुदो मालदी पदसद्देण अह्मे विप्पलद्धाओ मन्दभाइणीओ (२) ।

माध । भवत्यौ कथं कथमपि सहस्रधेव विध्वंसते नो हृदयमतः स्पष्टमभिधीयताम् । (ट)

मम हि कुवलयाक्षी प्रत्यनिष्टैकबुद्धे-
र्द्रवति हृदयमन्तर्भ्रश्यतीवान्तरात्मा ।
स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं
वचनमिह भवत्योः सर्वथा हा हतोऽस्मि ॥ (ठ)

---

(१) सखि मालति ! दिष्ट्या पुनरप्येतावनाहतौ महानुभावौ दृश्येते ।

(२) कुतो मालती पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ ।

---

(ज) अक्षतानेनाभ्यां सर्वार्थिता मालती । अधुना तु युवयोरवलोकनेनावां वञ्चिते इत्यर्थः ।

(ट) कथमिति त्रासे । कथमप्यनिर्वचनीयेन रूपेण ध्वंसते । स्थितिं न बध्नाति ।

(ठ) ममेत्यादि । यतोऽयं ममान्तरात्मात्यर्थमनुगतोत्कम्प एवास्ति । कीदृशस्य । पद्माक्षी प्रत्यनिष्टैकमतेः । मम वामं चक्षुः स्फुरति च ।

मद। ताए इदो णिग्गदे महाणुभावे अवलोइदं बुद्धरक्खिदं अ भअवदीसआसं विसज्जिअ अप्पमादणिमित्तं विसवेहि अज्जउत्तं त्ति लवङ्गिआ अणुप्पेसिदा। तदो उत्तम्ममाणा एदाए मग्गं अवलोइदुं अग्गदो पसरिदा। पच्छादो अह्मे ण तं पेक्खामो। तदो अह्मेहिं जाव विडवन्तराइं विचिणिदाइं ताव तुह्मे दिट्ठत्ति (१)। (ड)

माध। हा प्रिये मालति!

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि! पर्युत्सुकोऽस्मि।
कलयसि कलितोऽहं वल्लभे! देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि॥ (ढ)

---

(१) तयेतो निर्गते महानुभावेऽवलोकितां बुद्धरक्षितां च भगवतीसकाशं विसृज्याप्रमादनिमित्तं विचिनुतार्यपुत्रमिति लवङ्गिकानुप्रेषिता। तत उत्ताम्यमानैतस्या मार्गमवलोकयितुमग्रतः प्रसृता। पश्चादावां न तां प्रेक्षावहे। तत आवाभ्यां यावद्विटपान्तराणि विचितानि तावद्युवां दृष्टाविति।

---

इह भवत्योर्वचनम्। कष्टमेतद् दुःखदायि। हा कष्टं। सर्वथा हतोऽस्मि। अन्तरात्मनोऽधकुनस्य भवद्वचनस्य चैकमत्यादिति भावः।

(ड) अत्र पश्चादावां प्रक्षते इत्यन्वयः। विचितान्यन्विष्टानि।

(ढ) किमपीत्यादि। मङ्गलेभ्योऽन्यदनिष्टं किमप्यनिर्वचनीयं यद्यत्परिहासादहं शङ्के स परिहासो विरमतु। परिहासेन तव निह्नवेऽनिष्टं शङ्केऽतस्तं मुञ्चेति भावः। हे चण्डि! कोपने! समुत्सुकोऽस्मि यतः। तथा च कोपेनापि निह्नवं माकुर्वित्याशयः। अथ अनेन प्रकारेण कलयसि जिज्ञाससे तर्हि कलितो ज्ञातोऽहम्। हे वल्लभे!

उभे । हा पिअसहि ! कहिं सि (१) ।

मक । वयस्य ! किमित्यविज्ञाय वैक्लव्यमवलम्बयते । (ख)

माध । सखे ! त्वमपि किं न जानासि माधवस्नेहदुःखितायास्तस्याः कातर्यंचेष्टितानि । (त)

मक । अस्त्येतत् । किं तु भगवतीपादमूलगमनमप्याशङ्क्यते । तदेहि तत्र तावत् पश्यावः ।

उभे । एवं पि संभावीअदि (२) ।

माध । एवं नामास्तु ।

मक । विचिन्त्य स्वगतम् ।

याता भवेद्भगवतीभवनं सखी नो
जीवन्त्युपैष्यति न वेत्युपशङ्कितोऽस्मि ।

---

(१) हा प्रियसखि ! कासि ।
(२) एवमपि संभाव्यते ।

---

वाचं देहि । त्वमेव मे वल्लभा । अतो वदेत्यर्थः । विह्वलमधीरं मम चित्तमत्यर्थं मति स्थितिं न लभते । अत एव सोपालम्भमाक्र निष्करुणासि ।

(ख) वैक्लव्यं दुःखित्वम् ।

(त) कातर्यं कातरत्वं तेन चेष्टितानि प्राणत्यागादीनि ।

(थ) यातेत्यादि । अस्माकं सखी भगवतीगृहं यदि गता भवेत्तदा जीवन्ती समागमिष्यति । न वा गता तदा नागमिष्यतीत्याशङ्कितोऽस्मि । तत्र हेतुः । बन्धुजनमित्रप्रियाणां संगम आदौ यस्य तत्सौख्यं बाहुल्येन विद्युत्स्फुरणचञ्चलमेव भवति । तदिह भगवतीपादमूलेति

प्रायेण बान्धवसुहृत्प्रियसंगमादि
सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥ (थ)

इति निष्क्रान्ताः सर्वे ।

मालत्यपहारो नामाष्टमोऽङ्कः । (द)

---

# नवमोऽङ्कः ।

ततः प्रविशति सौदामिनी ।

सौदा । एषास्मि सौदामिनी भगवतः श्रीपर्वतादुत्पत्य पद्मावतीमुपाश्रिता । मालतीविरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः संस्त्यायं परित्यज्य सह सुहृद्वर्गेण वृहद्द्रोणीशैलकान्तारप्रदेशमधितिष्ठतो माधवस्याधुनान्तिकं प्रयामि । भोस्तथाहमुत्पतिता यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिच्छिद्यते (क) । पश्चाद्विलोक्य । साधु साधु ।

---

साधारणपदोल्लेखेन मालत्या भविष्यत्सौदामिनीपार्श्वगमनस्य सूचनेन नवमाङ्कावतारोऽपि सूचितः । अत एवाङ्कावतारोऽयम् । यदाह । समाप्यमान एकस्मिन्नङ्केऽन्यस्य च सूचनम् । समासतो हि नाट्यज्ञैरङ्कावतार उच्यते ॥ सुहृन्मित्रम् । प्रियं प्रीतिविषयं मनोज्ञं वस्तु ।

(द) सूते स्वयं रत्नधरोऽतिमान्यो मान्यातिमान्या दमयन्तिकापि । जगद्धरं तत्कृतटिप्पणेऽङ्को गतोऽष्टमोऽयं रसरस्यरूपः ।

इत्यष्टमोऽङ्कः ।

---

(क) अधुना पूर्वसूचितसौदामिन्या मालतीजीवननिवेदनेन माधव-

पद्मावतीविमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्ति।
उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
संघट्टपाटितविमुक्तमिवान्तरिक्षम्॥ (ख)

अपि च। सैषा विभाति लवणा ललितोर्मिपङ्क्ति-
र्यस्यागमे जनपदप्रमदाय यस्याः।
गोगर्भिणीप्रियनवोलपमालभारि-
सेव्योपकण्ठविपिनावलयो भवन्ति॥ (ग)

---

प्रत्युज्जीवनाय प्रवेशसाह। तत इति। नानासिद्धिस्थानत्वेन देवतात्मकतया भगवत्पदं मीयते। संस्तुतः परिचितः। द्रोणी नद्या मध्यम्। तच्छेत्यनेनोत्पतनस्य दूरत्वमुक्तम्। व्यतिकरः समूहः। परिचिप्यत इव नेत्रमण्डले प्रविष्टीक्रियत इव।

(ख) पद्मावतीत्यादि। पद्मावती पुरी गगनमिव धारयति। विमलवारिरच्छजला महती सिन्धुश्च पारा च सरितौ तयोः परिकरो वेष्टनं तद्व्याजात्। उच्छ्रितप्रासाददेवकुलपुरद्वाराट्टालिकानां घर्षणेनादौ विदीर्णं ततो विशेषेणोभयतत्वक्तम्। उत्तुङ्गसौधादय आकाशं पाटयित्वा निर्गताः। अथ नदीच्छलेन तदाकाशं पतितमिवेत्यर्थः।

(ग) सैषेत्यादि। सैषा लवणा नदीभेदो विभाति। मनोज्ञकल्लोलावलिः। वर्षासु यस्या गवां गर्भिणीनां प्रिया नवा योलपमाला तृणविशेषराजिस्तां बिभ्रति। तास्त्वीत्ये शिनिः। अत एव सेव्याः परिशीलकसुखदाः समीपवनपङ्क्तयो लोकहर्षाय भवन्तीति। सैषेत्यनेन पूर्वदृष्टत्वमुक्तम्। अपो बिभर्तीत्यवभ्रम्। अभ्रति गच्छति वेत्यभ्रम्। अतो बकारयुक्तं तद्। अयुक्तं चेदं पदमित्यवधेयम्। चतुष्पादो गर्भिण्येति समासः। उलपो नाम तृणान्तर इति मेदिनीकारः। मालभारीत्यत्र एकेषीकामालानां चितूलभारिष्विति ह्रस्वः।

अन्यतोऽवलोक्य। अयमसौ भगवत्याः सिन्धोर्दारितरसातलतटप्रपातः। (घ)

यत्रत्य एष तुमुलो ध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः।
पर्यन्तभूधरनिकुञ्जविजृम्भमाणो
हेरम्बकण्ठरसितप्रतिमानमेति॥ (ङ)

एताश्च चन्दनाश्वकर्णकेसरपाटलाप्रायतरुगहनाः परिणतमालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति खलु तरुणकदम्बजम्बूवनावनद्धान्धकारगुरुनिकुञ्जगम्भीरगह्वरोद्गारगोदावरीमुखरितस्निग्धविशालमेखलाभुवो दक्षिणारण्यभूधरान्। अयं च मधुमतीसिन्धुसंभेदपावनो भगवान् भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णबिन्दुरित्याख्यायते (च)।

प्रणम्य।

---

(घ) रसातलतटः पृथ्वीतटः। तलशब्दः स्वरूपे। प्रपातोऽततटम्। यद्वा। तटे प्रपातोऽतिशयितं पतनम्।

(ङ) यत्रत्येत्यादि। यदीय एष महाध्वनिः सिन्धोः पर्यन्तगिरिकुञ्जेषु वर्धमानविघ्नेशगलध्वनिसाम्यं गच्छति। तस्य गजास्यत्वेन गभीरध्वनित्वात्। कीदृशः। जलपूर्णगभीरनवमेघध्वनिवत्प्रचण्डः। तुमुलो महति स्मृत इति विश्वः।

(च) चन्दनं रक्तचन्दनं देवदारु वा। उपचारात्। अन्यथा च मलयजत्वविरोधात्। अश्वकर्णो वृक्षभेदः। प्रायःशब्दः प्रभृत्यर्थो बाहुल्यार्थो वा। परिणतं पक्वम्। मालूरं बिल्वफलम्। तरुणो वृक्षभेदः। अवनद्धो वृतः। उद्गारः प्रतिशब्दः। गोदावरी नदीभेदः। मेखला नितम्बः। भूधरान्मलयादीन्। सौदामिन्या दक्षिणदेशवासित्वेन स्मरणम्। मधुमतीसिन्ध्वोर्नद्योः संभेदः संगमस्तस्य पावनः पावित्र्यहेतुः।

जय देव भुवनभावन जय भगवन्निखिलनिगमनिधे ।
जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो ॥ (च)

गमनमभिनीय ।

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः ।
शकुनिशबलनीडानोकहस्निग्धवर्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ (ज)

---

स्वयंभूसंनिधानस्य महातीर्थहेतुत्वात् । अपरिमिताम्नाता पुरुषकृता प्रतिष्ठा स्थितिर्यस्य । एतेन स्वयंभूत्वमुक्तम् । आख्यानं प्रसिद्धिः ।

(च) अदृष्टार्थं शिवस्तुतिमाह । जयेति । भुवनानां कार्यजातानां भावन उत्पादक । दीव्यतीति देव द्युतियुक्त । भगवन् भगं तत्त्वज्ञानं तद्युक्त । तथा च रागद्वेषादिरहित इत्यर्थः । स्तुतिफलमाह । अखिल-वरान् भुक्तिमुक्त्यादीन्ददाति तादृशो निगमो वेदस्तन्निधे तत्कर्तः । यद्वा । निगम आविर्भावस्तदाश्रय । तथा च । वेदद्वाराविर्भावेन जगदुपकारक इत्यर्थः । मनोज्ञचन्द्रभूषण । तथा च वेदकारणाय कृत-शरीरपरिग्रह इत्यर्थः । तर्हि पौरुषेयत्वाद्वेदाप्रामाण्यं स्यादित्यत आह । मदनेति । सर्वदोषनिधेः कामस्य नाशन निर्दोष । अत एव भगवान् । तथा च नोक्तदोषः । आदौ सर्गादौ गुरो । ब्रह्मादीना-मित्यर्थात् । तथा च वेदस्य भगवत्कर्तृत्वमायाति ।

(ज) अयमित्यादि । अयं गिरिर्नेत्रयोर्हर्षं ददाति । कीदृशः । नवीनमेघश्यामलतुङ्गसानुः । हर्षमत्तमयूरीमुक्ता संसक्ता मिलिता केका मयूरवाणी यत्र सः । शकुनिभिः पक्षिभिः शबला कर्बुरा ये नीडानोकहाः पक्षिवासवृक्षास्तैः स्निग्धं वर्ष्म शरीरं यस्य सः । तद्वृक्षाणां पक्षिव्याप्तत्वे-नाशेषपक्षिणो नीड एव वसन्तीति भावः । बृहदश्मा विपुलशिलः । केका वाणी मयूरस्येत्यमरः । शबलैताश्च कर्बुर इति च । कुलायो नीडम-

अपि च। दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः॥ (झ)

ऊर्ध्वमवलोक्य। कथं मध्याह्नः। तथाह्यत्र संप्रति

काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
तीराश्मन्तकशिम्बिचुम्बिनमुखा धावन्त्यपः पूर्णिकाः।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीतन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुभाः॥ (ञ)

---

स्त्रियामिति च। अनोकहः कुटः शाल इति च। शरीरं वर्ष्म विग्रह इति च।

(झ) दधतीत्यादि। अत्र गिरौ गुहावासिनां तरुणभल्लूकानाम-म्बूकृतानि सश्लेष्मकथूत्कारध्वनयोऽनुरसितेन प्रतिरवेण स्थूलानि स्त्यानं घनतां दधति। सल्लकीनां वृक्षभेदानां गजखण्डितविस्तीर्णसंधिपर्व-निर्गतगन्धः स्त्यायते निविडोभवति। निष्यन्दः स्पर्शाच्छिशिरः शीतो रसतः कटुः कषायः। स्त्यानमिति भावप्रधानो निर्देशः। अम्बूकृतं सनिष्ठीवमित्यमरः।

(ञ) काश्मर्या इत्यादि। गम्भार्याः सकाशात् कृतमालमारग्वधवृक्ष-मुद्गतपत्रम्। घनच्छायमिति यावत्। कोयष्टिकः कोवा इति ख्यातः पक्षी टीकते गच्छति। गम्भार्या अल्पपत्रत्वात्। यद्वा। कृता संपन्ना माला वृक्षपङ्क्तिर्यत्र तं प्रदेशं गच्छतीत्यर्थः। तीरस्थोऽश्मन्तकस्तीराश्म-न्तकः। शाकपार्थिवादिः। अश्मन्तकोऽम्लकोला इति ख्यात आम्रातको वा वीरणं वा। तस्य शिम्बिः शिखा लताभेदो वा तस्याश्चुम्बिनं चुम्बन-करणं मुखं यासां तादृशाः पूर्णिका पक्षिजातयोऽपः पानीयानि धावन्ति गच्छन्ति। ग्रीष्मतप्तास्ता नीडं विहाय जलमनुगच्छन्तीत्यर्थः यद्वा। तीराश्मन्तकं तीरवर्तिवीरणपःपूर्णिका कुम्भीरमक्षिक

तद्भवतु (ट) माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि।

इति निष्क्रान्ता। विष्कम्भकः। (ठ)

ततः प्रविशतो माधवमकरन्दौ।

मक। सकरुणं निःश्वस्य।

---

धावन्ति व्रजन्ति। ग्रीष्मतप्तजलं त्यक्त्वा तीरवीरणादिच्छायामनुसरन्तीत्यर्थः। यद्वा। अश्मन्तकं शिंशिपावृक्षस्तस्य शिम्बिरूपमित्यर्थः। तिनिशस्यातिमुक्तकस्य वृक्षस्य छिद्रयन्ति स्कन्धे प्रकाण्डे छायासेवनार्थं दात्यूहैः पक्षिभेदैः कोठडाडाडक इति ख्यातैर्निलीय स्थितम्। वीरुल्लता नीडं वासो यस्य कपोतस्य पाण्डुनामपक्षिणः शब्दितं लक्षीकृत्य कुक्कुभा अधस्तरूणां रुदन्ति। ग्रीष्मतापात् कपोता निजनीडवासिनः कुक्कुभाश्च तृषार्ता रुदन्तीत्यर्थः। जातिस्वभाव एवासौ। यद्वा। कुक्कुभाः क्रन्दन्त्याह्लादयन्ति। अहो कपोतरुतमित्यभिलपन्तीत्यर्थः। गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिकेत्यमरः। आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः। आरेवतव्याधिघातकृतमालसुवर्णका इति च। कोयष्टिकष्टिट्टिभक इत्यपि। आस्मातकेऽश्मिकायामश्मन्तको वीरणेऽपि च। शिंशिपाश्मन्तकं पाङ्गुरिति धरणिः। शिम्बिः शिखा लताभेद इति विश्वः। नासाच्छिन्न्यां तु पूर्णिकेति च। पूर्णिका पक्षीति ख्याता पतविङ्केति ख्याता वा। अपःपूर्णिका कुम्भीरमक्षिकेत्यपि धरणिः। दात्यूः कालकण्टक इत्यमरः। तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तक इति च। अस्त्री प्रकाण्डः स्कन्धः स्यादिति च। तित्तिरिः कुक्कुभो लाव इति च। मयूरप्रमाणोऽयं पक्षी।

(ट) तदित्युपसंहारे।

(ठ) विष्कम्भक इति। शुद्धविष्कम्भकोऽयम्। यदाह। शुद्धो मध्यमपात्रेण संस्कृतोक्त्या निबध्यते॥ इति।

न यत्र प्रत्याशामनुपतति नो वा रहयति
प्रविच्छिन्नं चेतः प्रविशति च मोहान्धतमसम् ।
अकिंचित्कुर्वाणाः पशव इव तस्यां वयमहो
विधातुर्वामत्वाद्विपदि परिवर्तामह इमे ॥ (ड)

माध । हा प्रिये मालति ! क्वासि । कथमविज्ञाततत्त्वमद्भुतं झटिति पर्यवसितासि । नन्वकरुणे ! प्रसीद संभावय माम् । (ढ)

प्रियमाधवे किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा ।
स्वयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ (ण)

---

(ड) न यत्रेत्यादि । यैरस्माभिस्तादृशं राजसैन्यं जितमिमे वयं स्रष्टुर्वाम्याद्विपत्तौ पुनःपुनर्वर्तामहे । यत्र विपत्तौ चित्तम् । कर्तृ । प्रत्याशां नानुगच्छति न वा त्यजति । अन्वयव्यतिरेकानिश्चयात् । तथा च सा जीवति न वेति न ज्ञायत इति भावः । रहत्यागे स्वार्थे णिच् । प्रतिच्छिन्नं पुनःपुनः प्रेरितं चेतः पुनर्मोहरूपगाढान्धकारं प्रविशति । किं कर्तव्यमिति न जानीम इति भावः । अत एव कामप्यर्थक्रियामकुर्वाणाः पशव इव ।

(ढ) यत एवाविज्ञातं तत्त्वमत एवाश्चर्यम् । पर्यवसिता समाप्तिं गता । संभावयाश्वासय ।

(ण) प्रियेत्यादि । हे प्रियमाधवे मयि किमस्निग्धासि । माधवान्यशङ्कामपनयति । ननु हे अहमेव स यं पूर्वं तव करः स्वयमनन्दयत् । तथा च माधवान्यशङ्कामपि मा कृथा इति भावः । आगृहीतमीषद् गृहीतं सात्त्विककम्पादिना चपलतया मनोज्ञसूत्रं येन सः । यद्वा । आगृहीतमभिगृहीतं करसमर्पणात् । अत एव मूर्ति-

वयस्य मकरन्द ! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः ।

सरसकुसुमश्यामैरङ्गैरनङ्गमहाज्वर-
स्थिरमविरतोन्माथी सोढः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढं यत्करार्पणसाहसम् ॥ (त)

अपि च । मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव ।

मान् कृतदेहपरिग्रहो महोत्सव इव । सोऽपि गृहीतमण्डनो नन्दकस्य भवति । उद्गृहीतमिति पाठ उच्चैर्गृहीतमित्यर्थः । कङ्कणं मण्डने सूत्र इति विश्वः । तादृशस्येत्यनुस्मृतिः करग्रहणमहोत्सवानुध्यानस्वास्थ्यात्तदभ्यासाद्वा । यदाह । स्वास्थ्याभ्याससमुत्था स्मृतिदर्शनसंभानुस्मृतिः ॥ इति ।

(त) सरसेत्यादि । तया कामसहाज्वरोऽवस्थादशको बहुकालं सोढः । अनङ्ग एव महाज्वर इति वा । नवपुष्पसदृशैरङ्गैः । कीदृशः । सन्ततमर्मव्यथाकारी । अत एव प्रतिमुहूर्तमुन्मूलनोद्यतः । एतेन दुःसहत्वमुक्तम् । ततः प्राणांस्त्यक्तुं तया मनो विशेषेण निरपेक्षतया धृतम् । अत एव तृणमिव । सारमाह । इतः करार्पणसाहसादपरं किमस्ति । अपि तु न किमपीत्यर्थः । यत् करस्यार्पणं स्वयमेव दानं तदेव साहसं निर्व्यूढं निःशेषेण दोषमपहाय कृतम् । कुलकन्यकानां तन्निषेधात्साहसत्वम् । तृणमिवेत्यत्र लिङ्गवचनभेदे नोपमादोषो भवति । रसान्तर्गतत्वेन धीमतामनुद्वेगात् । यत्रोद्वेगो न धीमतामिति दण्डिवचनात् ।

(थ) मयीत्यादि । सखे असौ प्रिया स्नेहेङ्गितं रुदितैस्तथा विस्तारयामास यथा पीडाचपलचित्तोऽहमप्यभूवं भूतोऽस्मीति स्मरामि ।

स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीडातरङ्गितमानसः ॥ (थ)

सावेगम् । अहो नु खलु भोः । (द)

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (ध)

---

इतिरध्याहार्यः । अन्यथा कर्माप्राप्तिः । रुदितस्य करुणजन्यत्वात् करुणहेतुमाह । विवाहविधेः पूर्वं मयि नैराश्यादिकलानि स्वविषयव्यावृत्तानि करणानीन्द्रियाणि तैर्लक्षिता । अनेन मोह उक्तः । लक्षणे तृतीया । कीदृशैः । मर्मच्छेदव्यथादीनैरिव । अनेन निःश्वासवत्त्वमुक्तम् । निःश्वासेन मर्मच्छेदोन्नयनात् । तथा च निःश्वासरुदितमोहैः करुणरस उक्तः । यद्वा । विकलकरणैर्व्यतनोद्रुदितैरिव । इतरत्सुगमम् ।

(द) अहो नु खलु भो इत्याश्चर्ये ।

(ध) दलतीत्यादि । मम हृदयं दलति विदीर्यते । सवेदनत्वात् । दृढोद्वेगम् । नैव द्विधा भिद्यते द्विधा भिन्नं न भवति । स्फुटिते पीडोपशान्तिरिति भावः । तुशब्द एवार्थे पुनरर्थे वा । पुनर्न भिद्यत इत्यर्थात् । भिद्यत इति कर्मकर्तरि तङ् । अथ च दलति तन्न भिद्यत इति विरोधाभावः । एवमुत्तरत्रापि । विह्वलः कायो मोहं दधाति न तु चेतनां त्यजति । पुनश्चैतन्ययोगात् । स्थिरे मोहे दुःखाज्ञानात् कृतार्थः स्यामिति भावः । तदिहाध्यात्मिकविपद्द्वयमुक्तम् । अन्तर्दाहः शरीरं दीपयति न भस्मसात् करोति । कार्त्स्न्येन भस्मरूपं न करोतीत्यर्थः । सातिः कार्त्स्न्ये । तथात्वे दुःखाज्ञानमेव स्यादित्याशयः । अनेनाधिभौतिकी विपदुक्ता । तदिह व्याधिदशायां मोहादय उक्ताः । यदाह । मनःसंमोहसर्वाङ्गदाह-

मक। वयस्य! निरवग्रहं दहति दैवमिव दारुणो विवस्वान्। इयं च ते शरीरावस्था। तदस्य पद्मसरसः परिसरे मुहूर्तमास्यताम् (न)। अत्र हि

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसंवलनमांसलगन्धबन्धुः।
त्वां प्रीणयिष्यति पुरःपरिवर्तमान-
कल्लोलशीकरतुषारजडः समीरः॥ (प)

परिक्रम्योपविशतः।

मक। स्वगतम्। भवत्वेवं तावदाक्षिपामि (फ)। प्रकाशम्। वयस्य माधव!

---

इत्यादिभिस्तथा। शिरसो वेदनाभिश्च व्याधेरभिनयो भवेत्॥ इति। इह कायावच्छिन्न आत्मा कायपदेनोक्तः। अन्यथा मोहस्यात्मधर्मतया कायेऽसम्भव इत्यवधेयम्। स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः।

(न) जडतानिवृत्त्यर्थं माधवमन्यचित्तं कर्तुमाह। वयस्य इति। निरवग्रहं निष्प्रतिबन्धं यथा।

(प) उपवेशनफलमाह। उन्नालेत्यादि। समीरो वायुरिह त्वां प्रीणयिष्यति प्रीतिं करिष्यति। तद्योग्यतामाह। शोषान्तेऽम्भोदकतयोन्नतनाला बाला ये पद्मसंघातास्तेषां पुष्परसीयक्षरणेन यन्मिश्रणं तेन मांसलः पुष्टो यो गन्धस्तन्मित्रम्। अग्रे दोलायमानकल्लोलशीकरैः शीतलो जडो मन्दः। यद्वा। शीकर एव तुषारस्तैर्जडः शीत इत्यर्थः। आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यत इति मेदिनीकारः। माकरन्दः। तस्येदमित्यण्।

(फ) आक्षेपोऽन्यमनस्कता।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥ (ब)

माधवः सावेगमुत्तिष्ठति ।

मक । कथं प्रतिपत्तिशून्यमुत्थायान्यतः प्रवृत्तः (भ) ।

निःश्वस्योत्थाय च । सखे ! प्रसीद । पश्य पश्य

---

(ब) एतस्मिन्नित्यादि । अत्र सरसि भुवः प्रदेशा दृश्यन्ताम् । अश्रुपूर्णनेत्रतयादर्शनमाशङ्क्याह । एकस्य नेत्रजलस्य परिपतनमन्यस्योत्थानं तयोर्मध्ये । कीदृशाः । हर्षाव्यक्तमधुररवहंसविशेषपक्षकम्पितबलद्दीर्घनालपद्माः । नीलोत्पलयुक्ताश्च । पूर्वं विशिष्टपद्ममुक्तमिह तु नीलपद्ममात्रमित्यपौनरुक्त्यम् । यद्वा । पूर्वं श्वेतपद्ममुक्तम् । इह तु नीलं तदित्यदोषः । श्वेतश्यामकमलसंवलनेनातिरम्यतोक्ता । अविरहितश्रिय इति पाठे श्रीः शोभा लक्ष्मीर्वा । सरसि तस्याः सतताधिवासात् । तया च श्रीयुक्ता इत्यर्थः । मलिनैर्मल्लिकाक्षास्त इत्यमरः । मल्लिको हंसभिद्यपीति मेदिनीकारान्मल्लिक आख्या यस्येति ज्ञायते । अनुप्रासश्च नागरागेति समानश्रुत्यापि संभवतीत्यवधेयम् । सोद्वेगं शीतवातादिदुःसहत्वादिति भावः ।

(भ) प्रतिवाक्यप्रदानादिमुत्थालोकनवर्जनम् । तूष्णीम्भावो विचेतस्त्वं जडतायां भवन्ति हि ॥ इति जडताचिह्नं माधवे सचमत्कारमाह । कथमिति । निरूप्य नेयं जडता किं त्वनुस्मृतिरित्याह शून्यमिति । शून्यं निर्लक्ष्यमन्यतो गमनेनानुस्मृतिः । यद्वा । अन्यतः शून्यं मालतीव्यतिरिक्तवस्त्वज्ञानात् । अत एव प्रद्वेषादन्यकार्याणां कथितानुस्मृतिरिति । अप्रतिपत्तिशून्यमिति पाठेऽनवधानेन चैतन्यविरहो यथा तथोत्थायेत्यर्थः ।

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥ (म)

अपि च । जृम्भाजर्जरडिम्बडम्बरघनश्यामत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।

---

(म) वानीरेत्यादि । सखे ! कुञ्जसंबन्धि नदीनां पयः पश्य । वेतसपुष्पैर्लग्नसौरभम् । तासामेवोपान्तेषु च यूथिकाकुसुमानां जालकैः कोरकैर्विकासितम् । यद्वा । यूथिकाश्च सुमनसश्च तासां जालकैः । यूथिका जूहीति प्रसिद्धा । सुमनसो जात्यः । सुमना मालती जातिरित्यमरः । तथा गिरेः सानूनेकदेशानालम्ब्य इह प्राग्भारेषु शिखरेषु वर्तमानैर्मेघैर्वितानाय्यते । वितानाचारः क्रियते । मयूरनृत्यविधाननिमित्तम् । निमित्तसप्तमीयम् । कीदृशेषु । विकसत्कुटजपुष्परूपहासवत्सु । तदिह मयूरनृत्यार्थं मेघैर्वितानं कुटजैर्हास इति यत्तत्पश्येत्यर्थः । एवं च कुटजदृश्या द्रष्टारो मयूरा नर्तका मेघो वितानमिति नृत्यसामग्री । ध्वनिस्तु शिखण्डिपदेन पञ्चचूडोपेतशिरस्कत्वेन विदूषक उक्तः । प्राग्भारपदेन च प्राञ्चतीति प्राक् प्रकृष्टज्ञानवान् भारो दुःखहो यस्य स मूर्खो द्रष्टोक्तः । तस्य च हास उचित एव । यद्वा । शिखण्डिपदेन त्रिशिखण्डयोगितया बाल उक्तः । तस्य च नृत्ये मूर्खो हसत्येव । बालानामपि कर्तव्यं त्रिशिखण्डविभूषणम् ॥ इति बालानां शिखण्डित्वे मानम् । वानीरवञ्जुला इत्यमरः । चारको जालकं क्लीबे कलिका कोरकः पुमानिति च । वितानमाचरतीत्यर्थे क्यङन्ताद्यकि वितानाय्यत इति रूपम् ।

(य) जृम्भेत्यादि । सखे ! शैलपर्यन्तभूमयो जृम्भया विकासेन जर्जरः पृथग्भूतो यो डिम्बो गोलकस्तस्य डम्बरेणारम्भेण व्याप्ता

उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः॥(य)

माध। सखे! पश्यामि किं तु दुरालोकरमणीयाः संप्रत्यरण्यगिरिभूमयः। तत्किमेतत्। चाक्षम्। अथवा किमन्यत्।

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झामरु-
त्प्रेङ्खोलत्स्वलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः।

---

अत एव श्यामलो नीपद्रुमा यत्र तादृश्यो भवन्तीति यत्तत्पश्येत्यर्थः। एवं सर्वत्र दिशो मेघमालाश्यामा भवन्ति। यद्वा। कादम्बानां कलहंसानां स्त्रियः कादम्बिन्यस्ताभिः श्यामाः। नदीप्रवाहाणां कच्छाः कूलानुद्यद्भिर्विकसितैः कन्दलैर्वाङ्कुरैः कान्ता मनोज्ञा ये केतकवृक्षास्तद्धारका भवन्ति। यद्वा। उद्यन् कन्दलः कन्दो यस्य कान्तकेतकस्येत्यर्थः। यद्वा। उद्यन्तः कन्दलो कलीदृक्षस्तं कान्तकेतकं च बिभ्रतीत्यर्थः। वनानां मालाविर्गन्धानि व्यक्तीभवत्सौरभाणि यानि शिलीन्ध्रलोध्रकुसुमानि तैः स्मेरा सहासेव। मनोज्ञा वा। शिलीन्ध्रं कन्दलीपुष्पमिति विश्वः। शिलीन्ध्रं स्तूल इति ख्यातम्। वनमिह पद्मवनं विपिनं वा। जृम्भा विकारजृम्भयोरिति विश्वः। डिम्बोऽस्त्रडेऽपि च गोलक इति धरणिः। डम्बरोऽस्त्री समारम्भ इति विश्वः। कादम्बिनी मेघमाला कादम्बस्त्री च कथ्यत इति शाश्वतः। कन्दलः कलहे कन्दे मञ्जरामङ्कुरसंघयोरिति मेदिनीकारः। पुंसि कच्छस्तथाविध इत्यमरः। वनं नीरेऽम्बुजे क्लीबं काननेऽप्यालये वनमिति मेदिनीकारः।

(र) उत्फुल्लेत्यादि। अधुना त एते दिवसाः प्राप्ता ये मनोराज्येन मया स्मृता इत्यर्थः। इह त एत इति सर्वनामभ्यां दिनानामत्युत्कण्ठाहेतुत्वं ध्वनितम्। कीदृशाः। उत्फुल्लाभ्यामर्जुनशालाभ्यां वासितः सुरभीकृतो वहन् पौरस्त्यः प्राच्यो यो झञ्झानिलः

धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एतेऽधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिणो वासराः ॥ (र)

हा प्रिये मालति !

तरुणतमालनीलबहुलोन्नमदम्बुधराः
शिशिरसमीरणावधूतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ (ल)

---

प्रचण्डवायुः प्रावृषेण्यवातो वा तस्य प्रेङ्खोल आन्दोलनं तेन स्खलिताः स्वस्थानच्युता इन्द्रनीलमणिखण्डा इव श्यामा मेघपङ्क्तयो येषु ते। अत्रार्जुनपक्षेऽपि द्वितीयतरोः सर्जस्य ग्रहणं कदम्बाद्युपलक्षणार्थम्। तथा धौतोद्धतप्रसर्जासिकसौरभवन्तः। ईषद्वृष्टौ तदुद्गमात्। घर्मस्य ग्रीष्मस्य विगमोपगमोऽम्भस आगम आगमनं तयोर्व्यतिकरः संबन्धस्तेन श्रियं शोभां वोढुं शीलं येषां ते। यद्वा। घर्माम्भसः स्वेदजलस्य यौ विगमागमौ तयोर्व्यतिकरः संभेदः। वर्षारम्भ इत्यर्थः। तस्य श्रीः सम्पत्तिस्तद्वाहिन इत्यर्थः। पौरस्त्य इति पुरसस्त्यक्। झञ्झा ध्वनिविशेषे स्यादिति मेदिनीकारः। तदन्वितोऽनिलो झञ्झानिलः। यद्वा। झञ्झानिलः प्रावृषेण्य इति रत्नकोशः। अत्र वासमानेति कर्तव्ये संपूर्णक्रियत्वपरनिष्ठाप्रत्ययान्तवासितपदोपादानात् समस्तपुष्पसौरभसंक्रान्तिर्वायोर्ध्वनिता। अत एव मलयानिलाज्झञ्झानिलोत्कर्षः कटाक्षितः। उन्मादावस्थो माधवः। उन्मादस्त्विष्टवियोगात्। यदाह। इष्टजनस्य वियोगादुन्मादो विभवनाशाच्च।

(ल) तरुणेत्यादि। कथमधुना दिशोऽहमवलोकयेयम्। तरुणतमालान्नीलास्तद्वद्वा नीलाः प्रचुरा उन्नमन्तो मेघा यासु ताः। शीतवातविधुतनवजलकणाः। हरेरिन्द्रस्य हेतिरस्त्रं धनुस्तद्वतीः। मदकलमयूरकोलाहलैः शब्दवतीः॥ कलहं कलकलेऽपि चेति विश्वः। सरित इति पाठे प्रतिबिम्बेन मेघवत्त्वम्। हरेः कृष्णस्य हेतिश्चक्रं

शोकाग्निं नाटयति ।

मक । कोऽप्यतिदारुणो दशाविपाकः संप्रति वयस्यस्य । सास्रम् । मया पुनर्वञ्चायमाणेन विनोद आरब्धः । निःश्वस्य । एवं च पर्यवसितप्रायैव नो माधवं प्रति प्रत्याशा । सभयं विलोक्य । कथं प्रसुप्त एव । आकाशे । मालति मालति किमपरं निरनुक्रोशासि । (व)

अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनि प्रिये सखि कोऽयं करुणोज्झितक्रमः ॥ (श)

कथमद्यापि नोच्छ्वसिति (ष) । हन्त मुषितोऽस्मि दैवेन ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।

---

तन्नामकपक्षियुक्ताः । दुःखितेनर्तुनाऽनं दुःखमयत्वेनैव । यदाह । कृत्स्नान् पश्यति दुःखार्त्तः सर्वान् दुःखसमन्वितान् ॥ इति । तदनेन प्रबन्धेन वर्षाकाल उक्तः । यदाह । कदम्बनीपकुटजैः शाद्वलैः सेन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥ शोकेति । मूर्च्छितः पततीति भावः ।

(व) विनोदश्चित्तस्वास्थ्यम् । प्रसुप्तः संज्ञाशून्यः । अनुक्रोशोऽनुकम्पा तद्विपरीतासि ।

(श) अपेत्यादि । अगणितमातादिके हे सखि ! अस्य लोभेन त्वया साहसं कृतम् । तदिह प्रिये प्रीते निरपराधेऽपि निर्दयः क्रमः कोऽयम् । केयं परिपाटिरित्यर्थः । कथमीदृशं पतिं त्यक्त्वा निर्दयासीति भावः ।

(ष) उच्छ्वासः संज्ञालाभः ।

(स) मातरित्यादि । मातर्मातरित्यावेगः । द्विधा भवति हृदयमिति पीडा । अवयवसन्धिः शिथिलीभवतीत्यस्वस्थता । विश्वं शून्यं मन्ये

सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ (ख)

कष्टं भोः कष्टम् । (ङ)

बन्धुताहृदयकौमुदीमहो मालतीनयनमुग्धचन्द्रमाः ।
सोऽयमद्य मकरन्दनन्दनो जीवलोकतिलकः प्रलीयते ॥ (च)

हा वयस्य माधव !

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये यस्त्वमासीः ।
तं त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धृता हतोऽस्मि ॥ (क)

---

इति बाह्यासंवेदना निर्वेदः । अविरतज्वालं यथा तथान्तर्ज्वलतीति चिन्ताजनितो दाहः । अन्तरात्मा निरालम्बः सीदन्नवसादं गच्छन् गाढान्धकारे मज्जतीवेति ग्लानिः । विष्वक् सर्वतो मोहश्छादयतीति मोहः । मन्दभाग्योऽहं किं करोमीति दैन्यम् । कथंशब्दः किमित्यर्थे । सर्वनामत्वाच्चानार्थता । विष्वगित्यत्र सुषमादित्वात् षत्वम् ।

(ङ) परिदेवितमाह । कष्टमिति ।

(च) बन्धुतेत्यादि । सोऽयं बन्धुसमूहचित्तकार्तिकपूर्णिमो मालतीनेत्रबालचन्द्रो मकरन्दहर्षजनकः सर्वजनतिलकोऽद्य प्रलयमापद्यत इत्यर्थः । महद्दुःखमेतदित्यर्थः ।

(क) गात्रेष्वित्यादि । यस्त्वं मम काये चन्दनरस आसीः । सुखस्पर्शत्वात् । नेत्रे शारत्कालीनचन्द्रः । आनन्दजनकत्वात् । चित्त आनन्द एव साक्षादेव एवासीः । तं त्वामतिकान्तमकस्मादेव मम जीवनमिवोद्धरतोन्मूलयता कालेन समयेन यमेन वा हतोऽस्मि । यथा जीवनोद्धारेऽहं हतस्तथा त्वदुद्धारेऽपीति भावः ।

सशोकम्।

अकरुण! वितर स्मितोज्ज्वलां

दृशमतिदारुण! देहि मे गिरम्।

सहचरमनुरक्तचेतसं

प्रियमकरन्द! कथं न मन्यसे॥ (ख)

माधवः संज्ञां लभते।

मक। सोच्छ्वासम्। अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नवजलधरस्तोयसीकरासारेण प्रियवयस्यं मे जीवयति। दिष्ट्या समुच्छ्वसितस्तावत्। (ग)

माध। तत्कमत्र विपिने प्रियावार्ताहरं करोमि (घ)। विलोक्य। साधु साधु।

---

(ख) सोन्मादो विलपति। अकरुणेत्यादि। हे निर्दय! हाससनोज्ञां दृशं देहि। हासपूर्वं पश्येत्यर्थः। यद्वा। स्मितेन विकासेनोज्ज्वलां विकसितामित्यर्थः। वचनादानादतिदारुण हे मे वाचं देहि। सितमनुरक्तचित्तं हे प्रियमकरन्द! कथं न मन्यसे। कथं नाङ्गीकरोषि। इष्टावेगादीनां सत्त्वात् करुणो रसः। यदाह। इष्टनाशधनापायबन्धुव्यसनताडनैः। शापक्लेशोपघातैश्च जायते करुणो रसः॥ अश्रुतिश्वासवैवर्ण्यस्रस्ताङ्गैश्च स्मृतिक्षयैः। परिदेवितशोकाद्यैरभिनेयः स सूरिभिः॥

(ग) अचिरधौतत्वेन राजपट्टस्य नीलत्वस्निग्धत्वे उक्ते। राजपट्टं खटीति ख्यातम्। रुचिरा दीप्तिमती मांसला घना छविः कान्तिर्यस्य सः।

(घ) वार्ताहारो दूतः। अतिप्रवृद्धकालतया दूतप्रेषणम्। यदाह। प्रवृद्धमानकामार्तो बहुस्थानगतात्मतः। स्वावस्थादर्शनार्थं तु प्रेषयेद्दूतमात्मनः॥

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलिततनुतरङ्गामुत्तरेण स्रवन्तीम् ।
उपरि विघटमानः प्रौढतापिच्छनीलः
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ (ङ)

सरभसमुत्थायोन्मुखः कृताञ्जलिः ।

कच्चित्सौम्य ! प्रियसहचरी विद्युदालिङ्गति त्वा-
माविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ।
पौरस्त्यो वा सुखयति मरुत्साधुसंवाहनाभि-
र्विष्वग्विभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥ (च)

---

(ङ) फलेत्यादि । नवमेघो गिरेरग्रं श्रयति । फलभारपाक-श्यामजम्बूनिकुञ्जात् स्खलनेनाल्पकल्लोलां नदीमुत्तरेण नद्या उत्तरसमीपे । एनपा द्वितीया । कीदृशः । उपरि विघटमान ऊर्ध्वं स्थानं त्यजन् । विकासितमालपुष्पाच्चीलस्तद्वद्वा नीलः । उपचितघनमालेति पाठ उपचिता घना च माला येषामित्यर्थः । घने नूतनत्वेनातिश्यामता । यद्वा । स्रवन्तीमुपरि विघटमानो विविधप्रकारेण श्रयन् । उत्तरेणोत्तरदेशे । उत्तरेणेति विभक्तिप्रतिरूपको निपातः । किञ्चिद्देवोत्तरेणेतिवत् । आश्रयार्थकतया घटेः सकर्मकता । स्रवन्ती निम्नगापगेत्यमरः । कृताञ्जलिरित्यनेन विनय उक्तः । विनयपूर्वकस्य सन्देशः कार्यः । यदाह । सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् । तस्येयं समयस्येति कथया विनयेन हि ॥

(च) कच्चिदित्यादि । प्रार्थनोचितं शुभगप्रश्नमाह । हे सौम्य सुन्दर ! प्रिया वल्लभा सहचरी सततानुगता विद्युत्त्वामालिङ्गति कच्चित् । कथयेत्यर्थः । कच्चित् कामप्रवेदन इत्यमरः । विरहित्वेन कान्ताभिलाषात्प्रथमं कान्तासंगमप्रश्नः । चाहचन्द्रजयोः सौम्य इति शाश्वतः । प्रियालिङ्गने सुखं तद्विरहे दुःखमिति त्वमपि जानासीति

आकर्ण्य। अये प्रतिरवभरितकन्दरानन्दितोत्कण्ठ-नीलकण्ठकलकेकानुबन्धिना मन्द्रहुंकृतेन मामनुमन्यते। यावदभ्यर्थये। भगवन् जीमूत! (छ)

दैवात्पश्येर्जगति विचरन्निच्छया मत्प्रियां चे-
त्ताश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम्।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः॥ (ज)

---

ध्वनितम्। यद्वा। कश्चिद्देवमभिमतं नमेत्यर्थः। उत्पन्नस्नेहेन सुभगाः सुसुखाख्यातकान्त्वां सेवन्ते। वा समुच्चये। अनेनार्थिसंपत्तिरुक्ता। पुरोवातस्य मृदुप्रेरणाभिस्त्वां सुखयति। अन्योऽपि सहायस्मरणसुहृ-त्प्रभृत्यादिरूपसंवाहनं कुरुत इति ध्वनिः। अनेन सहायसम्पत्ति-रुक्ता। विष्वक् सर्वतो लक्ष्मीं शोभां बिभ्रदिन्द्रधनुः। कर्तृ। लक्ष्म चिह्नं तव तनोति। अनेन प्रसाधनमुक्तम्। विश्वं बिभ्रदिति पाठे चिह्नं तव तनोति। अनेन प्रसाधनमुक्तम्। विश्वं बिभ्रदिति पाठे हे विश्वं बिभ्रद्भुवनं दधान। वर्षेण शस्यादिसम्पत्त्या जगदुपकारक-त्वमुक्तम्। प्रसाधनमाह। इन्द्रधनूरूपं चिह्नं तव शोभां तनोति। विम्बं बिम्बदिति पाठे तु विम्बं मण्डलं शोभां तनोति। कीदृशम्। इन्द्रधनुश्चिह्नं बिभ्रद्दधानम्। तदिह जगदुपकारकतया ममाप्युप-कारं करिष्यसीति भावः।

(छ) गर्जितेनानुमतिमाह। अये इति। प्रतिशब्दभरितकन्दर-त्वेनानन्दिता सम्बद्धोत्कण्ठा यस्य सः। यद्वा। आनन्दिता हृष्टा उत्कण्ठा उद्ग्रीवा इत्यर्थः। मन्द्रं गभीरम्। अनुमन्यते स्वीकरोति। आर्तिवशाद्देवत्वारोपणेन भगवन्निति। अवधारणे यावत्। जीमूत मेघ।

(ज) दैवादित्यादि। इच्छया जगति विचरंस्त्वं मत्प्रियां यदि दैववशात्पश्येर्द्रक्ष्यसि तदा प्रथमं तां प्रबोध्याथ माधवदशां कथयि-ष्यसि। अवस्थानिवेदनेन तन्मरणमाशङ्क्याह। कथयता त्वयाशा पुनः-

सहर्षम्। अये प्रचलितस्तदन्यतः संवरामि (झ)। परिक्रामति।

माध। साकूतम्। कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति। हा तात! हा अम्ब! हा भगवति! परित्रायस्व परित्रायस्व। पश्य माधवस्यावस्थाम्। (ञ)

माध। धिक् प्रमादः। (ट)

नवेषु लोध्रप्रसवेषु कान्ति-
र्दृशः कुरङ्गीषु गतं गजेषु।
लतासु नम्रत्वमिति प्रमथ्य
व्यक्तं विभक्ता विपिने प्रिया मे॥ (ठ)

---

संगमप्रत्याशा सैव तन्तुः। जीवनबन्धहेतुत्वात्। नैरात्म्यमुच्छेदः। चैवार्थे। अत्र हेतुमाह। स आशातन्तुरेकस्तस्याः प्राणत्राणं कष्टाकष्ट्या करोति नाहमित्यर्थः। इह तावत्कालं सा जीवति न वेति सम्भावना दर्शनस्य दैवादित्यनेनोक्तम्। प्रसङ्गतो मत्कार्य्यमिति जगति विचरन्नित्यनेनोक्तम्। मत्प्रियामित्यनेन सुकुमारत्वादिना विरहदुःखासहिष्णुतोक्ता। आदावाश्वासनं वार्त्ताश्रवणपटुत्वार्थम्। अत्यन्तमित्यनेन मध्यमविधया दशाकथनम्। तेन च तन्नैराश्यनिषेध इत्युक्तम्। कथमपीत्यनेनाशातन्तुमात्रं तद्रक्षणाय कल्पत इत्युक्तम्। आयताक्ष्या इत्यनेन कटाक्षादिस्मरणेन गुणकीर्त्तनम्। माधवस्येयं माधवीया। दृष्टाऽङ्कः। उन्मादावस्थेयम्। असंबद्धप्रलापात्।

(झ) सहर्षत्वं मद्वचनमङ्गीकृत्य प्रचलित इति।

(ञ) उपरागो राहुग्रासः। शैशवे संकटप्रदेशे पित्रादीनां स्मरणस्य स्वभ्यस्ततया विरहसंकटेऽपि तदाह हा तातेति।

(ट) प्रमादोऽनिष्टम्।

(ठ) नवेष्वित्यादि। नूतनलोध्रपुष्पेषु कान्तिः पाण्डिमा गौरत्वं वा। इह नवपदेन स्निग्धतोक्ता। दृशो विलोकितानि हरिणीषु।

हा प्रिये मालति !

मक । सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमपि सहपांसुक्रीडनप्रौढसख्ये ।
प्रियजनविरहाधिव्याधिवेगं दधाने
हतहृदय ! विदीर्य त्वं द्विधा न प्रयासि ॥ (ड)

माध । सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः । भवत्वेवं तावत् । उच्चैः । अयमहं भोः प्रणिपत्य भूधरारण्यवासिनः सत्त्वान्विज्ञापयामि मां मुहूर्तमवधानदानेनानुगृह्णन्तु भवन्तः । ( ढ )

---

गमनं हस्तिषु । नम्रत्वं लतासु । इतिशब्द आश्चर्ये । हेवा बीलेत्यसौ हावा इतिवत् । प्रमथ्य मारयित्वा मे प्रिया विपिने विभक्ता खण्डखण्डीकृत्य धृता । यद्वा । इतिः प्रकारार्थः । तेन लोध्रप्रसवादिभिर्मे प्रिया विभागीकृता । कान्त्यादिविभागद्वारा प्रियाविभागखोत्प्रेक्षायत इत्यवधेयम् । विपिन इति प्राणिवधस्थानाभिप्रायम् ।

(ड) सुहृदीत्यादि । हे हतहृदय ! कथमपि विदीर्य द्विधा त्वं न प्रयासि । हतेति निन्दायाम् । मित्रे गुणनिधानेऽतिप्रेमवति जीवेश्वरे सहधूलिक्रीडागाढ़मैत्रे कान्ताविरहजनोव्यथाव्याधिमन्तर्दधाने सति । सुहृदित्यादौ हेतुहेतुमद्भावः । धूलिः स्त्रियां पांसुर्नेत्यमरः ।

(ढ) प्रियाविभागाशङ्कां निरस्यति सुलभेति । संनिवेशः प्रकारः । अनुकारः सादृश्यम् । तथा च लोध्रप्रसवादीनि प्रियाकान्त्याद्यनुकारीणि न तु सा विभक्तेति भावः । सत्त्वान् प्राणिनो विज्ञापयामीति सानुनयं वचनम् ।

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा विदितमथ वास्याः किमभवत् ।
वयोऽवस्थां तस्याः शृणुत सुहृदो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ (थ)

कष्टं भोः कष्टम् ।

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवादुच्छिखण्डः
कान्तामन्तःप्रमोदादभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः
कं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ (त)

---

(थ) भवद्भिरित्यादि । भवद्भिरिहस्थैः सर्वाङ्गेषु स्वभावरम्या सा कुलवधूर्दृष्टा वा । अथवास्या भवद्भिः किं विदितमभवत् । शुभमशुभं वा किं विज्ञातमित्यर्थः । ननु तस्याः किं वय इत्याह । हे सुहृदस्तस्या वयोवस्थां शृणुत । यत्र वयोवस्थायां हृदि मदनः प्रगल्भव्यापारो वपुषि मुग्धो बालश्चरति । एतेन वयःसन्धिरुक्ता । सर्वाङ्गेत्यनेनाभिज्ञानप्रकाशनम् । कुलवधूत्वेन चाञ्चल्याभावः । इहस्थैरित्यनेन परिचयचातुरी । वाकारद्वयेन दर्शनवृत्तान्तयोः सफलत्वं दर्शयति । सुरते निःसाध्वसता प्रागल्भ्यं समुदाहृतम् ॥ इति भरतः ।

(त) केकाभिरिति । किं यत्र तत्र याचे । अपि तु न किमपि प्रार्थये । यतोऽप्रस्तावग्रस्तोऽर्थिभावोऽर्थित्वम् । अनवसरमाह । नृत्यादुद्धतपिच्छभारो मयूरः केकाभिर्वचनं छादयति । चकोरः पक्षिभेदो मत्ततया भ्रमत्तारकः संश्चित्तहर्षात् प्रियामभिसरति । गोलाङ्गूलः श्यामसुखो वानरः पुष्पजधूल्या कान्तायाः कपोलौ चित्रयति । अतः सर्वानामन्यत्रासक्ततयार्थित्वानवसर इति भावः । प्लवङ्गकीशप्लवगगोलाङ्गूलवलीमुखा इत्यमरमाला । कं याच इति पाठे कं प्रार्थिनं प्रार्थय इत्यर्थः ।

अयं च । दन्तच्छदारुणिमरञ्जितकान्तदन्त-

मुखस्य चुम्बति वलीवदनः प्रियायाः ।

काम्पिल्लकप्रसवपाटलगण्डपाली-

पाकारुणस्फुटितदाडिमकान्ति वक्त्रम् ॥ (थ)

एष प्रियतमास्कन्धविन्यस्तकरः करी । कथमत्राप्यनवसरः ।

कण्डूकुड्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिखन्

पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् ।

अग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पय-

न्नन्यो वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति ॥ (द)

अन्यतोऽवलोक्य । अयं तु ।

नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं

नास्वादात्सरसः करोति कवलानावर्जितैः शैवलैः ।

---

(थ) दन्तेत्यादि । वलीवदनो वानरोऽयं कान्ताया मुखमुन्नमय्य चुम्बति । कीदृशम् । अधररागेण रक्ता मनोज्ञा दशना यत्र तत् । काम्पिल्लो रोचनीवृक्षः । स्वार्थे कन् । तस्य प्रसवेन पुष्पेण फलेन वा रक्तगण्डप्रदेशः । पाकान्तरमतिशपाकस्ततः स्फुटितं विदीर्णं यद्दाडिमफलं तत्कान्ति । तत्समभित्यर्थः । तदिहाप्यनवसर एव । शाखामृगवलीमुखा इत्यमरः । काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपीत्यमरः । रोहितानोकहो रोहवृक्षः ।

(द) कण्ड्वित्यादि । अयं मुक्तो वन्यहस्त्यस्याः प्रियायाः परिचयप्रागल्भ्यं सुरतनिःसाध्वसतामनुतिष्ठति । कीदृशः । कण्डूतिमुद्रितेक्षणां प्रियां दन्ताग्रेणालिखन्नोपद्रुलिखन् । कण्डूयन्नित्यर्थः । अत एव कण्डूकाले कुड्मलितेक्षणत्वं जातिः । पर्यायेण क्रमेण निष्क्षिप्तौ कर्णौ तयोर्वातैः सुखदैर्वीजयन् । कवलितार्धैर्नवशल्लकीपल्लवैरस्याः प्राणधारणं कल्पयन् ।

(ध) नान्तरित्यादि । अयं स्तम्बेरमो हस्ती ताम्यति ग्लानो

दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥ (ध)

अलमनेनायासितेन । एष सानन्दसहचरीसमाकर्ण्यमानमधुरगम्भीरकण्ठगर्जितध्वनिरपरो मत्तमातङ्गयूथपालः प्रत्यग्रविकसितकदम्बसंघातसुरभिशीतलामोदबहलसंवलितमांसलकपोलनिष्यन्दकर्दमितकषायमुद्दलितकमलिनीखण्डविप्रकीर्णपर्णकमलकेसरमृणालबिसकन्दकोमलाङ्कुरनिकरमनवरतप्रवृत्तकमनीयकर्णतालताण्डवप्रचलजर्जरितजलतरङ्गविततनीहारमुच्चस्तकुररसारसं सरोऽवगाह्य विहरति । भवत्वाभाषे । महाभाग नागपते ! श्लाघ्ययौवनः खल्वसि कान्तानुवृत्तिचातुर्यमप्यस्ति भवतः । किं तु । सापवादम् । (न)

---

भवति । नूनं निश्चितं प्रेयसीविश्लेषेण विह्वलः । जलदेषु ध्वनत्सु सतृष्णोऽपि गम्भीरमुन्नतकण्ठगर्जनं नान्तर्वर्तयति न करोति । समीपस्थान्सरसश्चावर्जितैर्मिलितैः शैवलैः कवलान्न करोति । मदहान्या यो विषादस्तेन मूकानां भ्रमराणां व्यासङ्गेनान्यचित्ततया शोच्यमुखः । यद्वा । व्यासङ्गो विशेषेणासङ्ग इत्यर्थः । तदिह मदहानिश्चिन्तया सन्तापात् । दीनत्वमधोमुखचिन्तनात् । एतेनानुरक्तिसञ्जाता विषयव्यावृत्तिरुक्ता ।

(न) बहुमिवायमपि कान्तातिरिक्तमन्यत्र वर्त्तीयत आह । अलमिति । रतोत्सुक्यान्मधुरकण्ठगर्जितमस्याहा सानन्देति । मातङ्गो हस्ती । सम्पातः सम्पर्कः । संवलितो मिलितः । मांसलः पीनः । निष्यन्दो मदः । कषायः सुगन्धिः । करटो गण्डदेशः । सुरभौ च कषायः स्यादिति शाश्वतः । समुद्दलितमुन्मूलितम् । पर्णं पत्रम् । तालो गीतक्रियामाने मध्यमाङ्गुलिसंमित इत्यमरमाला । नीहारस्तु

वीलीत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः सीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम्॥ (प)

कथमवधीरणानीरसं व्रजति। हन्त मूढ़ एवास्मि योऽस्मिन्वनेचरे वयस्यमकरन्दोचितं व्यवहरामि। हा प्रियवयस्य! (फ)

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
धिगेव रमणीयतां त्वदनुभावभावाद्दृते।
त्वया सह न भाति योऽत्र दिवसोऽपि स ध्वंसतां
प्रमोदमृगतृष्णिका धिगपरत्र या जायते॥ (ब)

---

कुररविकेति हारावली। कुररः पक्षिभेदः। अनुवृत्तिः सेवा। सापवादं सदोषम्।

(प) वीलेत्यादि। क्रीडोन्मूलितविसदण्डकवलसमाप्तिषु विकस्वरसुरभितस्य जलस्य गण्डूषसंक्रान्तयः सम्बन्धाः सम्पादिता दत्ताः। पुष्यदिति पाठे पुष्टीभवदित्यर्थः। करेणः कणवता स्थूलहस्तेन सेकः कृतः। तदिदं द्वयं कामं युक्तमेव। दोषमाह। विरामे सरोऽवगाहविरतौ गमनकाले पुनरकुटिलनालपद्मपत्रच्छत्रं न स्नेहाद्धृतम्। एतदयुक्तमित्यर्थः। अतः कान्तानुवृत्तिं न जानासीति भावः। पुष्करम्भोवहाग्र वेत्यमरः। गण्डूषपदेन स्वयं पीत्वा जलदानं ध्वनितम्। नलिनी पद्मिनी पद्मभित्यमरः। अरालः कुटिले मतम्। इति मेदिनीकारः। आतपात्त्रायत इत्यातपत्रमित्युचितं पदम्।

(फ) चलाचलत्वेन पार्श्वस्थं मित्रमपश्यन् सखेदमाह कथमिति।

(ब) धिगित्यादि। इत्थमेकाकिनो मम यदुच्छ्वसितवैशसं प्राणधारणदुःखं तद्धिग् वृथा। एकाकित्वमत्र हेतुः। धिगेव रमणीयवस्तु-

मक । अये उन्मादमोहान्तरितोऽपि मां प्रति कुतश्चिद् व्यञ्जनात्प्रबुद्ध एवास्य सहजस्नेहसंस्कारस्तदसंनिहितमेव मां मन्यते (भ) । पुरः स्थित्वा । एष पार्श्वचर एव ते मकरन्दो मन्दभाग्यः ।

माध । प्रियवयस्य ! संभावय परिष्वजस्व माम् । प्रियां तु मालतीं प्रति निराशः परिश्रान्तोऽस्मि (म) । इति मूर्च्छति ।

मक । सहर्षम् । एष संभावयामि जीवितेश्वरम् । विलोक्य सकरुणम् । हा कष्टम् । आविर्भूतमत्परिष्वङ्गोत्कण्ठ एव

---

नुभवान् दृष्टाभाविन इति मुख्यपाठः । रम्यपदार्थविषयानुभवान्निष्फलो-त्पादृशीलान्धिक् । रमणीयवस्त्वनुभवादिति पाठे दृष्टाभाविनोऽनुभवा-द्रम्यवस्तु धिक् । निष्फलं तज्ज्ञानमित्यर्थः । धिगेव रमणीयतां त्वदनुभावभावाद्दृत इति पाठे मम सौन्दर्यादिकं धिक् । कुतः । तवा-नुभावः सहभावस्तत्र भावोऽभिप्रायस्तं विना । यद्वा । अनुभावे वागङ्गसत्त्वाभिनये भावः सत्त्वं तं विना । वागङ्गसत्त्वाभिन-येऽनुभावस्तु स्मृतो बुधैः ॥ इति भरतः । भावादित्यृते योगे पञ्चमी । त्वया मकरन्देन तया मालत्या च सह यो दिवसो नास्ति सोऽपि दिवसो विलीयताम् । अन्यत्र मालतीमकरन्दाभ्यां या प्रमो-दमृगतृष्णा मम जायते तामपि धिक् । युवाभ्यां विना दैवान्मे हर्षोऽप्याभासीभूत इति भावः । अत एव प्रमोदस्य मृगतृष्णाया रूपको-पालीकत्वमुक्तम् ।

(भ) उन्माददशायामनिश्चयाद्यतः कुतश्चिदित्युक्तम् । व्यञ्जकात्सं-स्काराभिव्यञ्जकात् । प्रबुद्धः उद्बुद्धः ।

(म) संभावय पालय । अमाद्वैराग्याच्च मूर्च्छेत्येतदर्थं निराश इत्युक्तम् ।

निश्चेतनः संवृत्तः। तत्कृतमिदानीमाशाव्यसनेन। सर्वथैव मे नास्ति वयस्य इति युक्तः परिच्छेदः (य)। हा वयस्य!

यत्स्नेहसंज्वरवता हृदयेन नित्य-
माबद्धवेपथु विनापि निमित्तयोगात्।
तद्व्यापदो गणयता भयमन्वभावि
तत्सर्वमेकपद एव मम प्रशान्तम्॥ (र)

सखे वरं त एवातिक्रान्ता मुहूर्तास्तथाविधमपि भवन्तं येषु चेतयमानमनुभूतवानस्मि (ल)। इदानीं तु

भारः कायो जीवितं वज्रकीलं
काष्ठाः शून्या निष्फलानीन्द्रियाणि।

---

(य) जीवितेश्वरमित्यनेन तुल्या जीवनसामग्र्यनु युक्ता। निश्चेष्टः प्रलययुक्तजनाकृतिः। परिच्छेदो निश्चयः।

(र) यदित्यादि। स्नेहरूपसन्तापवता हृदा विनापि भयकारणेन सकम्पं भयं नित्यमन्वभाव्यनुभूतं यत्तत्सर्वं मम भयं त्वदीयविपत्तीर्गणयतः संभावयत एकस्मिन् क्षणे परिसमाप्तम्। कदा ते किं स्यादित्यादिभयं प्रकृतदशया प्रशान्तमिति भावः। एतत्पक्षे गणयतेति पाठे विधिनेत्यर्थात्। यद्वा। त्वद्व्यापदो गणयता हृदा यद्भयमनुभूतं तदधुना गतमित्यर्थः। तथा च तन्निमित्तमधुना तु स्वहेतुकैव विपदिति भावः।

(ल) वरं मनागिष्टे। मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययमिति शाश्वतः। अव्ययानामनेकार्थत्वादुक्तोऽर्थः सुलभ एव। चेतयमानं चेतनावन्तम्। भार इत्यादि। कायो भारो धर्तुमशक्यः। भारबाधकतया व्याधिः।

(व) जीवनं वज्रकीलकमनुच्छेदात्। अनेन मर्मच्छेदः। मर्मच्छेदेन चिन्ता। दिशः शून्या इति जडता। इन्द्रियाणि नेत्रादीन्-

कष्टः कालो मां प्रति त्वत्प्रयाणे
श्रान्तालोकः सर्वतो जीवलोकः ॥ (व)

विचिन्त्य । तत्किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति जीवामि । भवतु मुष्माद्गिरिशिखरात् पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि (श) ।

किंचित्परिक्रम्य सकरुणं निश्चल्यावलोक्य च । कष्टं भोः कष्टम् ।

तदेतदसितोत्पलद्युतिशरीरमस्मिन्नभू-
न्ममातिदृढपीड़नैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितविस्मया बत निपीतवत्यः पुरा
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥ (ष)

---

फलानि कार्याक्षमाणि । वाह्यविषयाग्रहाद्दैन्यम् । कालः कष्टो दुःखदः । दैन्येन जीवनाक्षमता । संसारः सर्वत्र प्रशान्तदर्शनः । यथा च त्वां विना न सञ्जीवनमिति भावः । त्वत्प्रयाणे तव गमने विनाश इति यावत् । रतिसम्मोयम् । मां प्रतीति सर्वत्र योज्यम् । यद्वा । पृथिव्यादिद्रव्यनवके प्रधानद्रव्यदूषणेन दोषमाह । तत्र काय इति पृथिव्या जीवनमित्यात्मनः काष्ठा इति दिश इन्द्रियाणोन्तीन्द्रियाणां काल इति कालस्य लोक इति विषयाणां दोष उक्तः । श्रान्तालोकोऽनुपभोग्य इत्यर्थः ।

(श) अस्तमयो विनाशः । व्याधिदशायामयम् । यदाह । निर्वेदश्चैव चिन्ता च दैन्यं ग्लानिः श्रमस्तथा । जडता मरणं चैव व्याधौ तु करुणेऽपि च ॥ पाटलावती नदीभेदः । प्रियदर्शनार्थं निवर्तनम् । मूर्च्छां दृष्ट्वा सकरुणम् ।

(ष) तादृशं दृष्ट्वा सखेदमाह । तदित्यादि । सखे ! यत्तवाङ्गं नीलनलिनश्यामं तदेतत् । अस्मिन्नङ्गे गाढासङ्गैरप्यालिङ्गनैर्मम तृप्तिर्नाभूत् । यदङ्गं नवस्नेहविलासव्याकुलमालतीदृष्टय उपचिताद्भुताः पूर्वं निपीतवत्यो नित्यादरेणावलोकितवत्य इत्यर्थः । बत खेदे ।

आश्चर्यम् । एतस्यां तनावचरमे वयसि तावतो गुणसमाहारस्य (ख) संनिवेशः कथमिवाभूत् । सखे माधव !

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं
संजातश्च घनाघनो जलधरः क्षीणश्च वायोर्जवात् ।
निर्वृत्तश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना
त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥ (छ)

तत् परिष्वजेऽहं तावदेवं गतमपि वयस्यम् । प्रार्थितस्थानेन संप्रत्येवायमर्थः । परिष्वज्य । हा वयस्य ! विमलविद्यानिधे गुणगुरो मालतीस्वयंग्राहजीवितेश्वर कामन्दकीमकरन्दानन्दनचन्द्र माधव अयमन्ते जन्मन्यपश्चिमः पश्चिमावस्थाप्रार्थितो मकरन्दबाहुपरिष्वङ्गः (ज) । संप्रति मुहूर्तमपि मकरन्दो जीवतीति मैव मंस्थाः ।

---

(ख) अचरमे नूतने । समाहारो मेलकः ।

(छ) आपूर्ण इत्यादि । सखे ! त्वं संसारस्य चूडामणीभूतश्च मरणं प्राप्तश्च । अत्र तुल्ययोगितया दृष्टान्तमाह । निर्मलश्चन्द्रः कलाभिः पूर्णश्च राहुग्रस्तश्च । मेघो घनाघनो वर्षुकाब्दश्च वातवेगाद्विशकलितश्च । द्रुमश्रेष्ठः फलेग्रहिः फलभारवान्निर्वृत्तो जातश्च वनाग्निना दग्धश्च । यथा त्वमपीत्यर्थः । घनाघनो मत्तगजे वर्षुकाब्दमहेन्द्रयोरित्यमरमाला । यद्वा । घनाघनोऽतिनिविडः । घनशब्दस्यैवावृत्त्या प्रयोगाद्द्रवद्दवद् इतिवत् । फलेग्रहिर्निपातनात् । फलानि गृह्णाति धारयतीति फलेग्रहिः । स्यादवन्ध्यः फलेग्रहिरित्यमरः ।

(ज) एवं गतं मूर्च्छितम् । अयमर्थ आलिङ्गनरूपः । मया वञ्छितशेषः । अपश्चिमो दुर्लभः । पश्चिमावस्था शेषावस्था ।

आजन्मनः सहनिवासितया मयैव
मातुः पयोधरपयोऽपि समं निपीय ।
त्वं पुण्डरीकमुख बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ (क)

सकरुणं विमुच्य परिक्रम्य च । इयमधस्तात् पाटलावती । भगवति आपगे ! प्रियस्य सुहृदो यत्र मम तत्रैव संभवो भूयादमुष्य भूयोऽपि भूयासमनुसंचरः (ख) । इति पतितु-मिच्छति ।

प्रविश्य सौदामिनी । वारयित्वा । वत्स ! कृतं साहसेन ।

मक । विलोक्य । अयि कासि । किमहं त्वया प्रतिषिद्धः ।

सौदा । आयुष्मन् ! किं त्वं मकरन्दः ।

मक । मुग्धे स एवास्मि मन्दभाग्यः ।

सौदा । वत्स ! योगिन्यस्मि मालत्यभिज्ञानं च धारयामि । इति बकुलमालां दर्शयति ।

मक । सोच्छ्वासं सकरुणम् । आर्ये अपि जीवति मालती ।

सौदा । अथ किम् । अपि च वत्स ! किमत्याहितं (ग)

---

(क) आजन्मेत्यादि । हे पद्मास्य ! जन्मन आरभ्य मयैव समं तुल्यगृहतया मातुः स्तन्यं पीत्वाधुना त्वमेको निवापसलिलं प्रेतोदकाञ्जलिं बन्धुसमूहेन दत्तं पिबसीत्येतदयोग्यम् । सहपानार्थमहमप्यागच्छामीत्यर्थः । निवापः पितृदेये स्यादित्यमरः ।

(ख) आपगा नदी । प्रियस्येत्यादि । मित्रस्य सम्भव उत्पत्तिर्यत्र ममापि तत्रैव भूयात् । अमुत्रापरस्मिँल्लोके पुनरप्यस्यानुचरो भूयासमित्यर्थः । भूयादित्यादौ प्रार्थनायां लिङ् ।

(ग) अत्याहितं महोद्वेगोऽभूत् ।

माधवस्य यदनिष्टं व्यवसितोऽसीत्याकम्पितास्मि। अथ माधवः क।

मक। आर्ये! तमहं प्रमुग्धमेव वैराग्यात् परित्यज्यागतस्तदेहि तूर्णं संभावयावः। इति त्वरितं परिक्रामतः।

माध। आश्वस्य। अये प्रतिबोधित एवास्मि केनापि। विचिन्त्य। नूनमस्यायमभिनवजीमूतजलविन्दुवाहिनः प्रभञ्जनस्यानपेक्षितास्मदवस्थो व्यापारः (घ)।

मक। विलोक्य। दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः।

सौदा। विलोक्य। संवदत्युभयोर्मालतीनिवेदितः शरीराकारः (ङ)।

माध। भगवन् पौरस्त्यपवन!

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्
कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान्।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथामकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे॥ (च)

---

(घ) प्रभञ्जनो वायुः।

(ङ) उभयोर्माधवमकरन्दयोः।

(च) मूर्च्छयैव तं सोपालम्भमाह। भगवन्निति। पौरस्त्येत्यनेन भिन्नदेशकथनम्। तेन सहजलतिमवैरशङ्का निरस्ता। तव विरहिदुःखमेव न लक्ष्यम्। अपि त्वन्यदपीत्याह। भ्रमयेत्यादि। जलपूर्णान्मेघांश्चालय। कोकिलान् हर्षय। केकयोत्कण्ठानूर्ध्वगलान् सेच्छान् वा मयूरान् कलय नर्तय। कलेरनेकार्थत्वात्। केतकान् केतकीवृक्षान् कठोरय कोरकितान् कुरु। कोरकितत्वेन निम्नोन्नतकेतकीवृक्षान्... तया कठोरत्वम्। केतक्यामपि केतक इति शब्दभेदः। अत एव केतकाधानहेतोरिति मेघदूते। यद्वा। केतकीपुष्पाणि कठोरय विका-

मक । सुवृत्तमखिलजन्तुजीवनेन मातरिश्वना । (ङ)

माध । देव वायो ! तथापि भवन्तमेवं प्रार्थये । (ज)

विकसत्कदम्बनिकुरम्बपांसुना
सह जीवितं वह मम प्रिया यतः ।
अथ वा तदङ्गपरिवासशीतलं
मयि किंचिदर्पय भवान् हि मे गतिः ॥ (झ)

कृताञ्जलिः प्रणमति ।

---

मय । तत् करोतीति णिच् । कस्मिन् पक्षे लिङ्गमविवक्षितम् । लोकाश्रयत्वाल्लिङ्गव्यत्यय इत्यवधेयम् । विरहिजने मूर्च्छां प्राप्य व्यथां स्फोटयति सति पुनः संज्ञाव्याधिं चेतनारूपं रोगं कृत्वा किं त्वमिच्छसि । महता दुःखितदुःखशान्तिः क्रियते । त्वं प्रबोध्य दुःखयसीत्यनर्हम् । अत एवाकरुण इत्युक्तम् । प्रमोदय चातङ्कानित्यपि पाठः । प्रथमपाठे तु कोकिलप्रमोदो वर्षास्वपि कविसंप्रदाये वर्ण्यत इत्यवधेयम् ।

(ङ) मातरिश्वा वायुः । वातीति वायुरित्युचितपदन्यासेन जीवनयोग्यतोक्ता ।

(ज) तथाप्यनिष्टकरणादपि ।

(झ) विकसदित्यादि । मम प्रिया यतो यत्र तं देशं मम जीवितं प्रफुल्लकदम्बसमूहधूल्या सह प्रापय । घटय मे इति वा पाठः । सा विरहदीना म्रियेतातस्तज्जीवनाय मज्जीवितं नयेति भावः । पांसुना सहेत्यनेन परमाणुरूपं मे मनोऽपि तत्समूहे गमिष्यतीति न ते प्रयासोऽपि स्यादित्युक्तम् । नो वा प्रियाङ्गसदावस्थितिहिमं यत्किंचिदस्तु मयि तदर्पय देहि । ईरयेति पाठे प्रेरयेत्यर्थः । तदेव मे तापशान्त्यै स्यादिति भावः । अत्र हेतुमाह । यतो मम भवान् गतिराश्रयः । आश्रयस्याश्रितजीवनं युक्तमेवेति भावः । अपि वेति पाठेऽपिः संभावनायाम् ।

सौदा। सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः (ञ)।

अञ्जलौ मालां मुञ्चति।

माध। साकूतविस्मयहर्षम्। कथमियमस्मद्विरचिता प्रियतमास्तनोत्साहदुर्ललितमूर्त्तिरनङ्गमन्दिराङ्गनबकुलप्रसवमाला (ट)। निरूप्य सहर्षम्। कः संदेहः। तथा हि। स एवायमस्याः।

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविशृङ्खलकुतूहलनिह्नवाय।
दुर्व्यस्तपुष्परचितोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितोऽपि भागः॥ (ठ)

---

(ञ) समाहितो युक्तः। वायुप्रार्थनाप्रकरणात्।

(ट) प्रियाङ्गसङ्गिमालालोकात्सहर्षत्वम्। यदाह। प्राप्ये वाप्यप्राप्ये लब्धेऽर्थे प्रियसमागमे वापि। हृदयमनोरथलाभे हर्षः संजायते पुंसाम्॥ उत्साह उत्सेध उपरिस्थितं वा। दुर्ललितातिप्रिया। अनङ्ग एव मन्दिरमनङ्गस्य वा मन्दिरम्।

(ठ) मुग्धेत्यादि। अस्या मालायाः स एवायं भागो यो लवङ्गिकाया अपि सन्तोषमकरोत्। अपिपदान्मालत्या अपोत्यर्थः। विषमं ग्रथितं ग्रन्थना यत्र सः। विषमेण ग्रथित इति वा। अत्र हेतुमाह। मुग्धं मनोज्ञमिन्दुकान्तं यन्मालतीमुखम्। यद्वा। विरहात् क्षामत्वादिना बालेन्दुवत् कान्तं यत्तदास्यं तदालोके सति हेलया शृङ्गारचेष्टया विशृङ्खलं सर्वत्र वर्तमानं यत् कौतुकं तद्गोपनाय दुर्व्यस्तैः पूर्वग्रथनादन्यथा दत्तैः पुष्पै रचितः। एतत्तु प्रथमाङ्क एवं व्यक्तम्। नह हेला स्त्रीविषया। यदाह भरतः। यौवने विंशति स्त्रीणां विकारा नेत्रपातजाः। आदौ त्रयोऽङ्गजास्तेषां दश स्वाभाविकास्तथा॥ तत्राङ्गजेषु हावहेलालक्षणम्। अचिभ्रुवोर्विकाराद्याः शृङ्गारस्य च

सहर्षोन्मादमुत्थाय । प्रिये मालति ! ननु इयं वीक्ष्यसे ।

सकोपमिव । अयि ( ड ) मदवस्थानभिज्ञे !

प्रयान्तीव प्राणाः सुतनु ! हृदयं ध्वंसत इव
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय-
स्तदक्ष्णोरानन्दं वितर मयि मा भूरकरुणा ॥ ( ढ )

---

सूचकाः । व्यभिचारिणो भावा हावास्तेभ्यः समुत्थिताः ॥ य एव हावः सैवासौ शृङ्गाररससम्भवा । समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ अतो माधवे हेलेत्ययुक्तम् । नैवम् । स्त्रीणामित्युपलक्षणत्वात् पुरुषेऽपि कामावस्थासाम्याद्धेलावचनात् । यदाह । हेला हावस्य भावस्य व्याजो विभ्रमभाषणम् । चाटुः प्रेमाभिसन्धानं चकितं च विलासितम् ॥ तत्र रागतः सहसा प्रवृत्तौ हेतुश्चित्तोल्लासो हेलेति । यद्वा । अवलोक्यत इत्यवलोकः । कर्मणि घञ् । इन्दुसुन्दरमालतीमुखेऽवलोक्या दृश्या या हेला तया विस्तृतं यन्माधवस्य कुतूहलं तद्गोपनायेत्यर्थः ।

(ड) सङ्कल्पलिखितप्रियादर्शनाद्धर्षः । दर्शनाप्राप्त्यापुनराह । नन्विति । अलाभ्यलाभादुपालभ्यतेऽयोति ।

(ढ) परिहासाददर्शनमाशङ्क्य तदनवसरमाह । प्रायन्तीत्यादि । प्राणः प्रयान्तीव सर्वतः शून्यत्वात् । हे सुतनु ! मनो ध्वंसत इव । मोहात् । अङ्गज्वलनमतिदाहात् । एतेन व्याधिरुक्तः । सर्वतस्तमः प्रसरतीव । अनेन जडता । सकलेन्द्रियाणामग्रहात् । जडतानन्तरं मरणशङ्कायामाश्वास एव युक्त इत्याह त्वरेति । खलु निश्चये । यत एवं ततो नेत्रप्रीतिं देहि । स्वं दर्शयेत्यर्थः । मद्विषये निर्दया मा भविष्यसि । यद्वा । अकरुणा मा भून भवसि । माङि लुङिति कालसामान्ये लुङ् । पूर्वकरुणेदानीमपि निर्वाह्यतामित्यर्थः । इवशब्द उत्प्रेक्षायाम् ।

सर्वतो दृष्ट्वा सनिर्वेदम्। कुतोऽत्र मालती। बकुलमाला-मुद्दिश्य। अयि प्रियाप्रणयिनि बकुलमाले! उपकारिण्यसि। अतः स्वागतं भवत्याः।

निष्प्रत्यूहाः प्रियसखि! यदा दुःसहाः संबभूवु-
र्देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः।
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव
प्राणत्राणं प्रगुणमभवन्मत्परिष्वङ्गकल्पः॥ (थ)

सकरुणं निर्वर्ण्य।

आनन्दमिश्रमदनज्वरदीपनानि
गाढानुरागरसवन्ति तदा तदा च।
स्नेहाकराणि मम मुग्धदृशश्च कण्ठे
कष्टं स्मरामि तव तानि गतागतानि॥ (त)

---

(थ) निरित्यादि। यदा मालत्याः मन्माथ्याः कामोन्मादोद्वेगा निर्विघ्ना अत्यर्थं दुःसहा अङ्गदाहदुःखमहान्तस्तद्दुःखोपदेशकाराः सम्बभूवुः संभूयोद्गतास्तत्र काले तस्यास्त्वदालिङ्गनमेव शीघ्रं प्राणरक्षकमभूत्। अत एव मदालिङ्गनतुल्यः। उन्माथ उन्मथनमुद्वेग इति यावत्। प्रगुणमिति पाठे प्रकृष्टगुणमित्यर्थः। क्रियाविशेषणं वा। कामदुःखोद्वेगस्य प्रियसङ्गस्याभावादविघ्नत्वम्। मालतीप्रणयित्वात् प्रियसखि इति। दुःसहत्वमद्भुतिकरणात्। उद्दाह उद्गतदाहः। व्यसनस्थाने व्यथन इति पाठे व्यथनं पीडा। अधुना मालां विनास्याः कथं जीवनं भविष्यतीति भावः। निर्वर्ण्य निरूप्य।

(त) आनन्देत्यादि। मम मालत्याश्च कण्ठे तव तानि गतागतानि स्मरामि। स्मरणस्यातिदुःखदत्वात् कष्टम्। तदा तदा तस्मिंस्तस्मिन् काले। तत्र चोरिकाविवाहात् पूर्वं मालतीकण्ठगतेति गतं चरमिन् काले। तत्र चोरिकाविवाहाद् पूर्वं मालतीकण्ठगतेति गतं चोरिकाविवाहे मालत्या ऽङ्कावुद्धा माधवकण्ठमागतेत्यागतमित्येकम्। चोरिकाविवाहे मालत्या

इति हृदये निधाय मूर्च्छति ।

मक । उपसृत्य वीजयन् । सखे ! समाश्वसिहि समाश्वसिहि ।

माध । आश्वस्य । मकरन्द ! किं न पश्यसि कुतोऽपि सहसैव मालतीस्नेहं वहतो वकुलदाम्नो लाभः । तत्कथं नुमन्य से कुत एतदिति ।

मक । वयस्य ! इयमार्या योगीश्वर्यस्य मालत्यभिज्ञानस्योपनेत्री ।

माध । विलोक्य सकरुणं कृताञ्जलिः । आर्ये ! प्रसीद कथय जीवति मे प्रिया । (य)

सौदा । वत्स ! समाश्वसिहि समाश्वसिहि जीवति सा कल्याणी ।

माधवमकरन्दौ । सम्रुच्छ्वस्य । आर्ये ! यद्येवं तत् कथय क एष वृत्तान्त इति ।

सौदा । पुरा किल करालायतने मालतीमुपहरन्घोरघण्टः करवालपाणिर्माधवेन व्यापादितः ।

---

माधवकण्ठनीतातो गतमथ तन्मुखदर्शनात्स्वकण्ठेऽर्पितेत्यागतमिति द्वितीयम् । पुनस्तत्र प्रणयवशान्माधवेन मालत्यै दत्तेति गतमिदानीं तु सौदामिन्या मालतीसकाशादानीय दत्तेति त्रीणि गतागतानि । अतएव बहुवचनम् । कीदृशानि । तद्दशायामन्तरान्तरा हर्षलाभादानन्दमिश्रितकामतापप्रकाशनानि । दृढानुरागरसयोगीनि । स्नेहस्याकरो येषु तानि । स्नेहं प्रीतिमाकुर्वन्ति व्याकुर्वन्तीति स्नेहाकराणि । कृञो हेत्वित्यादिना टप्रत्ययः । तदा तदा चेति चकारात् कालान्तरपरिग्रहः ।

(य) आर्या मान्या ।

माध। सावेगम्। आर्ये! विरम विरम विज्ञातो वृत्तान्तः।

मक। सखे! क इव।

माध। सखे किमन्यत्। सकामा कपालकुण्डलेति। (द)

मक। आर्ये! अप्येवम्।

सौदा। एवं यथा विदितं वत्सेन।

मक। भोः कष्टम्।

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय संगता।
सुकृतं तदस्तु कतमस्त्वयं विधि-
र्यदकालमेघविततिर्व्ययूयुजत्॥ (ध)

माध। हा प्रिये मालति! कष्टमतिबीभत्समापन्नासि। (न)

कथमिव तदाभवस्त्वं कमलमुखि कपालकुण्डलाग्रस्ता।
उत्पातधूमलेखाक्रान्तेव कला शशधरस्य॥ (प)

---

(द) सकामा मदपकारेण सिद्धप्रतिज्ञेत्यर्थः।

(ध) कुमुदेत्यादि। कुमुदसमूहेन यदि शरच्चन्द्रचन्द्रिका सौन्दर्यगुणार्थं संगता प्राप्ता तत् सुकृतं शोभनकरणमस्तु। द्वयोरपि रम्यत्वात्। अयं पुनः कः प्रकारः कुत्सितप्रकारो वा यदकालमेघपङ्क्तिर्व्ययूयुजद्वियोजयामास विच्छेदं कृतवतीत्यर्थः। ध्वनिनात्र कुमुदाकरो माधवश्चन्द्रिका मालती मेघसन्ततिः कपालकुण्डलेत्युक्तम्।

(न) अतिबीभत्समिति। उद्वेगहेतुकपालकुण्डलादर्शनाद्बीभत्सः। यदाह। उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति॥

(प) कथमित्यादि। तत्कवलिता, हे पद्ममुखि! तदा त्वमपि कथमभवः। भयात् कथं त्वमासीः किं त्वयोक्तं कस्ते त्राताभूदित्यादि-

भगवति कपालकुण्डले ! (फ)

निर्माणमेव हि तदादरलालनीयं
मा पूतनात्वमुपगाः शिवतातिरेधि ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न मुसलैरवताडनानि ॥ (ब)

सौदा । वत्स ! अलमावेगेन ।

अकरिष्यदसौ पापमतिनिष्करुणैव सा ।
नाभविष्यमहं तव यदि तत्परिपन्थिनी ॥ (भ)

---

ज्ञापनाय कथमिति सामान्यनिर्देशः । कौतुकवल्लिता चन्द्रकलेव । एतद्रूपमया बीभत्सजविषादसम्भवा ग्लानिरस्पृष्टा । यदाह । अपस्मारस्तथोन्मादो विषादो मद एव च । मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससम्भवाः ॥

(फ) स्त्रीबालं नैव घातयेदिति निजधर्मं जानत्या त्वया सा घातितेति सोल्लुण्ठमाह भगवति इति ।

(ब) निर्माणमित्यादि । तन्निर्माणं मालतीरूपादिकमेव तदादरेण रक्षणीयं भवति । रम्यत्वादेव । पूतनात्वं राक्षसीत्वं तन्नाशेन मोपगा मा गमिष्यसि । यद्वा । मांसं मे ततो भक्षयितव्यं किमिति चिन्तकत्वं पूतनात्वम् । पूतनत्वमिति पाठे राक्षसत्वमित्यर्थः । पूतना राक्षसीभेदे हरीतक्यां च पूतनेति विश्वः । शिवतातिः कल्याणकर्त्र्येधि भव । शिव इत्यबोधीरिति पाठे तन्निर्माणं शिवे कल्याणनिमित्तमित्यज्ञासीः । शिवतामुपैतीति पाठे तन्निर्माणम् । कर्तृ । शिवतां कल्याणत्वं गच्छति । अतः पालनमस्य । भद्रवस्तुपुरस्कारः स्वभावादेवेत्याह । मनोहरस्य ख्यातस्य सुगन्धस्य वा पुष्पस्य मस्तके धृतिः स्वभावसिद्धा । न पादैः पीडनानि स्वभावसिद्धानीत्यर्थः ।

(भ) अकरिष्यदित्यादि । असौ कपालकुण्डला पापं तद्वधरूप-

उभौ । प्रणम्य । अतिप्रसन्नमार्यापादैः (म) । तत् कथय का पुनस्त्वमस्माकमेवंविधा बन्धुः ।

सौदा । आस्यथः खल्वेतत् (य) । उत्थाय । इयमह-मिदानीं

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।
इमामाकर्षिणीं सिद्धिमातनोमि शिवाय वः ॥ (र)

इति समाधवा निष्क्रान्ता ।

मक । आश्चर्यमाश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

विलोक्य सभयम् ।

कथमिह न वयस्यस्तत् किमेतत् । विचिन्त्य । किमन्यत्
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् ॥ (ल)

---

मकरिष्यदेव । अतिनिष्करुणा यतः सा । यदि तत्र स्थाने वधे वा तस्या विरोधिनी नाहमभविष्यम् । क्रियातिपत्तौ लृङ् । बुद्धिप्रत्यक्षतयामावितिः ।

(म) अतिप्रसन्नं प्रसादः कृतः ।

(य) आस्यथः । युवामित्यर्थात् ।

(र) गुर्वित्यादि । गुरुचर्या गुरुसेवा गुर्वी चर्या विशिष्टमनुष्ठानम् । तपश्चान्द्रायणादि । तन्त्रं मण्डलवर्तनादि । मन्त्रस्ताराप्रभृतिदेवीनां तन्त्रस्य वागमस्य वा मन्त्रः । योगः समाधिः । एष्वभियोगादभ्यासाज्जातामिमामाकर्षिणीं सिद्धिं युष्माकं कल्याणाय विस्तारयामि ।

(ल) व्यतिकर इत्यादि । मालतीवार्तया कथम्ज्ञानादयं तामसोऽन्धकारजः । अत एव भीमः । तज्जीवनज्ञानाद्वैद्युतश्चायं विद्युत्

सवितर्कम्। किमयमर्थोऽनर्थ इति संप्रति प्रमुग्धोऽस्मि। (व)

अपि च। अस्तोकविस्मयमपस्मृतपूर्ववृत्त-
मुद्भूतनूतनभयज्वरजर्जरं नः।
एकक्षणत्रुटितसंघटितप्रमोद-
मानन्दशोकशबलत्वमुपैति चेतः॥ (श)

तदत्र कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवतीं-

---

सम्बन्धो। व्यतिकरः सम्पर्कः। अत एवानन्दाम्बुसम्भारेणोपहतनेत्रवृत्तिः। कीदृशः। क्षणमुद्भूय शान्तः। अत एव विद्युद्विद्योतो वितर्कः। कथमिहस्थाने वयस्यो माधवोऽपि नास्ति। तत् किमिदं क्व गतः केन वा स नीत इति विचिन्त्येत्यर्थः। निर्णयमाह। अन्यत् किम्। यत इयं योगेश्वरी निजतपःप्रभावेण प्रभवति। अनया नीत इति भावः।

(व) संशय्याह किमयमिति। सौदामिनीनयनेऽर्थः प्रयोजनं कपालकुण्डलानयनेऽनर्थ इति भावः।

(श) अस्तोकेत्यादि। अस्माकं चित्तम्। कर्तृ। हर्षशोकाभ्यां शबलत्वं मिश्रत्वं गच्छति। कीदृशम्। अनल्पाश्चर्यम्। एकदैव नानारससम्भवात्। अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीहरणरूपं यत्र। अत एवानन्दः। उद्भूतं नवं भयं माधवापकारशङ्काकृतं तेन ज्वरेण जीर्णम्। अत एव शोकः। यद्वा। माधवानवलोकनेनोद्भूतनवशङ्काज्वरजर्जरतया शोकः। एकक्षण एव त्रुटितो घटितश्च प्रमोदो यत्र तत्। मालतीलाभसम्भावनया त्रुटितो माधवापकारसम्भावनया घटित इति भावः। अत एवात्याश्चर्यम्। स्तोकशब्दोऽल्पपर्यायः। अस्मद्वर्गेण मदयन्तिकालवङ्गिकाभ्याम्। विपिनद्वारमिति कस्मिंश्चित् पुस्तके पाठो दृश्यते तत्राद्दश्यमानामित्यर्थः।

अन्विष्य तस्या वृत्तान्तमेनं कथयामि (घ) । इति निष्क्रान्तः ।

सौदामिनीदर्शनो नाम नवमोऽङ्कः । (ङ)

---

## दशमोऽङ्कः ।

ततः प्रविशति कामन्दकी लवङ्गिका मदयन्तिका च । (क)

काम । सकरुणं मालम् । हा वत्से मालति मदङ्कालंकारिणि ! क्वासि देहि मे प्रतिवचनम् । (ख)

आ जन्मनः प्रतिमुहूर्तविशेषरम्या-
ण्याचेष्टितानि तव संप्रति तानि तानि ।
चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयं च विदारयन्ति ॥ (ग)

---

(घ) भगवतीं कामन्दकीम् । अनेनाग्रिमाङ्कावतारस्यापि सूचनादङ्कावतारोऽयम् ।

(ङ) प्राकृत यं रत्नधरोऽतिविद्यो विद्योतिविद्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणोऽङ्को गलत्ववीने नवमोऽनवद्यः ॥
इति नवमोऽङ्कः ।

---

(क) सहाय्यवर्गैर्षेत्यव्यवधान एव सूचनात् तत्प्रवेशमाह । तत इति ।

(ख) मालतीविश्लेषं श्रुत्वा विलपति हेत्यादि ।

(ग) आ जन्मन इत्यादि । जन्मन आरभ्य प्रतिक्षणाधिक्यमनो-

अपि च । पुत्रि !

अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ (घ)

इतरे । सास्रम् । हा पिअसहि सुप्पसण्णमुहअन्दसुन्दरि ! कहिं गदासि को वा सिरीसकुसुमसुउमारस्स दे सरीरस्स देव्वदुव्विणअपरिणामो एक्कलिआए उवणदो । महाभाअ

(१) हा प्रियसखि ! सुप्रसन्नमुखचन्द्रसुन्दरि ! क्व गतासि को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य देवदुर्विनयपरिणाम एकाकिन्या

स्थानि तव तानि तानि पूर्वानुभूतान्याचेष्टितानि विनयादीनि संस्मृतानि सन्ति मेऽङ्गं दहन्ति चित्तं च दारयन्ति । अनेन बाह्या मानसी च पीड़ोक्ता । तथा चाटूनि वाक्कौशलानि स्मृतानि दाहादिकं कुर्वन्ति । विनयादीनामद्वेषकारितया रम्यत्वम् । चाटूनि कीदृशानि । चारूणि शोभावन्ति मधुराण्यनुल्वणानि च । यदाह । सर्वास्वावस्थाविशेषेषु दीप्तेषु ललितेषु च । अनुल्वणत्वं चेष्टानां माधुर्यमिति संज्ञितम् ॥

(घ) अनियतेत्यादि । बालायास्तवास्यपद्मं स्मरामि । कीदृशम् । अस्थिरे क्रन्दनहासे यत्र तत् । शोभमानकिञ्चिन्मृदुदशनकलिकाग्रम् । सम्यक्स्थानप्रयत्नाभावात् स्खलत् । तत्त्वज्ञान्यासमञ्जसं संख्यातिक्रमादज्ञानाद्वासमञ्जसम् । मुग्धमर्थाभावात् । जल्पितं मन्दोक्तिर्यत्र तत् । सर्वत्र शैशवमेव हेतुः । कमलकमित्यत्राल्पार्थे कन् । सम्यगञ्जसा तत्त्वेन वर्तत इति समञ्जसमिति । अञ्जसा तत्त्वतूर्णयोरिति विश्वः । मञ्जु जल्पितमिति पाठे मञ्जु मनोहरम् ।

माहव ! उवत्थिदत्थमिदमहूसवो दे जीअलोओ संवुत्तो (१) । (ङ)

काम । सविशेषखेदम् । हा वत्सौ !

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः ।

लवलीलवङ्गयोरिव नियतिमहावात्ययाऽभिहतः ॥ (च)

लव । सोद्वेगम् । हदास वज्जमअ ! सव्वहा फिसंससि हिअअ (२) । (छ) इति हृदयमाहत्य पतति ।

---

उपनतः । महाभाग माधव ! उपस्थितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः ।

(२) हताश ! वज्रमय ! सर्वथा ध्वंससमसि हृदय ।

---

(ङ) अनेकाकिन्या एकमात्रस्वरूपायाः । आदावुपस्थितोऽथास्तमितो महोत्सवो यत्र सः ।

(च) अभिनवेत्यादि । अभिनवे रागेऽनुरागे रस इच्छा यत्र । यद्वा । अभिनवरागो नूतनासक्तो रसः शृङ्गारो यत्र । कृतं कौतुकं हर्षो नर्मोत्सवो वा यत्र । सोऽयं भवतोर्युवयोः परिष्वङ्ग आलिङ्गनं नियतिर्दैवं सैव महावात्या तयाभिहतः । लवली लताभेदः । लवङ्गो वृक्षभेदः । तयोः परिष्वङ्गः सम्पर्क इव । अभिनवौ लौहित्यरसौ यत्र सः । रस आर्द्रता । कृतं कौतुकं कुतूहलं द्रष्टॄणां येन सः । रागोऽनुरागे लौहित्य इति विश्वः । शृङ्गारादौ द्रवे वापीच्छायामप्ययं रस इति धरणिः । कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । कुतूहलेऽपि तत्प्रोक्तमिति मेदिनीकारः । तदिहाचेतनोपमया तयोरपि बालयोर्वृक्षविवाह इव मया विवाहोऽप्यकारि दैवेन स न सोढ इत्युक्तम् । देशान्तरनयनान्नियतेर्वात्यया सह रूपकम् ।

(छ) अत्र ध्वंसं नाटकम् ।

मद। सहि लवङ्गिए! णं भणामि खणमेत्तअं वि दाव समस्सस (१) ।

लव। सहि! किं करेमि दिढवज्जलेवपडिबद्धणिच्चलं विअ जीविदं ण मं परिच्चअदि (२)। (ज)

काम। वत्से मालति! जन्मनः प्रभृति वल्लभा ते लवङ्गिका तत्किमुज्जिहानजीवितां वराकीं नानुकम्पसे। (झ)

इयं हि। उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते।

मलीमसमुखी वर्तिः प्रदीपशिखया यथा॥ (ञ)

कथं च कल्याणि! कामन्दकीं त्यजसि नन्वकरुणे! मदीयचीवरोसणैव ते प्रगुणीकृतान्यङ्गानि। (ट)

---

(१) सखि लवङ्गिके! ननु भणामि क्षणमात्रमपि तावत् समाश्वसिहि।

(२) सखि! किं करोमि दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं न मां परित्यजति।

---

(ज) अत्र प्रतिबद्धं घटितमत एव निश्चलम्।

(झ) उज्जिहानमूर्ध्वं गतम्। कण्ठोपगतमिति यावत्।

(ञ) उज्ज्वलेत्यादि लवङ्गिकामुद्दिश्य। त्वया त्यक्तेयं न शोभते प्रदीपशिखया त्यक्ता वर्तिरिव दशेव। उज्ज्वल आलोको दर्शनं यस्यास्तया। शिखापक्ष आलोक उद्द्योतः। स्निग्धा प्रीता। स्नेहवती तैलादियोगात्। मलीमसं म्लानं मुखमाननं यस्याः सा। मलीमसं दग्धतया श्यामं मुखमग्रं यस्याः सा च।

(ट) प्रगुणीकृतानि ऋजूकृतानि। उत्क्रान्त्यनन्तरं नाडीनां शुद्धत्वेनर्जुकरणात्। यद्वा। प्रगुणता शुद्धिः।

स्तन्यत्यागात् प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीड़ायोग तदनु विनयं प्रापिता वर्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ (ठ)

सवैक्लव्यम् (ड) । चन्द्रमुखि ! संप्रति निराशास्मि ।

अकारणस्मेरमनोहराननः
शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया
मया न दृष्टस्तनयः स्तनंधयः ॥ (ढ)

---

(ठ) स्तन्येत्यादि । तेन हेतुना मातुः सकाशादधिकः स्नेहोऽयं मयि तव युक्तः । यद्वा । तेन हेतुनायं वियोगस्तव युक्त इति श्लोकार्थम् । यतः स्तनपानत्यागादारभ्य क्रीड़ायोगं खेलम् । यद्वा । क्रीड़ा कला योगो विद्याप्रयोगस्त्वं प्रापिता । ततः पश्चाद्विनयमनौद्धत्यं प्रापिता वृद्धिं प्रापिता च । दन्तपाञ्चालिकेव दन्तमयकृत्रिमपुत्तलिकेव । जनेषु श्रेष्ठे शोभादिगुणयुक्ते जामातरि त्वं स्थिरीकृता । परिणयात् । मयैव न तु पित्रादिनेत्यर्थः । बाल्य एव कान्तिमत्त्वात् सुमुखीत्युक्तम् । पाञ्चालिका पुत्तलिकायामिति विश्वः । पाञ्चालिकापि क्रीडादिकं कार्यत इति प्रसिद्धमेव । विद्याभ्यासो बाल्य एव स्त्रीणाम् । यदाह । बाल्येऽधीयित विद्यां स्त्री कामशास्त्रादिकं पुनः ॥ पुरुषगुणा अपि भरते । शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च । ललितौदार्यतेजांसि पौरुषेया गुणा अपि ॥

(ड) करुणस्नेहाद्विक्लवता ।

(ढ) अकारणेत्यादि । विगतभाग्यया मया तव पुत्रो न दृष्टः । कीदृशः । अकारणेनानवगतहेतुतया स्मेरमीषद्धसनं तेन मनोज्ञं मुखं यस्य सः । शिखायां ललाटे च दत्तश्वेतसर्षपः । एतत्तु रक्षार्थे । क्रोड़े सुप्तः । स्तनपायी च ।

लव । भअवदि ! पसीद णीसहह्मि संपदं जीविदुव्व-हणेण । साहं इमादो गिरिसिहरादो अत्ताणअं अवधु-णिअ णिव्वुदा भविस्सं (च)। तहा मे भअवदी आसिसं करेदु जेण जम्मन्तरेवि पिअसहिं पेक्खिस्सं । (१)

काम । ननु लवङ्गिके ! कामन्दक्यपि नातः परं वत्सा-वियोगेन जीविष्यति समस्वायमुत्कण्ठावेग आवयोः । (त)

किं च । संगमः कर्मणां भेदाद्यदि न स्यान्न नाम सः ।
प्राणानां तु परित्यागे संतापोपशमः फलम् ॥ (थ)

लव । जहा तुह्मे आणवेध (२) । उत्तष्ठति ।

काम । सदयं वीक्ष्य । वत्से मदयन्तिके !

---

(१) भगवति ! प्रसीद निःसहास्मि साम्प्रतं जीवितोद्वहनेन । साहमस्माद्गिरिशिखरादात्मानमवधूय निर्वृता भविष्यामि । तथा मे भगवत्याशिषं करोतु येन जन्मान्तरेऽपि प्रियसखीं प्रेक्षिष्ये ।

(२) यथा यूयमाज्ञापयथ ।

---

(च) अत जीवितेति ।• तां विना जीवनमनर्हमिति भावः । निर्वृतेति । मरणे तद्वियोगदुःखापनयादिति भावः ।

(त) उत्कण्ठेति । जन्मान्तरे तां द्रक्ष्यामीत्युत्कण्ठा ममापी-त्यर्थः । तत् कथं मयापि स्वतोऽसिद्धतया त्वयाशोदातव्येति भावः ।

(थ) सङ्गमेत्यादि । कर्मणां वैचित्र्यादस्माकं मालत्या सह सङ्गमो न स्यात् । अनागमो निर्युक्तिको यतः सः । मालत्या मम च कर्मणां साम्ये मानाभावाज्जन्मान्तरे सङ्गमो निर्युक्तिक इति भावः । तर्हि प्राणत्यागेनालमत आह । प्राणत्यागः पुनस्तापशान्तिफलः । तथाच तदर्थं स क्रियत इति भावः । सङ्गमाभावे तु मानम् । स्मृतोऽपि मातुषः शक्तो नानुगन्तुं मृतं जनम् । जायावर्जं च सर्वस्य याम्यः पन्था विभिद्यते ॥ इति स्मृतिः ।

मद। किं आणवेध। अग्गेसरी होहिन्ति। अवहिदह्मि (१)। (द)

लव। सहि! पसीद विरम एत्तो अत्तणो वावादणादो। मा एदं जणं विसुमरेसि (२)। (ध)

मद। सकोपमिव। अवेहि णाह्मि दे वसंगदा (३)। (न)

काम। हन्त निश्चितं वराक्या। (प)

मद। स्वगतम्। णाह मअरन्द! णमो णमो दे (४)। (फ)

लव। भअवदि! अअं ज्जेव्व मधुमदीसोत्तसंदाणिदपवित्तमेहलो महीहरविडङ्गो (५)। (ब)

---

(१) किमाज्ञापयथ। अग्रेसरी भवति। अवहितास्मि।

(२) सखि! प्रसीद विरमैतस्मादात्मनो व्यापादनात्। मैतं जनं विस्मरसि।

(३) अपेहि नास्मि ते वशंगता।

(४) नाथ मकरन्द! नमो नमस्ते।

(५) भगवति! अयमेव मधुमतीस्रोतःसन्दानितपवित्रमेखलो महीधरविटङ्कः।

---

(द) भाविवाक्यसूचीयाह किमिति। अत्राग्रेसरी मरणे प्रथमा। अवहिता मर्तुम्।

(ध) अत्राहं म्रिय इत्याशयः।

(न) अत्र वशंवदायत्ता। ते वचो न करिष्यामीत्यर्थः।

(प) निश्चितं निश्चयः कृतः।

(फ) स्वगतं गुरुसमीपे प्रियस्मरणस्यायुक्तत्वात्। अत्र जन्मान्तरेऽप्ययं प्रियः स्यादिति तत्कालेऽस्य स्मरणमिति भावः।

(ब) अत्र मधुमती नदी। संदानितं बद्धम्। विटङ्को निम्नोन्नतप्रदेशः। विटङ्क उन्नते देश इति रत्नकोशः।

काम । ज्ञातमिदानीं प्रस्तुतान्तरायेण । सर्वः पतितुमिच्छन्ति ।

नेपथ्ये । आश्चर्यमाश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

काम । विलोक्य । साद्भुतहर्षम् ।

कथमिह मम वत्सस्तात्किमेतत्

प्रविश्य मकरन्दः । किमन्यत्
प्रभवति हि महिम्ना स्वेन योगीश्वरीयम् ॥

नेपथ्ये । कथमतिदारुणो जनसंमर्दो वर्तते ।

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीवितेषु ।
निश्चित्य वह्निपतनाय सुवर्णविन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ (भ)

मदयन्तिकालवङ्गिके । भत्ति मालवीमाहवाणं दंसणब्भुदग्रो भत्ति अचाहिदं अ (१) । (म)

(१) झटिति मालतीमाधवयोर्दर्शनाभ्युदयो झटित्यत्याहितं च ।

(भ) मकरन्दः कश्चिद्वनेचर आह । मालतीत्यादि । भूरिवसु-र्निश्चित्य निश्चयं कृत्वा वह्निपतनायाग्निं प्रवेष्टुं सुवर्णविन्दुं शिवं लक्ष्मी-कत्यागच्छति । कीदृशः । मालतीमरणं ज्ञात्वा संसारविषयेष्वैश्वर्या-दिषु जीवितेषु प्राणधारणेषु च विरक्तं विवेकशालि । निर्विण्णा-मिति यावत् । चेतो यस्य सः । विरक्तेति पाठः सुगम एव । जीवि-तेष्विति बहुवचनं प्राणधारणक्रियाणां बहुत्वात् । अधुना भूरिवसु-वियोगे सति हताः स्मः ।

(म) अत्यात्याहितं महाभीतिः ।

कामन्दकीमकरन्दौ। दिष्ट्या। हा धिक्कष्टम्। आश्चर्यमाश्चर्यम्।

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः।
अनलस्फुलिङ्गकलितः किमयमलम्नः सुधावर्षः॥ (य)
संजीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम्।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते॥ (र)

नेपथ्ये। हा ताद! विरम विरम दंसणसुप्पहिं दे वयणकमलस्स। पसीद संभावेहि मं। कधं मम कारणादो समत्तलोआलोअन्तरालविक्खादणिम्मलकुलेक्कमङ्गलप्पदीवभूदं अत्ताणअं परिच्चअसि। मए उण अणज्जाए णिरणुक्कोसा तुम्हे त्ति संभाविदं आसि (१)। (ल)

---

(१) हा तात! विरम विरम दर्शनोत्सुकास्मि ते वदनकमलस्य। प्रसीद संभावय माम्। कथं मम कारणात्समस्तलोकालोकान्तरालविख्यातनिर्मलकुलैकमङ्गलप्रदीपभूतात्मानं परित्यजसि। मया पुनरनार्यया निरनुक्रोशा यूयमिति संभावितमासीत्।

---

(य) किमित्यादि। असयः खड्गाः पत्राणि यस्य वृक्षस्य। दारकत्वात्। चन्दनरसच्छटा आश्चर्यात्। आसारो वृष्टिः। तयोरेकदावपातः पतनं किमयम्। भूरिवसुमतानर्थस्ववधादसिपत्रपातः। मालतीमाधवयोर्जीवनाच्चन्दनरसासार इति भावः। किमयं मेघहीनोऽम्लतरघोऽग्निस्फुलिङ्गमिश्रः।

(र) समित्यादि। सञ्जीवनौषधेर्विषस्य च व्यतिकरं मेलकं तेजस्तिमिरस्य च मेलकं वज्रस्य चन्द्रकरस्य च मिलनं विधाताद्य सदृशीकरोतीत्यर्थः। आर्याच्छन्दः।

(ल) समस्त लोको जगत्। आलोकः स्वर्गः। तयोर्मध्य इत्यर्थः।

काम । हा वत्से !

जन्मान्तरादिव पुनः कथमपि लब्धासि यावदयमपरः।
उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थः ॥ (व)

इतरे । हा पिअसहि (१) ।

ततः प्रविशति प्रमुग्धां (श) मालतीं धारयन्माधवः ।

माध । कष्टं भोः कष्टम् । (ष)

एषा प्रवासं कथमप्यतीत्य
याता पुनः संशयमन्यथैव ।
को नाम पाकाभिमुखस्य जन्तु-
द्वाराणि दैवस्य पिधातुमीष्टे ॥ (स)

---

(१) हा प्रियसखि !

---

नकुलं श्रेयः । अनार्यया बालया । निरनुक्रोशा निर्दयाः । नन्दनाय दानोपक्रमात् ।

(व) जन्मेत्यादि । उपरागो राहुग्रहः । यथा कृष्णपक्षाज्जन्मान्तराच्चन्द्रस्यैका कलोपलभ्यते तां च कवलयितुं राहुरुपस्थितस्तथा तावकीनमिदं वृत्तान्तस्वरूपमिति भावः ।

(श) प्रमुग्धां पितृशोकजनितमोहात् ।

(ष) अनर्थपरंपरायोगादतिकष्टम् ।

(स) एषेत्यादि । इयं मालती प्रवासमतीतापि राक्षसीहस्तमतिक्रान्तापि पुनरन्यथैव कथं संशयं प्राप्ता । पितृशोकात् । अत्रोपपत्तिमाह । फलदानाभिमुखस्य भाग्यस्य द्वाराणि सुखदुःखोपनयनानि निवारयितुं को नाम जन्तुरीष्टे समर्थो भवति । अपि तु न कोऽपीत्यर्थः । प्रवासः परहस्ते च परदेशेऽपि कथ्यत इति नानार्थः । नामानवक्लृप्तौ । द्वाराणीति बहुत्वेन निवारणेऽशक्यतोक्ता ।

मक। सङ्कोपलब्ध्य माधवं प्रति। सखे अथ सा योगिनी क्व।

माध। श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः।
करुणवनेचरवचनादनन्तरं तां न पश्यामि ॥ (ङ)

कामन्दकीमकरन्दौ। सप्रणयमाकाशे। महाभागे! पुनस्त्रायस्व नः किमर्थमन्तर्हितासि।

लवङ्गिकामदयन्तिके। सहि मालदि! णं भणामि सहि मालदि! त्ति (च)। सौत्कम्पम्। भअवदि! परित्ताहि चिरणिरुद्धणीसासणिप्फुरं (क) से हिअअं। हा अमच्च! हा पिअसहि! दुवे वि तुह्मे परप्परावसाणस्स कारणं जादा (१)।

काम। हा वत्से मालति!

माध। हा प्रिये!

मक। हा प्रियसखि। सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते।

---

(१) सखि मालति! ननु भणामि सखि मालति! इति। भगवति! परित्रायस्व चिरनिरुद्धनिःश्वासनिःस्फुरमस्या हृदयम्। हा अमात्य! हा प्रियसखि! द्वावपि युवां परस्परावसानस्य कारणं जातौ।

---

(ङ) श्रीपर्वतादिति। श्रीपर्वतादहमिह सत्वरमतिशीघ्रमपतमागतोऽस्मि। तया मालत्या सह। करुणाप्रधानवनेचरवचनादनन्तरं तां मालतीं न पश्यामि। मालत्यपायमधिगम्येत्यादि करुणवनेचरवचनम्। आर्याच्छन्दः।

(च) सखि मालति! ननु भणामि सखि मालति! इति प्रलापक्रमोऽयम्।

(क) अत्र निःस्फुरं चलनशून्यम्।

काम । ऊर्ध्वमवलोक्य । तत्किमेष झटिति पात्यमानादि-वाम्बुदादम्बुनिवहः परिस्खलन्नस्मान् प्रीणयति । (ख)

माध । सोच्छ्वासम् । अये प्रत्यापन्नचेतना मालती (ग) । तथाह्यस्याः

भवति विततश्वासोन्नाहप्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।
तदनु वदनं मूर्च्छाच्छेदात्प्रसादि विराजते
परिगतमिव प्रारम्भेऽङ्कः श्रिया सरसीरुहम् ॥ (घ)

नेपथ्ये । अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निमुखे पतन् ।
सपदि भूरिवसुर्विनिवर्तितो
मम गिरा गुरुसंमदविस्मयः ॥ (ङ)

---

(ख) सौदामिनीप्रभावकृतवृष्ट्याश्चर्यमाह । किमिति । मेघाभा-वात् वृष्टेराश्चर्यहेतुतयेवकारः संगच्छते ।

(ग) प्रत्यापन्नं पुनरायातम् ।

(घ) भवतीत्यादि । अस्या नासा दीर्घश्वासा भवति । चलना-देव । प्रसन्नस्तनं हृदयमपि भवति । चक्षुश्च स्निग्धं सन्निजप्रकृति-स्थिरं भवति । तदनु तत्पश्चान्मुखम् । कर्तृ । मूर्च्छापगमात्प्रसन्नं शोभते शोभया सर्वतो व्याप्तं पद्ममिव । परिणतमिति पाठे विकसितमित्यर्थः । विततश्वासोन्नाहप्रणुन्नपयोधरमिति पाठे दीर्घ-श्वासस्योन्नाहेनोद्गमेन प्रेरितौ स्तनौ यत्र तदित्यर्थः ।

(ङ) अवीत्यादि । तत्क्षणं मद्वाक्यामात्यो निवर्तते । कीदृशः । नन्दनसहितं नृपं पादनतमपि तिरस्कृत्याग्निसमूहे पतन् । गाढ-हर्षाश्चर्यश्च । सद्भावस्य विकल्पात्सहनन्दनमिति ।

माधवमकरन्दौ । ऊर्ध्वमवलोक्य सहर्षम् । भगवति ! दिष्ट्या वर्धसे ।

सा योगिन्यम्बरतो विघटितजलदाभ्युपैत्ययं यस्याः ।
वागमृतजलासारो जलदजलासारमतिशेते ॥ (च)

काम । प्रियं प्रियं नः ।

माल । दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि (१) । (छ)

काम । सहर्षं सवाष्पं च । एह्येहि पुत्रि मालति !

माल । कधं भअवदी (२) । इति पादयोर्निपतति ।

काम । उत्थाप्यालिङ्ग्य मूर्ध्न्याघ्राय ।

जीव जीवितसमाय जीवितं
देहि जीवतु सुहृज्जनश्च ते ।
अङ्कैस्तुहिनसङ्गशीतलैः
पुत्रि ! मां प्रियसखीं च जीवय । (ज)

माध । वयस्य मकरन्द ! संप्रत्युपादेयो माधवस्य जीवलोकः संवृत्तः ।

---

(१) दिष्ट्या प्रत्युज्जीवितास्मि ।

(२) कथं भगवती ।

---

(च) सेत्यादि । सेयं योगिनी भिन्नमेघा संप्रत्यायाति यस्या अयं वागमृतजलासारो वचनामृतजलधारा जलधरजलधारामप्यतिक्रामति । सौहित्यादिना ततोऽप्यधिका भवतीत्यर्थः ।

(छ) अत्र चिरस्य बहुकालेन ।

(ज) जीवेत्यादि । हे पुत्रि ! त्वं जीव । ततो वल्लभाय जीवितं देहि । त्वज्जीवनात्सुहृदोऽपि ते जीवन्तु । प्रशस्ताङ्गैः । प्रशस्तार्थे कन् । हिमसम्बन्धशीतलैर्मां लवङ्गिकां च जीवय ।

मक। सहर्षम्। एवमेतत्।

मदयन्तिकालवङ्गिके। पिअसहि मणोरहादिक्कन्तदंसणे! संभावेहि अङ्गे परिस्सङ्गेण (१)। (भ)

माल। हा पिअसहिओ (२)। उभे आलिङ्गति।

काम। वत्सौ! किमेतत्।

माधवमकरन्दौ। भगवति!

कपालकुण्डलाकोपदुर्जातजनितापदः।
वयमप्युद्धृताः कृच्छ्रान्निर्बन्धादार्ययानया॥ (ञ)

काम। कथमघोरघण्टवधविजृम्भितमेतत्।

मदयन्तिकालवङ्गिके। अहो अच्चरीअं पुणरुत्तदारुणस्स परिणामरमणीअत्तणं विहिणो (३)। (ट)

प्रविश्य सौदामिनी। उपसृत्य। भगवति कामन्दकि! स एष चिरन्तनोऽन्तेवासी जनः प्रणमति।

काम। अये भद्रा सौदामिनी।

---

(१) प्रियसखि मनोरथातिक्रान्तदर्शने! संभावयावां परिष्वङ्गेन।

(२) हा प्रियसख्यौ!

(३) अहो आश्चर्यं पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः।

---

(भ) संभावय योजय।

(ञ) कपालेत्यादि। अनया सौदामिन्या कपालकुण्डलारोषाद् दुर्जातं मालत्यपहरणरूपं तज्जनितविपत्तेः सकाशात् कृच्छ्रात्संकटान्निर्बन्धेनातिप्रयत्नेन वयमुद्धृताः।

(ट) अत्र पुनःशोककारितया पुनरुक्तदारुणत्वम्। प्रतिकूलस्यैव विधेरधुनानुकूलत्वमित्याश्चर्यम्।

माधवमकरन्दौ । सविस्मयम् । कथमियं भगवत्याः पक्षपातस्थानमाद्यशिष्या सौदामिनी । तत्सर्वमधुना संगच्छते ।

काम । एह्येहि भूरिजनजीवितदानपुण्य-

संभारधारिणि ! चिरादसि हन्त दृष्टा ।

दत्तप्रमोदमपि नन्दय मे शरीर-

मालिङ्ग्य सौहृदनिधे ! विरम प्रणामात् ॥ (ठ)

अपि च । वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-

रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।

यस्याः पुरापरिचयप्रतिबद्धबीज-

मुद्भूतभूरिफलशालि विजृम्भितं ते ॥ (ड)

---

(ठ) एहीत्यादि । मालतीरक्षणेन बहुजनरक्षणजन्यपुण्यनिवहधारिके हे चिरेण त्वं दृष्टासि । अतो हेतोस्त्वमेह्यागच्छ । हन्त हर्षे । ममाङ्गमालिङ्ग्य हर्षय । शरीरं कीदृशम् । दत्तानन्दमपि मालतीदर्शनेनेति भावः । हे सौहृदाश्रये ! नतेर्विरम । त्वमेव नमस्या यतः ।

(ड) तदेवाह । वन्द्येत्यादि । त्वमेव संसारस्य नमस्या । एवंविधैर्विलसितैराकाशक्रमणरूपैर्वा श्लाघनीयसिद्धिस्त्वं यतः । कीदृशैः । बोधिसत्त्वा जीमूतवाहनादयः । तानप्यतिक्रामन्ति तैः । तेषामेकैकजीवनात्त्वया त्वनेकजीवनादतिशय इति भावः । यद्वा । बोधिसत्त्वो बुद्धविशेषः । तदतिक्रमवर्तिभिः । अनेकपुण्यकारित्वात् । यस्यास्तव विजृम्भितं चेष्टितं पूर्वपरिचयेन प्रतिबद्धमङ्कुरितं बीजं कारणं यत्र तत् । उद्भूतप्रचुरफलयुक्तं च भवति । तथा च त्वदुपकरणेन कृतार्थोऽस्मीति भावः । अन्यदपि कलमाद्यङ्कुररूपं विजृम्भितं पूर्वप्रतिबद्धबीजसमुद्भूतप्रचुरफलशालि भवतीति ध्वनिः ।

मदयन्तिकालवङ्गिके । इत्रं सा अज्जा सोदामिणो (१) ।

माल । बाढं । इमाए क्खु भअवदीसंबन्धपक्खवादिणीए णिब्भच्छिअ कवालकुण्डलं अत्तणो आवसधं उवणीअ भअवदीसिणेहनिव्विसेसं समासासिदह्मि । किं च केसरावलीसाहिसाणहत्थाए इह आगत्तूण सव्वे तुह्मे संधारिदा (२) । (ढ)

मदयन्तिकालवङ्गिके । सुप्पसस्रा णो कणिट्ठा भअवदी (३) । (ण)

माधवमकरन्दौ । अहो नु खलु भोः ।

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कतमाश्चर्यमायया ॥ (त)

---

(१) इयं सार्या सौदामिनी ।

(२) बाढम् । अनया खलु भगवतीसम्बन्धपक्षपातिन्या निर्भर्त्स्य कपालकुण्डलामात्मन आवसथमुपनीय भगवतीस्नेहनिर्विशेषं समाश्वासितास्मि । किं च केसरावलीसाभिज्ञानहस्तयेहागत्य सर्वे यूयं संधारिताः ।

(३) सुप्रसन्ना नः कनिष्ठा भगवती ।

---

(ढ) अत्र समासादिता प्रापिता । केसरावली वकुलमाला सैवाभिज्ञानं प्रत्ययचिह्नं हस्ते यस्याः । तथा संधारिता रक्षिता सञ्जीवनेनेति भावः ।

(ण) अत्र लज्जेष्टा कामन्दकी यथास्माकं सुप्रसन्ना तथा त्वमपि भवेत्यर्थः । सौदामिनीज्येष्ठत्वादपि भगवत्या गुरुत्वात्तस्यामत्यादरसूचनम् । यद्वा । सौदामिन्या एव भगवतीकनिष्ठत्वेनादर उक्तः ।

(त) अपीत्यादि । चिन्तामणिरपि चिन्तारूपं परिश्रममपेक्षते । अचिन्तितप्रदाने चिन्तामणित्वव्याघातादिति भावः । इदं पुनराश्चर्य

सौदा। स्वगतम्। हन्त लज्जयति मामत्यन्तसौजन्यमेषाम्। प्रकाशम्। भगवति! एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम्। (य) लेखमर्पयति।

काम। गृहीत्वा वाचयति। स्वस्त्यस्तु वः। परमेश्वरः समाज्ञापयति यथा

श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते॥ (द)

माधवमुद्दिश्य। वत्स! श्रूयताम्।

माध। श्रुतम्। इदानीं सर्वतः कृतार्थोऽस्मि। (ध)

---

मन्ये यदार्यया सौदामिन्याचिन्तितं कृतमिति। तथा चात्रानुकारोऽपि नेति भावः। अत एवात्यन्ताश्चर्यम्।

(य) नन्दने प्रहर्षो मकरन्दमदयन्तिकानुरूपघटनात्।

(द) वरगुणानाह। श्लाघ्यानामिति। यदिह त्वयि जामातर्यत्यर्थं प्रीतोऽस्मि तेनेयं मदयन्तिका तव प्रीत्यै त्वत्प्रीतिं कर्तुं भवतः प्रेयसे मित्राय सुहृदे मकरन्दायाद्यास्माभिरपि दीयते। पूर्वमनुरागेण दत्ता। प्रीतिहेतुमाह। सच्चरितानां गुणिनां च गणनीये स्थिते प्रशस्तवंशे। पाठान्तरे ख्यातवंशे। प्रत्यस्तं क्षिप्तं व्यसनमशुभं यत्र तत्र। सातिशये। प्रत्युत्पन्नमताविति पाठेऽभिनवोत्पन्नबुद्धौ प्रतिभावतीत्यर्थः।

(ध) कृतार्थता नृपनन्दनाविरोधात्।

माल । दिट्ठिआ दाणिं अवहदं हिअअस्स आसङ्का-सल्लं (१) । (न)

लव । संपदं णिरवसेसं माहवसिरिणो मालदीए अ फलिदा मणोरहा (२) । (प)

मक । पुरोऽवलोक्य । कथमवलोकिताबुद्धरक्षिते कलहंसकेन सह प्रमोदनिर्भरं नृत्यन्त्यावित एवागच्छतः ।

ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसकश्च । विविधं नृत्यं कृत्वा सर्वे उपसृत्य सप्रणामं कामन्दकीं प्रति । जअ भअवदि कज्ज-णिहाणि ! माधवं प्रति । जअ मअरन्दणन्दण माहव पुस्सचन्द ! दिट्ठिआ वड्ढसि (३) । (फ) सर्वे सस्मितं पश्यन्ति ।

लव । को वा इमस्सिं संपूरिदसव्वप्पआरमहूसवे ण परिहाससंपुण्णो होइ (४) । (ब)

---

(१) दिष्ट्येदानीमपहृतं हृदयस्याशङ्काशल्यम् ।

(२) साम्प्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च फलिता मनो-रथाः ।

(३) जय भगवति कार्यनिधाने ! जय मकरन्दनन्दन माधव पूर्णचन्द्र ! दिष्ट्या वर्धसे ।

(४) को वास्मिन् संपूरितसर्वप्रकारमहोत्सवे न परिहाससंपूर्णो भवति ।

---

(न) आशङ्का विरोधादिविषया । मर्मभेदित्वाच्छल्यम् ।

(प) अत्र श्रीमाधवस्येति प्राकृते पूर्वनिपातानियमत्वात् । फलिता मनोरथाः । एतयोरायतिशुद्धविवाहादिति भावः ।

(फ) भगवति कार्यनिधाने ! अत्र जयेति शेषः ।

(ब) अपि तु सर्वोऽपीत्यर्थः ।

काम। एवमेतत्। अस्ति वा कुतश्चिदेवं महाद्भुतं विचित्ररमणीयोज्ज्वलं महाप्रकरणम्। (भ)

सौदा। इदमत्र रमणीयतरं यदमात्ययोर्भूरिवसुदेवरतयोश्चिरात्प्रणीऽयमितरेतरापत्यसंबन्धात्मा मनोरथः।

माल। स्वगतम्। कहं विअ (१)।

माधवमकरन्दौ। सकौतुकम्। भगवति! अन्यथा वस्तुवृत्तमन्यथा वचनमार्यायाः। (म)

लव। जनान्तिकम्। भअवदि! किं पडिवज्जिदव्वं (२)। (य)

काम। स्वगतम्। संप्रति मदयन्तिकासंबन्धान्नदनोपग्रहात् प्रत्यस्तशङ्काः खलु वयम्। प्रकाशम्। वत्सौ न खल्वन्यथा वस्तुवृत्तं यतः श्रावकावस्थायामस्मत्सौदामिनीप्रत्यक्षमनयोर्वृत्तेयं प्रतिज्ञावश्यमावाभ्यामपत्यसंबन्धः कर्तव्य इति। प्रधानप्रकृतिकोपस्त्वेवं परिहृतः। (र)

माल। अहो संवरणम्। (ल)

(१) कथमिव।

(२) भगवति! किं प्रतिपत्तव्यम्।

(भ) अद्भुतमित्यादिनोपगूहनमाह। यदाह। अद्भुतस्य तु संप्राप्तिर्भवतादुपगूहनम्॥ इति। प्रकरणं मालतीमाधवाख्यम्। कथमिव। अत्र पित्राद्यनुमत्या नाहं दत्ता तत् कथमियमेवमाहेति भावः।

(म) अन्यथेति। चौरिकया हृतं वस्तु विवाहकृतम्। आर्यायाः सौदामिन्या वचनमन्यथा। अमात्यागोचरत्वार्थः।

(य) अत्र सौदामिनीवचनं किंरूपमित्याशयः।

(र) श्रावकेति पाठकदशायाम्। प्रकृतिः शिष्टः।

(ल) अहो संवरणम्। अत्र मालत्यो मालतहरिति शेषः।

माधवमकरन्दौ । आश्चर्यम् । जयन्ति महतां संस्तुतापलापिन्यः कल्याणिन्यो नीतयः । (ब)

काम । वत्स !

यत् प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशोऽपि मच्छिष्ययोः ।
निष्णातस्य समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया
संप्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥ (भ)

माध । सहर्षं प्रणमन् । भगवति ! अतःपरमपि प्रियमस्ति । तथापीदमस्तु भगवतीपादप्रसादात् ।

सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदया
राजानः परिपालयन्तु वसुधां धर्मे स्थिताः सर्वदा ।

---

(ब) कल्याणिन्यो मम संपन्ना यत इति भावः ।

(भ) यदित्यादि । यदायुष्मतोर्युवयोः कल्याणमन्योन्यलाभरूपं पूर्वं मनोरथैरेव वृतमाकाङ्क्षितमभूत्तत्पुण्यैर्मदुपक्रमैश्च निरवद्यैर्दूतीकल्पकपटैः फलितम् । मच्छिष्ययोरवलोकितासौदामिन्योः क्लेशोऽपि फलित इति । लिङ्गविपरिणामो योग्यत्वात् । क्लेशेनेति पाठे ताभ्यामेव फलितमित्यर्थः । तथा त्वत्प्रियस्य मकरन्दस्य मदयन्तिकया सह सम्बन्धोऽपि निष्णातो निःशङ्कं विहितः । नृपनन्दनावतिप्रीतौ विततौ । अत एव निःशङ्कता । अपरमतःपरं यत्प्रेयः प्रियं कर्तव्यमस्ति तदप्युच्यताम् । तत् करोमीत्यर्थः ।

(म) सन्त इत्यादि । सज्जना निरन्तरं धार्मिकाः सन्तु । अत हेतुः । विनष्टपापोद्रेकाः । तथा च सतां पुण्यसमुज्जृम्भितां पापं नश्यतामित्यर्थः । राजधर्मे रक्षणादौ सदा स्थिता नृपा भुवं रक्षन्तु । वसु धनं दधातीति वसुधेत्यनेन विपुलधनवत्त्वं भुव उक्तम् । काले वर्षादौ शस्याविरोधि सस्यकृतं व्यापकं यथा तथा वर्षणशीला मेघाः

काले संततवर्षिणो जलमुचः सन्तु स्थिरा पुण्यतो
मोदन्तां धनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः॥ (ष)

काम। एवमस्तु। इति निष्क्रान्ताः सर्वे।

मालतीमाधवे दशमोऽङ्कः। (स)

इति मालतीमाधवं नाम प्रकरणं समाप्तम्।

---

सन्तु। अकालवृष्ट्या शस्यनाशात् काल इत्युक्तम्। अत्र हेतुमाह। प्रजानां लोकानां पुण्यात्। प्रजा हृष्यन्ताम्। धनबद्धो निरन्तरकृतो बान्धवानां सम्बन्धिनां सुहृदां मित्राणां गोष्ठीषु प्रकृष्टहर्षो याभिस्ताः। तदनेन प्रशस्तिरुक्ता। काव्योपसंहारोऽप्यनेनैव कृतः। यदाह। वरदानस्य उक्तिर्या सा काव्य उपसंहृतिः॥ इति।

लब्धं दुर्लभशासनं तुरगपञ्चामश्च कैवर्तिकाद्विद्यावंशविभूषिते अपि शुभे छत्रे उभे धारिते। येनायं समभूद्द्विजातितिलकस्तत्रेश्वरः पण्डितोमीमांसकरहस्यवश्यहृदयो दातावदाताशयः॥१॥ देवेशं समसूत सोऽयममलं मीमांसकं सत्कविं सोऽप्युच्चैरजनिष्ट जैमिनिमते रामेश्वरं सद्बुधम्। सूते स्वायमपि प्रतीपजयिनं मीमांसयालंकृतं शुद्धं धीरगदाधरं कविवरं पुत्रं पवित्राशयम्॥२॥ विद्याधरं वरमजीजनदेष धीरं वीरं जनेषु जयिनं गुरुणोक्तशास्त्रे। प्रासूत सोऽयममलं गुणिनं सुपुत्रं तं रत्नपूर्वधरमेष जगद्धरं च॥३॥ येनापाठि कठोरगोतमसमवैशेषिकं खण्डनं येनाश्रावि सकोषकाव्यनिवहं तन्त्राणिनीयं मतम्। छन्दोऽलङ्करणं च भव्यभरतं येनाध्यगामि स्मृतिस्तस्यासुष्य जगद्धरस्य कवितृष्टीकेयमुज्जृम्भताम्॥४॥

(स) असूत यं रत्नधरोऽतिभव्योऽतिभव्यरूपा दमयन्तिकापि। जगद्धरं तत्कृतटिप्पणेऽङ्कः समाप्तिमापद्दशमोऽनवद्यः॥

इति श्रीमन्महोपाध्यायपण्डितराजमहाकविराजधर्माधिकारिश्रीरत्नधरपण्डितात्मजश्रीजगद्धरविरचितायां मालतीमाधवटीकायां दशमोऽङ्कः।

---